शौ.६.१३६.३ यस्ते केशोवततः समूलो यश्च वृश्च्यते।
सर्वं तं विश्वभेषज्याभि षिञ्चामि वीरुधा।।३।।

शौ.६.१३७.२ अभीशुना मेयोऽस्तु वियामेनानुमेयः।
केशो नड इव वर्धतां शीर्ष्णस्ते असितस्परि।।४।।

१.६८

शौ.६.१३८.५ यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना।
एवा भिनद्मि ते मुष्कौ तस्मै त्वामवसे हुवे।।१।।

शौ.६.१३८.१-४ त्वं वीरुधां श्रेष्ठतमाभिश्रुतास्योषधे।
सामुमद्य †पूरुषं क्लीवमोपशिनं कृधि।।२।।

क्लीवं कृध्योपशिनमथो कुरीरिणं कृधि।
उभाभ्यामस्य ग्रावभ्यामिन्द्रो भिनत्त्वाण्ड्यौ।।३।।

---

३ क उ. . . . वदतः;
ख का. . . . दृश्यते। ज. . . . वृश्च्य(→ह्य)ते।
ग वा, म. सर्वन्तं . . .;
घ का. -सि * * z ज. . . . षिंचामि * ।।

४ का. अभीषुना * स्त विजामेनानुषेय के यो ननत्वैर्वर्धतां शीर्ष्णसे . . . z३z
क वा, ज. * मेयोस्तु; ख म, ज. विजामे . . .।

१.६८.१ कग का. सा. अ.।
ख वा, ज. * भिन्दंत्य . . .।

२ ख,घ का. सा. अ.। उ. . . . शृतास्यो. . .।
ग उ. . . . (वा. साममद्य) पुरुषं; का. मामद्य पौरुषं;

३ कख का. सा. अ.। म. * कृध्वो → ध्योप . . .;
गघ का. . . . ग्रावा . . . भिनत्वाण्डौ z
उ. . . . भिनत्वांड्यौ।।

क्लीव क्लीवं त्वाकरं वध्रे वध्रिं त्वाकर-
मरसारसं त्वाकरमरसारसोसि।
कुरीरमस्य शीर्षणि कुम्भं चाधिनिदध्मसि।।४।।

ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम्।
ते ते भिनद्मि शम्मयामुष्या अधि मुष्कयोः।।५।।

१.६६

जायमानो निररुजत् सपत्नान् दोधतोभयान्।
स वै सपत्नानां सभा अवालस्यो अनाशयत्।।१।।

आरादरातिं कृणुते ऽशस्तिमप बाधते।
+अवालस्यः स यो मणिः सहस्वानभिमातिहा।।२।।

---

४ क उ. क्लीवः * . . .;
गघ का. - सुरसंत्वाकरसरसा . . .z
ङ का. सा. अ.।
च का. कुम्भंचाव . . .। वा. कुम्भञ्चा. . .।।

५ कख का सा. अ।
क वा. * * नाड्यो * ; म. * * नाड्यो → ौ *;
गघ का. * * भिनद्दि[वं]मया अमुष्या [रिमु]ष्णयोः z३z द्र. कोष्ठस्थानि मुम्बलभ्यानि।
घ वा. -मुष्याधि * ।।ऋ ५।। ६८।।
म - मुष्या अ (→ऽ) धि * ।। . . .

१.६६.१ कख का. * निनृजत् * नोदतोभयं। उ. . . सपत्लां. . .।
वा. . . भयान।
घ का. अवलिप्सो * । वा. ऽवालस्यो *।।

२ का. . . . राभिं * य शस्तूपव * । अवालिप्सस् * * * . . . भिसातिह;
ख उ. शस्तिमप * ; ग उ. अवालस्यस्य * *;

चक्षुरस्य सूत्रमासीत्तर्ष* श्रोत्रमुताभरत्।
+अवालप्स्यः स यो मणिः सहस्वानभिमातिहा।।३।।

इमं मणिमावालप्स्यं यस्मिन्नारोहयामसि।
स वै सपत्नाना दत्ते स एनं पातु विश्वतः
स एनं जरसे नयात्।।४।।

१.७०

यतो जीवेभ्यो न पितुनुपैति
यमानशे दुष्कृतं दैधिषव्यम्।
अयज्ञः प्रथमो यो विवेश
+कृच्छादिज्योतिरभ्यश्नवातै।।१।।

---

३ का. नास्ति।
उ. . . . . सीत्तद्म . . . अवालप्स्यस्य * * . . . ।।

४ क का. * . . मवालिप्सं;
कग वा. * मणिनावालप्स्यं यस्मन्ना . . . । * * सपत्नानां * ;
द्र. २-३मन्त्रयोर्मध्ये ज. ''इमंमणिमा → नावालप्स्यंयस्मिन्नारोहयामसि।'' इति लिखितमप्यपमृष्टम्।
ङ का. * * * नया z४z

१.७०.१ का. १ का. * जीवेद्यो * पितृनपैति नमानुषे * * ।
अयग्रयषप्रथमो * * कृश्छाभिर्ज्योतिरभ्यष्णुवातै।
ग वा. अजज्ञः . . .; उ. 'यो' इति नास्ति।
घ वा. कृछादिह्योतिरभ्यःश्नवातै।। म, ज. कृछादिज्यो . . .।।

नास्यौषधीष्वप्यस्ति नाप्स्वन्त-
र्नास्य सूर्यं संदृशमेति चक्षुः।
+भूमिर्द्वेष्टि चरन्तमेनं
यमानशे दुष्कृतं दैधिषव्यम्।।२।।

शो.६.११३.१क-ख तै.ब्रा.३.७.१२ ५.क-ख
कृते देवा अमृजतैन एतत्
कृत एनं मनुष्येष्वमृष्ट।
तत एतदमुया रक्ष ईर्ते*
प्रमुक्तं ज्योतेरधि दूरमेति।।३।।

शौ.६.११२.३
येभिः +पाशैर्दिधिषूपतिर्विबद्धः
परौपरावार्पितो अङ्गेअङ्गे।
वि ते चृत्यन्तां विचृतो हि सन्ति।
भ्रूणघ्नि पूषन्* दुरितानि मृष्टाः।।४।।

इति प्रथमकाण्डे चतुर्दशोऽनुवाकः

---

२ कख का. नास्यो . . . स्तुनाप्स्वन्तरंनास्य सूर्यो. . .;
क ज. नास्यो. . .;
गघ का. भूमिन्द्वेष्टितरंतमयनं यन्मानुषे * * ;
ग उ. भूमिर᳚ष्टि . . .;

३ का त्रिते * मृततनयातत्रितेनं मनुषे . . . । त्रितेतदुमैयारक्षैदते प्रमुक्तंज्योतिरधि . . .z
ग उ. * . . दमु(म. ← मू; ज. मू)या * इर्त्ते;

४ का. एभिष् . . र्दुदुषौ . . . वर्पितो * * * * विचृतां * * भृणघ्नि पूषं दुरितानसृष्टं z५z ७ , ७z
क वा, म. * . . दिंघिषु . . .; ज. * . . . दंधिषु. . .;
घ म. भृणघ्नि. . .; ज. भृशघ्नि. . .; उ. पुषं. . .;
ज. मुष्टां → : ।।

द्र. उ. मृष्ठाः > मुष्टाः?

१.७१

अग्निष्टे विश आ नयादिन्द्रो वायुर्बृहस्पतिः।
स ते धर्ममदीधरद्धातेव भुवनेभ्यः।।१।।

बृहस्पते पुरएता विशामि-
ह्यग्निः पश्चादभि नुदात्यायतीः।
वायुरेना दक्षिणतः पूषोत्तरादपानुदात्'।।२।।

आ सहस्री शतरथ आ रेवान्येतु नो विशन्।
इन्द्रो वामेन विशूपतिरा रूपेण बृहस्पतिः।।३।।

स्वर्जुष्टः कश्यपस्य स राष्ट्रे जागरत् स्वे।
ऋषभः शातमातुरः श्वेतन्तादविहृतो
देवान् यज्ञेन बोधयात्।।४।।

---

१.७१.१ का. . . . विषणायादिन्द्रोवा x हस्पतिः * * धर्ममधीदर . . . *;
द्र. घ. अक्षराणि नष्टान्यपि मुम्बलभ्यानि। वा. -द्धाते * ।।
२ का. (वृहस्पतिः - मुम्ब) पुरएता विषमग्निः . . . नुदत्यायती . . . दपानुदा;
घ उ. - रादुपानुदात्।।
३ कग का. * * वतरथ * रेवाङ्केतु * विषं ऐन्द्रो * . . . ;
क उ. * सहस्रै * ; ख ज. * . . . ते(→नो)विष(→श)न्। ग उ. * * विश्यति - ;
४ क वा, ज. सहर्जुष्टः *; म. सहजुष्टः *;
का. . . . सुराष्ट्रो * * * ऋषभ स्याथमातुदः स्वेदत्ता विहृतो * * बोधयः z १z
गघ ज. * * स्वेद(→श्वेत)न्तादविहृतो . . .;

१.७२

महाजनाः प्रथमा ये दिदिविरे
धने संहत्य महति* द्विराजे।
तेषां वरे यः प्रथमो जिगाय
तस्याहं लोकमनूद्भिदेयम्।।१।।

मैदिनस्ते वैभीदकास्तत इन्द्र उपावतु।
अघ्न्या वृक इव संरभ्य जिगीवानस्तमायसि।।२।।

उद्बाहू हिरण्यजिद् गोजिदश्वजितौ भरे।
व्याघ्रो जघ्निवाँ इवोत्तिष्ठाधि देवनात्।।३।।

शौ.७.१०६.४ आदिनवं प्रतिदीव्ने कृतेनास्माँ अभि क्षर।
पै.४.६.७. वृक्षमिवाशन्या जहि यो अस्मान् प्रतिदीव्यति।।४।।

---

१.७२.१ क उ. ... दिद्विरो;
ख का. धनय मंगत्यमहत * ; ज. * संह → गत्य ....।
उ. . . महत * ।
गघ का. एषां वर * * * तस्यां लोकमद्भिदेयं z१z
उ. . . . .मनुद्भिदेयं।।
२ कख का.. . . . वैभीतका तत्त इन्द उउपावतु।
ख म. -स्ततु * * । गघ का. * वृकैव * . . . यसी;
३ का. नास्ति।
ख म. गोजितश्व . . .। ग उ. * जघ्निवाङ् . . .;
४ का. नास्ति।
ख वा, ज. घृतेनास्माङ् * * । म. . . स्मां. . .।
ग म. . . . वाश → सन्या * ; ज. . . . वासन्या * ;
घ म, ज. * ऽस्मान् * ।।७२।।ऋ ४।।

## १.७३

शौ.१९.३.१-४ दिवस्पृथिव्याः पर्यन्तरिक्षा-
द्वनस्पतिभ्यो अध्योषधीभ्यः।
यत्रयत्र *विभृतो जातवेदा-
स्ततस्ततो जुषमाणो न एहि।।१।।

यस्ते अप्सु महिमा यो वनेषु
य ओषधीषु पशुष्वप्स्वन्तः।
अग्ने सर्वास्तन्वः सं रभस्व
ताभिर्न एहि द्रविणोदा अजस्रः*।।२।।

यस्ते देवेषु महिमा स्वर्गो
या ते *तनूः पितृष्वाविवेश।
पुष्टिर्या ते मनुष्येषु पप्रथे
ऽग्ने *तया रयिमस्मासु धेहि।।३।।

---

१.७३. का. नास्तीयं काण्डिका।

१ ख म. * अ →ऽध्यो. . .।
ग उ. * विभृथो. . .; वा. . . यातवेदा-;

२ क म. . . . अ →ऽप्सु * * * ;
ग वा. * सर्वाःस्तन्वः * भरस्व; ज. . . भरस्व;
म. . . . भरस्व →रभस्व;
घ उ. . . . * * जस्रः।।

३ ख उ. . . तनुः. . .;
ग म. . . . प्रप्रथे; घ उ. * तुया. . .।।

*श्रुतूकर्णाय कवये वेद्याय
वचोभिर्वाकैरुप याम रातिम्।
यतो भयमभयं तन्नो अस्त्व-
व देवानां यज हेडो अग्रे।।४।।

१.७४

इन्द्रो देवानां वरुणो धृतव्रतः
सोमो वीरुधां जगतः परस्पाः*।
वायुः पशूनां पशुपा जनाना-
मयं *पुरोरा नो अस्यास्तु मूर्धा।।१।।

मूर्धा दिवो अन्तरिक्षस्य मूर्धा
मूर्धा सिन्धूनामुत पर्वतानाम्।
मूर्धा विश्वस्य भुवनस्य राजा-
ऽयं पुरोरा नो अस्यास्तु मूर्धा।।२।।

मृघस्ते सम्राड् वहन्तु सर्वाँ
अमित्रान् राजा वरुणो विषूचः।
इन्द्रः *शत्रूनसुनीतिं नयाति ते
ऽयं पुरोरा नो अस्यास्तु मूर्धा।।३।।

---

४ क उ. शृतकर्ण्णाय. . .; गघ ज, म. . . ऽस्त्वव. . .।।

१.७४ का. नास्तीयं काण्डिका।

१ क म. . . . ध्रुतव्रतः;
खउ. . . परस्याः। घ उ. . . . पूरोरा. . .।।

२ ख ज. * सि → सुन्धूनामुत * ।
घ उ. अवग्रहो नास्ति।।

३ क उ. . . . सर्वाङ्;
द्र. 'अवहन्तु' इति शोधश्चिन्त्यः, तथा च हफ्मान्। पृ.२३०।
गघ म ज. * शत्रूनशनीतिं * * ऽयं।।
वा. * शत्रूनसनीतिं . . .यं।।

विशस्त्वा राजन् प्रदिशो जुषन्तां
दैवीर्विशः सुमकेताः सकेताः।
विश्वा आशा मनुष्यो वि भाह्य-
यं *पुरोरा नो अस्यास्तु मूर्धा।।४।।

१.७५

वि बाधस्व दृंहस्व व्रीडयस्वा-
धस्पदं शत्रवस्ते भवन्तु।
सपत्नसाह ऋषभो जनाषा-
डुग्रश्चेत्ता पञ्च कृष्टीर्वि राज।।१।।

शिवं क्षेत्रमनमीवन्ते अस्तू-
त्तमे नाके अधि तिष्ठेहि।
पुत्रान् भ्रातृन् बहुलान् पश्यमानो
विश्वे त्वा देवा इह धारयन्तु।।२।।

त्वष्टा रूपेण सविता सवेना-
*हर्मित्रेण वरुणेन रात्री।
इन्द्रो ज्यैष्ठ्येन ब्रह्मणायं बृहस्पति-
र्धाता त्वा धीभिरभि रक्षत्विह।।३।।

---

४ घ उ. . . . पूरोरा . . . । । . . .

१.७५ का. नास्तीयं काण्डिका।

१ क वा. * * दृंहस्य. . .;
घ वा. . . . कृष्टीर्वि * ।।

२ क वा. * . . . नमीमन्ते . . .;
ख म. . . .ऽधि. . .।
गघ वा. पुत्रान. . . धारन्तु।।

३ ख उ. -हंमित्रेण. . .।
ग म. . . जैष्ठ्येन . . .; ज . . . ज्यैष्ठेन. . .;

घास्तीष्वत इह नः शर्म यच्छ
धने वृत्राणां सङ्गथे वसूनाम्।
इहैवैधि ग्रामपतिर्जनाषाड्
विश्वैर्देवैर्गुपितो रक्षमाणः।।४।।

इति प्रथमकाण्डे पञ्चदशोऽनुवाकः

१.७६

ऋ.४.४.५क ऊर्ध्वो भव प्रति विध्याध्यस्म-
दुग्रं धनुरोजस्वाना तनुष्व।
प्रति दुर्हार्द हरसा शृणीहि
कृत्वानमग्ने अधरं कृणुष्व।।१।।

प्रत्येनं याहि प्रति भङ्ग्ध्येनं
विविध्यन्नग्ने वितरं वि भाहि।
प्रत्यङ् प्रेहि वर्त्मना जर्हृषाणः+
कृत्याकृते दुष्कृते माधि वोचः।।२।।

---

४ क वा, ज. . . यछ;
ख ज. . . संगथे *;
ग वा, ज. . . वैधिग्र्रा . .; म. . . वधिग्र्रा. . .
१.७६.१ का. कख 'दुग्रं' इति यावन्नास्ति।
क ज. ऊर्द्धो . . .; ख का. . . तरुष्व।
गघ का. * दूहांर्दहस xxx रं * ।
ग म. . . हरणा * ;
२ का. प्रत्येन * * भङ्धेनुं विविद्धंनग्ने वित xxx त्यङ् धेहि * जर्हिषाण
कृत्याकृतं दुष्कृतं माधि वोच।
क वा. . . . जाहि. . .; ख वा, म. विविध्यंनग्ने. . .।
ग वा, म. . . . जर्हिषाणः; ज. . . . जहिर्षाणः;

यो नो दुर्हार्द्धृदयेनाभिवस्ते
यश्चक्षुषा मनसा यश्च वाचा।
प्रत्यङ् दंष्ट्राभ्यामभि तं बभूषं
कृत्याकृतं दुष्कृतं निर्दहाग्ने।।३।।

पै.१.४७.३क-ख प्रतीबोधश्चतुरक्षो दिव्यो अश्मेव वीडुभित्।
प्रभञ्जञ्छत्रून् प्रति याह्यग्ने
कृत्याकृतं दुष्कृतं हृदये विध्य मर्मणि।।४।।

१.७७

शौ.७.८४.२ इन्द्र क्षत्रमभि वाममोजो-
ऋ.१०.१८०.३ ऽजायथा वृषभ[+] चर्षणीनाम्।
अपानुदो जनममित्रयन्त-
मुरुं देवेभ्यो अकृणोरु लोकम्।।१।।

---

३ का. xxx हार्द्धृदयं . . .;
ग का. प्रत्यग् xxx भ्यांमभि * * ;
उ. . . . वभौषं
द्र. बभूषं, 'वभौषं' इति द्वावेव सन्दिग्धौ। क्वस्वन्तस्य अमि व्यत्ययः?
४ का. . . . श्चतुर xxx श्मेव वीडूभृता।
प्रभञ्जनि शतृन * . . . कृत्याकृx·xहृदये मर्मणि z१z
ग म. प्रभञ्जंछत्रुन् . . .; वा. प्रभञ्जशत्रून् * जाह्यग्ने;
१.७७.१ ख उ, का. ऽ नास्ति। का. * वृ x भा * ;
उ. * वृषभश्चर्षणीनां।
गघ वा. * जन्ममित्रयन्तुमुरुन्दे . . .।।
म. * जनिममित्रयन्तुमु. . .।।
ज. * . . . . . यन्तुमु. . .।।
. का. स्वरा अङ्किताः।

शौ.७.८४.३ मृगो न भीमः कुचरो गिरिष्ठाः
ऋ.१०.१८०.२ परावत आ जगामा परस्याः।
सृकं संशाय *पविमिन्द्र तिग्मं
वि शत्रून्ताडि वि मृधो नुदस्व।।२।।

शौ.१६.४२.३ अंहोमुचे प्र भरे मनीषा-
माशुत्राण्णे सुमतिमावृणानः*।
इदमिन्द्र प्रति हव्यं गृभाय
सत्याः सन्तु यजमानस्य कामाः।।३।।
शौ.१६.४२.४ अंहोमुचं वृषभं यज्ञानां
विराजन्तं प्रथममध्वराणाम्।
अपां नपातमश्विनौ* हुवे धिय
इन्द्रेण न इन्द्रियं धत्तमोजः।।४।।

१.७८

धातारमिन्द्रं सवितारमूतये
हुवे देवाँ अमृतान् मर्त्यः सन्।
श्रेष्ठो नो वसवो धत्त धाम्नि
मा रधाम द्विषते मो अरातये।।१।।

---

२ क का. . . . गिरिष्ठा;
ख-घ का. x कं * परिमिन् x x x;
ग उ. * संसायपमिन्द्र * ;
घ. म. शत्रूंताडि * * * ।।
का. स्वरा अङ्किताः।

३ का. नष्टः।
खग उ. . . . मामृणानः। इदमिन्द्रः . . . .;

४ का. नष्टः।
ग उ. अपान्नपातमश्विनो * * ;

१.७८.१-२ का. नष्टौ मन्त्रौ।

१ ख उ. * देवाङ् . . .। वा. . . मर्त्य * ।
घ 'श्रेष्ठे' इति रनु।

अधि ब्रवीत्वधिवक्ता न इन्द्रो
अधि ब्रवीतु सविता दैव्येन।
स्वस्ति मित्रावरुणा च धत्तो
रात्रिंरात्रिमहरहश्च देवाः।।२।।

अधि ब्रवीतु पृथिवी उत द्यौ-
रधि ब्रुवन्तु मरुतः पृश्निमातरः।
यो नो द्वेष्ट्यरणो यः सनाभिः
पविरिव नेमेरधरः सो अस्तु।।३।।

कौ.८२.१३ यस्य त्रया गतमनुप्रयन्ति
देवा मनुष्याः पशवश्च सर्वे।
तन्नो देवं मनो अधि बवीतु
सुनीतिन्नो नयतु द्विषते मा रधाम।।४।।

१.७९

वर्चस्वानसि देवेषु वर्चस्वानोषधीष्वा।
अयो वर्चस्विनं कृधि यमश्वत्थाधिरोहसि।।१।

२ ख म ऽधि * * * ।
३ का. xxx ी त्त * * द्यौरधिव्रुतः पृष्णिमातरः xxxx भिः : . . नैमिरधरस् * स्तु।
घ म. . . . ऽस्तु।।
४ क का. * * गत xx प्रयन्त; वा. . . प्रयन्तु;
ग म. . . .ऽधि * ;
का. तंनो दवं * धि *; कौ. गृ. तन्नो (मूलपुस्तिकाः). . .;
घ का. पुनी xx नियतु * * रधामः z३z म . . . नयति. . . ।।
द्र. घ < सुनीतिं नो? कौ. गृ. मूलपु. सुनीतिनो; सुनोतुनो; सुनानुतिनो; सुनोनो;
१.७९.१ का. ख, घ पादौ किञ्चिन्नष्टाक्षरौ।
का. २-४ मन्त्रा नष्टाः।

यमश्वत्थो अध्यरुक्षद्राजा मनुष्यं जनम्।
इन्द्रमिव वि मृधो हनत्तस्माद्राष्ट्रमनपच्युतम्।।२।।

आरोहो नाम वा असि सहस्वानुदजायथाः।
तं त्वा सपत्नसासहमश्वत्थ बिभरादयम्।।३।।

राजा वा *असि भूतानामृषभो वीरुधां पतिः।
स नः सपत्नानश्वत्थ विषूचो व्युदा कृधि।।४।।

१.८०

संपश्यमाना अमृता य आयन्
शुद्धा योनिभ्यस्परिजायमानाः।
शिवं कृण्वाना उप जिघ्रतेमं
वीरं वीरेष्वप्या कृणुध्वम्।।१।।

शिवो वो वीर इह जातो अस्तु
शुद्धो योनिभ्यस्परिजायमानः।
अरिष्टोऽयं वर्धतां सर्वमायु-
र्वर्म ज्यायोभ्यो हविषा कृणोतु।।२।।

---

२ क म.....ऽध्यरु...; ख उ.... मनुष्यञ्जनं।
घ म....नुपच्युतं।।
३ ख वा.....दयायथाः।
ग वा.....तन्त्वा....;
म....सासा(→स)ह....;
४ क उ. * वासि....;
१.८०-८२ का. काण्डिका नष्टाः।
१.८०.१ क वा.....आयन;
२ क म.....ऽस्तु; ख वा. शुद्धा...।
ग वा, ज. 'ऽ' नास्ति।
घ वा, ज * ह्यायोभ्यो * * ।। म....कृणोमि → तु।।

जरांमृत्युं प्रेप्सतु जीव एष
नास्य क्रिमिरीशातो नोत जम्भः।
संरभ्य जीव शरदः सुवर्चा
अग्निष्टे गोपा अधिपा वसिष्ठः।।३।।

जरामृत्युर्जरायुर्जराचक्षुर्जरास्वः।
जरसे त्वा जरदष्टिं परि ददामि।।४।।

शौ.२.२८.४क द्यौष्टे पिता पृथिवी मातान्तरिक्षमाता।
शौ.१६.४४.५ग-घ वातः प्राणः सूर्यश्चक्षुर्दिवस्पयः।
सुपर्णस्त्वाभ्यव पश्यादायुषे वर्चसे
ऽयमन्नस्यान्नपतिरस्तु वीरः।।५।।

इति प्रथमकाण्डे षोडशोऽनुवाकः

१.८१

शौ.२.३५.५, यज्ञस्य चक्षुः प्रभृतिर्मुखं च
१६.५८.५ वाचा श्रोत्रेण मनसा जुहोमि।
इमं यज्ञं विततं विश्वकर्मणा
देवा यन्तु सुमनस्यमानाः।।१।।

शौ.१६.५८.६ ये देवानामृत्विजो ये च यज्ञिया
येभ्यो हव्यं क्रियते भागधेयम्।
इमं यज्ञं सह पत्नीभिरेत्य
यावन्तो देवास्तति* मादयन्ताम्।।२।।

---

३ क वा, ज. . . . . प्रेप्सन्तु;
घ म, ज. ग्निष्टे . . . .; उ. वशिष्ठः।।
५ वा. . . . .अन्तरिक्ष. . . .। घ उ. ऽ नास्ति।
१.८१ का. नास्ति।
१ क म, ज. . . . .मुखञ्च; ख ज. * * हविषा → मनसा * ।
२ क म. * . . .त्वियो. . .;
घ ज. जावन्तो. .; उ. * देवास्तिति * ।।

शौ.६.७१.२क यन्मा हुतं यदहुतमाजगाम
शौ.६.७१.२ग यस्मादन्नान्मनसोद्रारजीमि।
तै.आ.२.६.२ यद्देवानां चक्षुष आगसीन-
शौ.६.७१.२घ मग्निष्टद्धोता सुहुतं कृणोतु।।३।।

वा.स.२.११.द्रः अग्नेष्ट्वा जिह्वया हुतमिष्टं मरुद्भि-
गो.ब्रा.२.१.२.द्रः रनुमतं पितृभिः प्राश्नामि।।४।।

## १.८२

शौ.१६.२६.१-४ अग्नेः प्रजातं परि यद्धिरण्य-
ममृतं दधे अधि मर्त्येषु।
य एनद्वेद स इदेनदर्हति
जरामृत्युर्भवति यो बिभर्ति।।१।।

यद्धिरण्यं सूर्येण सुवर्णं
प्रजावन्तो मनवः पूर्व ईषिरे।
तत्त्वा चन्द्रं वर्चसा सं सृजा-
त्यायुष्मान् भवति यो बिभर्ति।।२।।

---

३ वा. जन्मा. . . .दस्मादन्ना. . . .। . . .आसि → सीनमग्नि. . .।

४ ख वा. - रनुपतं * * ।।ऋ।।८१।।

१.८२ का. नास्ति।

१ क वा. . . . जद्धिरण्य -;

ग वा. . . .नदरति; म. . . .इदेनम → दर्हति;
ज. . . .नदरहति;

२ क म. . . .सुपर्ण्णं;

ग म. तंत्वा. . .; वा, ज. तत्वा. . .;

आयुषे त्वा वर्चसे त्वौजसे च बलाय च।
यथा हिरण्यतेजसा विभासासि जनाँ अनु।।३।।

यद्वेद राजा वरुणो वेद देवो बृहस्पतिः।
इन्द्रो यद्वृत्रहा वेद तत्त आयुष्यं भुव-
तत्ते वर्चस्यं भुवत्।।४।।

## १.८३

शौ.१.३५.१-३ यदाबध्नन् दाक्षायणा हिरण्यं
शतानीकाय सुमनस्यमानाः।
तत्ते बध्नामि शतशारदाया-
युष्मान् जरदष्टिर्यथासः।।१।।

नैनं रक्षांसि न* पिशाचाः सहन्ते
देवानामोजः प्रथमजं ह्येतत्।
यो बिभर्ति दाक्षायणा हिरण्यं
स जीवेषु कृणुते दीर्घमायुः।।२।।

---

३ घ उ. * जनाङ् * ।।

४ घ वा, ज. . . . . भवत्;

१.८३.१ का. नष्टो मन्त्रः।

१ क उ. यदावध्नं * * ; .

ग वा, म. तन्ते . . .; ज. तत्ते (=न्ते?). . .;

द्र. उ. पुस्तिकासु न्त-त्तयोर्भेदः प्रायशो दुर्ग्रहः।

२ कग का. . . . दा इत्यवधिको भागो नष्टः।

क उ. . . . नः . . .; ज. . . .पिशाचा * ;

ख म. . . . . .प्रथमजं (→मं) . . .।

का. स्वरा अङ्किताः। दाक्षायणा ← दाक्षायणो?

अपां रेतो ज्योतिरोजो बलं च
वनस्पतीनामुत वीर्याणि।
इन्द्र इवेन्द्रियमव रुध्मो अस्मिन्
स दक्षमाणो बिभरद्धिरण्यम्।।३।।

शौ.१.३५.४.क-ख समानां मासामृतुभिष्ट्वाहं
संवत्सरस्य पयसा पिपर्मि।
कौ.६६.३;६७.६ इन्द्राग्नी त्वा ब्रह्मणा वावृधाना-
वायुष्मन्तमुत्तमं त्वा करातः।।४।।

१.८४

ऋ.१०.५८.४ यत्ते चतस्रः प्रदिशो मनो जगाम दूरकम्
तत्त आ वर्तयामसीह क्षयाय जीवसे।।१।।

---

३ क का. अपाँ. . .;
वा. * * ज्योतिरेतिरेजोवलञ्च; म. * * ज्योतिरो → रेजो * * ;
ज. * * ज्योतिरेजो * * ;
ग म. * इवेइन्द्रियमव * ऽस्मिन्;
गघ का. * . . . . मविरूधसोस्मिन् सुबक्ष्यमाणोबिभृद्धि . . . .;
४ कख का. समानमृतुभिष्ट्वाहं . . .पिपर्ति।
ख उ. सम्वत्स. . .।
घ का. - मायुष्मन्त . . . कराथ z
वा, ज. . . .मुत्तमन्त्वा * ।। ८३।।ऋ ४।।
१.८४.१ कख का. सा. अ.।
गघ ज. . . . वर्त्तयामसिह * * ।।

ऋ.१०.५८.३ यत्ते भूमिं चतुःस्रक्तिं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।२।।

ऋ.१०.५८.१ यत्ते यमं वैवस्वतं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।३।।

ऋ.१०.५८.५ यत्ते समुद्रमर्णवं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।४।।

ऋ.१०.५८.२ यत्ते दिवं यत् पृथिवीं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।५।।

x यत्ते वायुमन्तरिक्षं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।६।।

ऋ.१०.५८.८ यत्ते सूर्यं यदुषसं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।७।।

x यत्ते चन्द्रं नक्षत्राणि मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे।।८।।

---

२ का. . . . चतस्रक्तिं मनो z म. . . .चतुश्रक्तिं।।
वा. . . .मनो ज।। ज. गघ नास्ति।
द्र. ३-६ का. ग मनो z इति मन्त्रः समापितः।
वा. ख '* ज' इत्यत ऊह्यम्।
म,ज. क 'यत्' इति ख-घ च ऊह्यम्।
३ का. सा. अ.।
४ का. अयं पञ्चमो मन्त्रः।
५ का. षष्ठोऽयं मन्त्रः।
६ का. . . . वायुरन्तरिक्षे मनो z
द्र. चतुर्थोऽयं मन्त्रः।
७ का. . . . यदुषसे * z

ऋ.१०.५८.७　यत्त आपो यदोषधीर्मनो जगाम दूरकम्
तत्त आ वर्तयामसीह क्षयाय जोवसे। ।९। ।

ऋ.१०.५८.११　यत्ते परमां परावतं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे। ।१०। ।

१.८५

यं गृह्णन्त्यप्सरसो यं मथ्नाति बृहस्पतिः।
तं कश्यपस्य ब्रह्मणा सविता पुनरा भरत्। ।१। ।

यो भर्ताकूः परिधाय मृगेष्वपि धावति।
तं कश्यपस्य ब्रह्मणा सविता पुनरा भरत्। ।२। ।

सविताग्निर्ब्रह्म सोम इन्द्रस्त्वष्टा बृहस्पतिः।
एते मरुद्युतं त्वा ब्रह्मणा पुनरा भरन्। ।३। ।

भद्रां वाचं शिवं चक्षुर्मरुद्युताय कृण्मसि।
इमा ह्यस्मा ओषधिमा हराम्यरुन्धतीम्। ।४। ।

इति प्रथमकाण्डे सप्तदशोऽनुवाकः

---

९　　का. यत्ते आप ओष . . . z

१०　क　का. . . . . परा परावृतं;
　गघ　ज. . . . .वर्त्तया → आमसीह * * । ।८४। ।ऋ १०। ।

द्र.　　का. स्वरा अङ्किताः।

१.८५.१　क　वा. * गृह्लंत्यप्सरसो; म, ज * गृह्लंत्य. . .;
　क-ग　का. य . . . बध्नातु * । त्वं * * ;

२　　का. नास्ति।
　क　वा. * भर्त्ताकुः * ;

३　　का. . . . ताग्निब्रह्म सो. . . . * * * त्वां . . . भरं z
　ग　उ. * मरुह्यतन्त्वा;

४　　का. * वादंसिवं . . . कृण्वसि। . . माहरस्यरुन्धती z अ १७z
　ख　उ. मरुह्यतायं * ।
　गघ　ज. * . . . . ओषधीमा. . .। । ८५। ।ऋ ४। । अ१७। ।

१.८६

त्रिभ्यो रुद्रेभ्यः प्रवसन् यजामि
ज्येष्ठः कनिष्ठ उत मध्यमो यः।
ज्योतिष्काराः कवयः सोमपा ये
कण्वा अदन्तु निरितो वधेन।।१।।

इन्द्राग्नी वीतं हविषः संविदानौ
समिद्धो अग्निः समिधा गीर्भिरिन्द्रः।
नुदेथां कण्वा निरितो अराति-
माराद्रक्षांसि तपतं व्यस्मत्।।२।।

वास्तोष्पते सुप्रजसः सुवीरा
षष्ठीस्यामि शरदः शतानि।

---

१.८६.१ कख का. ** प्रवषन्त्यजामिज्येष्ठ ****।
क वा, म. ** प्रवसञ्जजा(वा. सि →)मि; ज. ** प्रवषञ्जजामि;
द्र. < प्र वषड् यजामि? द्वयोः पुस्तिकयोः (का, ज) षकारः द्रष्टव्यः। दुर्गामोहनपादैः कृतः शोधोऽस्माभिर्नान्यथा कृतः। पुस्तिकागतप्रमादानां व्याख्या दुरूहा।
ख म. . . . जः।
गघ का. ज्योतिरकारष् . . . .यजन्तिनिरतो * z
घ उ. कृण्वा. . .।।
द्र. कृण्व इति नाम्नो निरुक्तये हफ्मान् १६७५ (१६४०) पृ. २३-२४
द्र.। तृतीय मन्त्रे तु सर्वत्रैव कण्वा इति।

२ का. ** हविमस ** ग्निः *. . रिन्द्र।
** निरतो . . . तपतोष्यस्मत्।
उ. . . . सम्विदानौ . . . कृण्वा . . .।।
ख म. * ग्निः . . .।

३ क का. सुप्रजासस्;
ख का. षट्यांशानि ** । द्र. अस्माभिः गृहीतः पाठोऽपि दुर्ग्रहः। अश्नोतेर्लेटि रूपम् ?
गघ का. द्रुहास्तु * भि निर्नुदस्व शिवास्तु तस्मानुप **।

दुर्वास्तु कण्वा अभि निर्णुदस्व
सुवास्त्वस्माँ उप सं विशस्व।।३।।

या तन्तिषत् खलसद् या च गोष्ठे
या जाताः शकधूमे सभायाम्।
प्रपायां जाता उत याश्च भित्सु
ताश्चातयामः शिवता नो अस्तु।।४।।

दुह्रा च दुह्रती च स्थस्तह्रां नाम तह्रां नामधेयम्
रुद्रप्रेषिते स्तो व्ये नाम पर्यस्मान् वृङ्क्तम्।
यो नो द्वेष्टि तमृच्छतम्।।५।।

वीची नामास्यघहारा नाम।
नमस्ते अस्तु वातके ऽन्यत्रास्मदघं कृधि।।६।।

ऋ.६.७५.१२द्रः ऋजीते परि णो नमाग्रेण परि णो नम।
अश्मानं तन्वं कृण्महे अधा नः सोम मृडय।।७।।

---

ग वा. . . निर्ण्णदस्व; ज. निर्नुदस्व; म. निर्ण्णुदस्व;
घ उ. सुवास्त्वस्माङ्. . .।।
४ का. * तंदृषद * * * * * जाता * सजयां * जातः * यस्सुभिश्चु ताश्चातयसश् * * स्तु z
क उ. * * खलसह्रा * * ; ज. . . तंतिषत् . . .;
५ का. . . . . स्थ तद्वह्नाम तद्वाहं * . . स्थौ वेनामपतोस्मन् * * * * सभिघतां।
ख वा. . . . स्तह्रां * ।
घ उ. . . . वृङ्घि। उ. वा, ज. . . .तमृछतं।।
६ का. नीची . . . स्यघारा * । . . . तेस्तु * अन्यतास्म. . .।।
७ क का. रुचीते . . .; ख उ. . . . नमः।
घ का. . . मृत्रय z१z

१.८७

त्वं दर्भासि पतिरोषधीनां
*विभिन्दन् यासि कन्या इवैनाम्।
भिन्धि* शिरः *कृमेर्जायां
न्यस्य शरीरं भिन्ध्युत* भिन्ध्यस्थि*।।१।।

यः कीकसास्थ्नो*विरदात् परूंषि
यस्योद्धार उष्णिहास्ता हि वव्रे।
हनिष्यामि वां निरतः परेतं
तृणान्यत्तमवसीरिणामिव।।२।।

अयं य आस्ते जठरेष्वन्तः
कास्फीवशं निरुजं मर्त्यस्य।
हनिष्यामि वां निरतः परेतं
स्तायदेयथुः प्रति वामभुत्सि+।।३।।

---

१.८७.१　का. * दर्भोसि परितोषधीनां विभंदन् . . .यवैनां भिन्नसिरष्कृमेजायां . . . भिन्यतिभिन्यस्ति z
उ. . . . विभिंध्य . . .। भिन्धि . . . क्रमेर्जाया . . . भिन्धुत भिन्धस्थि।।
प्र.　उ. ग - पादारम्भे 'भिन्धि' इति वा, भिद्धि इति वेति निर्धारणं कष्टमेव। अक्षरलेखो विकृत इति प्रतीयते।
२ कख　का. * कीकसास्तो विरजः * . . .उष्णिशस्ता * * ।
क　उ. * . . . सास्थो . . ., वा. परुंषि;
घ　का. . . मविशीरिवामिव z
उ. . . . ण्यत्तमवसी(म.शी)रिणामिव।।
३ कख　का. यांयस्ते . . . कस्मै * निरक्षं मर्त्यम्यं;
ख　वा, ज. . . निरजं * ।
घ　का. स्तायदेतु * वामतुत्सि z
वा. . . . वामुभुछि।। म, ज. . . वामुभुच्छि।।

येनेययुस्तेन पथा परेतं
स्तायदेयथुः प्रति वामभुत्सि[+]।
ब्रह्मणा वां परितृह्य समन्तं
[+]विच्छेत्स्यामि नकुल इव सर्पम्।।४।।

## १.८८

शौ.२.३५.२क-ख यज्ञपतिमृषय एनसाहु-
निर्भक्ता भागादनु तप्यमानाः।
३ग-घ यदेनश्चकृवान् बद्ध एष
ततो विश्वकर्मन् प्र मुमुग्ध्येनम्।।१।।

३क-ख अदान्यान् सोमपान् मन्यमानो
यज्ञस्य विद्वान् समये न धीरः।
२ग-घ मघव्यान् स्तोकानप यान् रराध
सं मा तैः सृजतु विश्वकर्मा।।२।।

---

४ का. येनेतुस्तेन * * स्तायदेतु * वामतुत्सि। * वान परिदृदूध्य * वृश्चस्यामि वकुलैव * ZZ३Z
ख ३घ द्र.
घ वा. विछेस्यामि * * * ।। ऋ ४।। ८७।।
म. विच्छेष्यामि . . .।।. . .
ज. विछेष्या → त्स्यामि . . .।। . . .
१.८८.१ का. . . . मृषयेन आहुर्निर्भगता . . .माना . . . श्चकृमा . . मुमुग्ध्वेनं;
ग ज. . . .श्चक्रुवान् वर्द्ध * ; वा, म. . . वर्द्ध * ;
२ का. ड्न्यानसोमपा * * विद्वान * * * मघव्याँ . . . नुप या रराधस् * * तैरस्सृजद् * ;
क वा. अदान्यान . . .;
ग वा. * स्तोकानूप * * ; म. मघव्यां . . .; ज. . . यान * ;
घ उ. सम्मा . . .।।

३ ये भक्षयन्तो न वसून्यानृधु-
र्यानग्रयो अन्वतप्यन्त धृष्ण्या।
या तेषामवया दुरिष्ठत्
स्विष्टं तद्विश्वकर्मा कृणोतु।।३।।

४ भीमा ऋषयो नमो अस्त्वेभ्य-
श्चक्षुर्यदेषां मनसश्च संदृक्।
बृहस्पतये महिषाय दिवे
नमो विश्वकर्मन्नमस्ते पाह्यस्मान्।।४।।

१.८९

सर्वा इमा ओषधयः पृथिव्यामधि निष्ठिताः।
अथैव भद्रिके त्वमसुरेभ्यो अजायथाः।।१।।

शतं जह्यप्सरसां शतं श्वन्वतीनाम्।
गन्धर्वपत्नीनां शतस्येन्द्रो अपि कृतच्छिरः।।२।।

---

३ क का. सा. अ.। ज. . . . भसून्यानृधु-;
ख का. . . . अन्नतप्यंच * । म. . . . ऽन्वतप्यन्त. . .।
उ. . . . धृष्णिया।
ग का. * तैषामवया दुरिष्यसृसिष्टं . . .।
म, ज. . . . मुपया * ; वा. . . मुवया * ;
घ वा. स्विष्टन्त. . .।।
४ कख का. भीम * नमस्तेभ्यश्च ∴. देषा . . .।
वा. भी → भिमा * * स्त्वेभ्य- ; म. * * * ऽस्त्वेभ्य-;
१.८९.१ का. * इमां उषधयः . . . मवि * . . . भद्रके त्वाम . . अजायत।
२ का. शतमप्सरसां * सुन्वतीनां * . . . स्योन्द्रोअप कृतश्छिर;
ख-घ वा. * श्य(←श्व?)न्दतीनां। * स्यतस्येन्द्रो * कृतछिरः।।
घ म, ज. . . .ऽपि. . .।।

याः पतन्ति पुरोवातं पतन्ति रेष्मभिः सह।
पै.१.२६.४क चेतन्तीमश्मलां पलामिन्द्रो अप्सरसो हनत्।।३।।

वि वो यशो हवामहे वि वो हविष्यमोदनम्।
अपावरीरपोर्णुतास्मद् यक्ष्ममपोर्णुत
वातस्तेजन्यं यथा।।४।।

१.६०

शौ.६.१२७.१ असितस्य विद्रधस्य लोहितस्य वनस्पते।
विसल्पकस्यौषधे मोच्छिषः पिशितं चन।।१।

शौ.६.१२७.२ यत्ते बलास तिष्ठतः कक्षे मुष्कावपाकृतम्।
वेदाहं तस्य भेषजं चीपद्राममभिचक्षणम्।।२।।

शौ.७.५३.६ख; ऋ.१०.१३७.४घ निर्बलासं बलासिनो विसल्पमुत विद्रधम्।
परोपहत्यां ते वयं परा यक्ष्मं सुवामसि।।३।।

---

३ का. यष् * परो . . . रेष्वमभिस् * । चेतन्तीसश्मलांपप . . . * अरत्।
खग वा. * रेष्मभि * । . . . मस्म → श्मलां. . .;
घ म. . . . ऽप्सरसो * ।।
४ क का. * * यसोभजामहे; ख म, ज. * * हविश्वमोदनं।
गघ का. . . . पोन्नुतामस्सद्यक्ष्मसपोन्नतवातस्तेजने * z४z
घङ उ. स्मद्यक्ष्म. . .।।८६।।ऋ ४।।
१.६०.१. का. * विद्रथस्य . . . कस्योषधे मोच्छि पिशतं * ;
घ वा. मोछिषः पशितं * ।।
२ का. तत्ते * तिष्ठत कष्के . . . विदाहं तस्मिन्नि * चीपद्रावभि . .;
क म. . . . तिष्ठन्तं
३ खग का. विमलमुतविद्रत . . . हभ्यां * * ;
ग वा, ज. . . . हत्यान्ते * ;

शीर्षरोगमङ्गरोगं शुक्तिवल्गं विलोहितम्।
शौ.६.१२७.६द्र: परा ते अज्ञातं यक्ष्ममधराञ्चं सुवामसि।।४।।

इति प्रथमकाण्डेऽष्टादशोऽनुवाकः

1.६१

कौ.११५.२ पयो देवेषु पय ओषधीषु
पय आशासु पयोऽन्तरिक्षे।
तन्मे धाता सविता च धत्तां
विश्वे तद्देवा अभि सं गृणन्तु।।१।।

पयो यदप्सु पय उस्रियासु
पय *उकृथेषूत पर्वतेषु।
तन्मे धाता सविता च धत्तां
विश्वे तद्देवा अभि सं गृणन्तु।।२।।

---

४ खघ का: स्नक्तिवल्गं * * * ज्ञातं . . . धरान्तं * । ५Zअ१८Z

१.६१.१ खग का. पयाशासि . . .। . . . दाता . . .;
घ उ. . . . अधि * * ।।
का. पत्रस्य दक्षिणतः 'आशीर्वचनं ३' इति।

२ ख का. * उक्तेषुपयउत् * । उ. * उकृथेषुत *।
कौ. उत्थेषूत; उत्थेषुत; उत्थ्येषुत; उछेषुच (द्वे पुस्तिके); उत्येषूच; उछेषूच (द्वे पु.)।
'उत्सेषूत' इति पाठ एव अर्थवहस्तथा
दुर्गामोहनपादैर्ब्लूम्फिल्डपादैश्च शोधरूपेण गृहीतोऽपि अमूल एव। उ. पुस्तिकासु कृथ-छयोः कथञ्चित् सादृश्यं प्रतीयते। ज. पुस्तिकासु यथा लिखितं तद् उछेषुत इत्यपि पठितुं शक्यते। ब्लूम्फिल्डदत्तं शोधप्रमाणं 'Thus emended upon the supposition that the reading 'उछे' is Prakritic for उत्से-'' इति। अपि तु स उकृथे इत्यस्य लेखविकारोऽपि भवितुमर्हति न केवलं ध्वनिविकारः।
ग का. धन्मे * * दधत्तां; उ. गघ न स्तः पादाविमौ।

यन्मृगेषु पय आविष्टमस्ति
यदेजति पतति यत् पतत्रिषु।
तन्मे धाता सविता च धत्तां
विश्वे तद्देवा अभि सं गृणन्तु।।३।।

यानि पयांसि दिव्यार्पितानि
यान्यन्तरिक्षे बहुधा बहूनि।
तेषामीशाने वशिनी नो अद्य
प्र दत्तां द्यावापृथिवी अहृणीयमाने।।४।।

## १.६२

आगन्मेमां समितिं विश्वरूपां
यस्यां पूर्वमवदद्देव एकः।
सा नः सूक्तैर्जुजुषाणा समीच्य-
स्मान् वृणीतां सुमनस्यमाना।।१।।

इयं देवी समितिर्विश्वरूपा
शिल्पं कृण्वाना चरति जनेषु।
तां राजानः कवयो हृत्सु केतै-
रराजानश्च वदनैः पुनन्ति।।२।।

---

३ कग का. . . . पयोविष्ट . . . षदेजति. . . * * दधत्तां;
खा ज. . . चरति * * । घ उ. . . अधि . . .।।

४ ख का. . . . रिक्ष * * । ग वा. . . . वशनी * * ;
का. . . * द्य; घ का. . . अह्णिीयमानो z१z
वा, ज. . . . अहरणीयमाने ।।६१।।ऋ ४।।

१.६२.१ क वा. . . समितिंवि(→ तिर्वि) श्वरूपां;
का. . . . सुमतिं * ;
ख का. * पूर्वमनुतद्दव * ; ज. * . . . मवतद्देव * ।
गघ का. . . . समीभ्यस्सान * सुमनस्यमानाः।
उ. * * र्यजुषाणा . . . मृणीतान् * ।।

२ कख का. * सुमतिर्वि . . . * * * चनेषु।
घ वा, ज. -रराजानश्व * * ।। म. - रराजानःश्व * * ।।

अग्निं +सामित्यमुप सं सदेम
वाचा प्रियं मधुमत्या वदन्तः।
सोमो राजा वरुणो मित्रधर्मा
मयि +श्रीयमाण उप सं नमन्तु।।३।।

यो वः शुष्मो हृदये यो बाह्वोर्यश्च चक्षुषि।
जिह्वाया *अग्रे यो मन्युस्तं वो वि नयामसि।।४।।

१.६३

त्रिष्कुष्ठासि वृत्राज्जातस्त्रिर्दिवस्परि जज्ञिरे।
त्रिः सोमाज्जज्ञिषे त्वं त्रिरादित्येभ्यस्परि।।१।।

जीवलं नघारिषं जयत्कमपराजितम्।
तं त्वामृतस्येशानं राजन् कुष्ठा वदामसि।।२।।

---

३ कख का. अग्निर्यामामित्य . . . वाचप्रिये * * z
क उ. सामित्व . . .; म. . . . वदेम;
घ का. * श्रियमाणा * * * ।
उ. * श्रेयमाणमुप * * ।। वा. . . सन्नमन्तु।।
प्र. < श्रेमाणमुप ?
४ का. * * शूष्मो * * बाह्वोयश्च चक्षुषी * ग्रे यव . . . zz औं तं वो वि नयामसि z३z
ग उ. * ग्रे * . . .;
घ वा. - स्तम्वो * * ।। ऋ ४।। ६२।।
उ. काण्डिकान्ते पद्मादीनि चित्रितानि।
१.६३.१ क-ग का. . . वृत्रहाजातस्त्रिरुद्दिवस्परि * । * सोमाहजज्ञिषे *;
क वा, ज. त्रिस्कुष्ठासि . . .;
ख उ. . . . . य(←ज वा.)ज्ञिरे।
२ का. जीवलां नघारिषां जयतकामपराजितां उतामृतस्येशानो राजन * * ।
क उ. * नघार्षं ; ग वा, म. तन्त्वा . . .; घ ज. राजन. . .।।

अन्तरा द्यावापृथिवी अन्तरिक्षमिदं महत्।
तत्रामृतस्येशानं कुष्ठं देवा अबध्नत।।३।।

कुष्ठोसि देवकृतो हिमवद्भ्यो निराभृतः।
तीक्ष्णाभिरभ्रिभिः खातुः
घ तु.पै.१६.१३.३घ = शौ.६.१००.३घ स चकर्तारसं विषम्।।४।।

१.६४

यास्ते शतं धमनयः सहस्राणि च विंशतिः।
बभ्रोरश्वस्य वारेणापि नह्यामि ता अहम्।।१।।

शतस्य ते धमनीनां सहस्रस्यायुतस्य च।
दृतेः पदमिव सारथिरपि नह्यामि यद् बिलम्।।२।।

परमस्यां परावति शुष्को भण्डुश्च तिष्ठतः।
ततः शुष्कस्य शुष्मेण तिष्ठन्तु लोहिनीरपः।।३।।

---

३ गघ का. . . . स्यासिक्तं * * बध्नुत ।
ग म. तंत्वामृतस्येशानं;
४ का. . देवकृतं * निरादृत . . . रत्रभिः वातस् * जगर्थारसं * z३z
ख ज. * निराकृ → भृतः।
१.६४.१ का. सा. अ.। गघ वा. . . ऽपिह्यामि * * ।।
२ ख म, ज. . . . स्यायतस्य च।
गघ का. तृतेष्पादमव सारथिमपि निश्यासि यद्विलं;
म, ज. . . यद्विळं।।
३ कख का. * परावतश् * भ्यरुण्डश्च तिष्ठत।
ख म. * भुण्डुश्च * । ग वा . तत * *;
घ का. * . . . रप।

परि वः सिकतामयं मरुं बिले वपामसि।
दकचिदस्रवीत् पुरा तकचिदशमीदिदम्।।४।।

## १.६५

रुद्र मा त्वा जिहीडाम* सुष्टुत्या
मघवन्मा सहूत्या+।
भिषक्तमं त्वा भिषजां शृणोम्यु-
ग्रो वीराँ ईरय भेषजेभिः।।१।।

रुद्र यत्ते गुह्यं नाम यत्ते अद्धातयो विदुः।
काठ.१७.११ग-घ शिवा शरव्या या तव तया नो मृड जीवसे।।२।।

वैतान.६.७ अग्निं त्वाहुर्वैश्वानरं सदनान् प्रदहन्वगाः*।
गो.ब्रा.१.२.२१ स नो देवत्राधि ब्रूहि मा रिषामा वयं तव।।३।।

---

४ का. * विस्सिक्तामयमरुं * * । अकशदश्ववैत् * तकश्चदशमीमिदं z

१.६५.१ का. * * ताक्षीहतामुमुष्टुत्याम मघवन्ध्रामहूत्या भिषन्संताभिषजंशृणोस्यन्नोवीरांवीरे भेषजेभि z

क उ. . . . जिहिडाम *; ख उ. . . सुहत्या।

गघ उ. . . . क्तमन्त्वा * * . . . वीराङ् * भेषजी(→जे ज.)भिः।।
वा. 'शृणोमुनो' 'इरय' इति विशेषः।

२ ख-घ का. यत्तेन्धामतयोरिदुः। * शर्व्या * * * * मृळ * z
ज. यत्तो * * । . . . जा * . . .।। वा. . . जीसे।।

३ खग का. मदनानप्रहहंनगात् * ने . . .;
वा. * प्रहन्वगाः। * * . . . वृहि;

ख म, ज. * प्रदहन्वगाः। ग ज. * * देवत्राअधि *;

घ वा, म. मार्षामा . . .।। उ. . . वयन्तव।।

या देवैः प्रहितेषुः पता-
त्तपसे वा महसे वावसृष्टा।
सोमस्त्वामस्मद्यावयतु विद्वा-
ऋ.६.५२.४घ नवन्तु नः पितरो देवहूतिषु। ।४। ।

**इति प्रथमकाण्डे ऊनविंशोऽनुवाकः**

१.६६

काठ.४०.५ रायस्पोषं धेहि नो जातवेद
आ.प.श्रौ.१६.३४.४ऊर्जावदग्ने यशः सूनृतावत्।
दधाम भागं सुनवाम सोमं
यज्ञेन त्वामुप शिक्षेम शक्र। ।१। ।

वयमग्ने धनवन्तः स्यामा-
लं यज्ञायोत दक्षिणायै।
ग्रावा वदेदभि सोमस्यांशु-
नेन्द्रं शिक्षेमेन्दुना सुतेन। ।२। ।

---

४ क-ग का. * देवी प्रहितेषुतस्तपसे * महम . . . मस्मभ्यावेतु . . . .;
क ज. * दै → देवैः . . . .; ख वा . . . . वावसिष्ठा।
गघ वा. . . . मस्मह्यावयतुविद्वान्वन्तु * * * । ।ऋ ४। ।६५। ।
ग म. . . . ज्यावयतु . . .; ज. . . . ह्यावयतु . . .;
१.६६.१. ख का. . . . असु * । वा. ऊर्या . . .; उ. . . सुनृतावत्।
गघ का. * भारशृणुनाम * . . . शिक्षम शक्रं z
द्र. का. स्वरा अङ्किताः।
२ क वा, ज. . . . धनवन्त . . .; म. . . .धनमन्त. . .;
ख वा, म. . . . दक्षिणायैः। ज. . . दक्षिणायैः → यै। ।
का. . . यज्ञायुत * ।
गघ का. वधेदभि . . स्यांसूनइन्द्र सिक्षेम इन्दुना * z
ग वा. * . . . . सोमस्याशु - ;

ईशानं त्वा शुश्रुमा वयं
पुरो दधानां धनपते।
गोमदग्ने अश्ववद्भूरि पुष्टं
हिरण्यवदन्नवद्धेहि मह्यम्।।३।।

दुहां मे द्यौः पृथिवी पयो-
ऽजगरो मा सोदकोभि वि सर्पतु।
प्रजापतिना तन्वमा +प्रीणेऽरिष्टो म आत्मा।।४।।

## १.६७

अस्मां जुषध्वमसवोऽद्य
तु.ऋ.८.६७.२० मा नः पुरा जरसोऽसवो वधिष्ठ।
पाका गृणीमस्तव वीर्याय
शतं हिमानधिपतिर्न एहि।।१।।

---

३ क का, वा. ईशानन्त्वा . . . . ; म, ज. * * सुश्रुमा * ;
ख का. * तधनानां * ।
ग का. . . . पुष्टे; ज. . . . पुष्टिं;
घ वा. वदंनव. .।। म. . . वधेहि * ।। ज. . वधेद्देहि * ।।

४ कख का. द्वाहां * * * * जरारो * * भुवि * ;
क वा, ज. दुहाम्मे . .;
ख वा, म. * * सोदकोभिभि * । द्र. अवग्रहो नास्ति।
गघ का. * . . . प्रैणेरिष्टोमातुमा z१z
उ. * . . . प्रिणोरिष्टो * * ।। ६६।।ऋ ४।।
द्र. का. स्वरा अङ्किताः।

१.६७.१ का, उ. अवग्रहा न संन्ति। म. कपादः मानः इत्यवधिकः। वा, ज. पादो न चिह्नितः।
क ज. * . . ध्वम → वस . . .; वा. अस्मां → ? युषध्वम . ..;
द्र. वा. पुस्तके अनुस्वारो ङ्कारः कृत इति प्रतीयते।
ख का. * * वसवोहिष्टः? द्र. 'वधिष्ट' इति शोधः इति रनु।
घ का. * हिमा अधिपतिन्न * ।। म, ज. * हिमा अधि. . .।।
का, म, ज. < . . . हिमौं अधि. . .?

उन्मृणो अगादार्जुनमगात्
सुश्रुद्भगवो गोपाय मा।
अहेघ्यात्मानं परि ददे
सूर्यप्राणो भवामि।।२।।

नि मृणो अगादासितमगात्
सुश्रुद्भगवो गोपाय मा।
रात्रयेघ्यात्मानं परि ददे
ऽग्निप्राणो भवामि।।३।।

अनाभूरस्यनाभोऽनाभुवो भूयास्म।
स यत्र त्वं प्रजापते त्रिरेकस्याह्नः प्रजाः संपश्यसि।
तत्र मामपि सं पश्यानष्टपशुर्भुवनस्य गोपाः।।४।।

१.९८

यथा मृगं रोपयसि तिरश्चर्मातिविध्यसि।
एवा त्वमुग्र ओषधेऽमुं रोपये मामभि।।१।।

---

२ क का. * गादा . . . ; मा. . . .ऽगादा. . . .;
ख का. सुषद्भोगो * * । म. सुशृद्भगवो * * ।
२ गघ का. . . .भ्यातुमानं * दधे सूर्यष्प्राणो * ;
३ का. न्यन्मृणोन्मृणोगादा . . . सुषद्भगो * * । * भ्यातुमानं * * दधे अग्निः . . .*;
क म. * * ऽगादा . . .; घ वा. अग्नि . . .।।
४ का. अनातुरस्यनाभगोनाभगोभूयस्स। * * द्वयं * . . स्याह्नाः * सस्पश्यसि * मामभि * . . निष्ट . . . गोपा Z२Z
क उ. ऽनास्ति। घ म. . . सम्पश्यसि।
१.९८.१ का. * मृगो गोपयसि तिरश्चिन्मातुविन्ध्यसि। यवात्वमुग्रोषधे असु * सासुभगे। द्र. अधः भे इति।
घ वा. ऽ नास्ति।

बन्धश्चेमा उपधिश्च मधुमन्नौ समञ्जनम्।
द्वारौ भगस्येमा *ऊरू मृगस्तुष्यन्निवा चर।।२।।
अभि त्वाधाममिधिना जालेनेव महाजषम्।
शौ.३.२५.५गघ यथा मम क्रतावसो मम चित्ते सचावहै।।३।।
अहं वै त्वदुत्तरास्यध* +त्वमुपधिर्मम।
सं नौ बध्नामि संवन्धनेन यथासावाविचर्त्या-
वा मृत्योरा परावतः।।४।।

१.६६

अपोच्छन्ती दुःष्वप्न्यमप दुर्हार्दमुच्छतम्*।
अपोष्टं सर्वं क्षेत्रियं सर्वाश्च यातुधान्यः।।१।।
शौ.२.८.१क-ख
६.१२१.३क-ख उदगातां भगवती विचृतौ नाम तारके।
२.८.१ग वि क्षेत्रियस्य मुञ्चतां सं ग्रन्थिं हृदयस्य च।।२।।
३.७.४ग

---

२ का. बन्धुमेमामपधुश्च मधुमन्नो समंजनं। द्वारो . . तरौ मृगस्यष्यन्निवाचरः;
गघ उ. . . . ऊरु मृगस्तुष्यंनि . . .।।
३ का. * . . . भिदना . . . महाझकं।
* सम . . . समश्चित्ते सचावहि।
ख ज. . . महाजषं (→सं)।
४ का. अहैतदुत्तरा अस्मथ त्वसु(मु-मु.)प. . .।
स नो * * . . . वाविवृत्यावा मृत्योरपरावता। ३z
कख वा. * * तदुत्तरास्मधत् → त्तमुप . . .।
म, ज. * * . . . रास्मधत्तमु . . .।
ग उ. सन्नौ * * (म. सम्बन्धनेन);
१.६६.१ कख का. अपोच्छेन्ती दुप्स x प्रमपि दृहान्दमुत्सतं
क उ. अपोत्सन्ती; वा. दुःस्वप्न्य-; ख उ. . . मुत्सतं।
ग वा, ज. * * क्षेत्रियं → त्रयं; म. . . . क्षेत्रयं;
२ क का. उदगातं *; ग का. सुक्षत्रियस्य *; उ. * क्षेत्रयस्य *;
घ का. * ग्रन्थ्य * * z

नमो अस्तु वरत्राभ्यो नम ईषायुगेभ्यः+।
मृगायारण्ये तिष्ठते क्षेत्रियायाकरं नमः। ।३। ।

आखोरिदं क्षैत्रपत्यं मनोश्च मानवस्य च।
मनः सर्वस्य पश्यत इह भूयः स्यादिति। ।४। ।

## १.१००

उदेहि देवि कन्य आचिता वसुना सह।
शौ.१९.४४.६ग-घ न त्वा तरन्त्योषधयो बाह्याः पर्वतीया उत। ।१। ।

यथा त्वा देव्योषधे सर्वः कामयते जनः।
एवा भगस्य नो धेहि देवेभ्य इवामृतं परि। ।२। ।

उत्सक्तपत्न्योषध आवतंकरणीदसि।
यदेषि यन्निषीदसि तत्र त्वाहं समग्रभ-
पै.७.१.१२घ मश्वमिवाश्वाभिधान्या। ।३। ।

---

३ कख का. * स्तु वृत्रहाभ्यो नमैषा . . .; वा. * स्तु . . .। म. * ऽस्तु . . .।
ख उ. * ईशा . . .। घ ज. . . . . करन्नमः। ।
४ क का. आषोहृदं क्षेत्रपत्यं; वा. . . . क्षै → क्षेत्रपत्यं;
गघ का. * सर्वस्या * * * भूयम्यादिदिति z४z
ख ज. मनोष्म → श्च * * । घ म. * भूय. . .। । . . .
१.१००.१ का. . . देवकन्यायाजता * * । * * चरन्त्यो . . . * पर्वता * z
क वा. . . . कण्य → न्य; म. . . . देव *;
ग उ * * तरंत्यो . . .;
२ का. केवलं 'यथा त्वा' चतुर्थपादस्य 'परि' इति च।
क वा. * * देव्योष; ज. * ते → त्वा . . .;
३ ख-घ का. मावतंक. . . .। यदेषु . . . * . . . समभमश्व. . .।
ख ज. . . दसी।
ग म, ज. . .यंनिषीदसि; वा. . . यंनिषीदति;

यथा कुमारस्तरुणो मातरं प्रतिनन्दति।
एवास्मान् प्रति नन्दतु यां वयं कामयामहे।।४।।

इति प्रथमकाण्डे विंशोऽनुवाकः

१.१०१

त्रीणि पात्राणि प्रथमान्यासन्+
तानि सत्यमुत भूतं ततक्ष।
ऋतस्य माने अधि या ध्रुवाणि
येभिर्देवा अमृतं भक्षयन्ति।।१।।

स्वर्यद्देवा विभजन्त आयं
त्रीणि पात्राणि प्रथमान्यासन्।
आदित्या एकं वसवो द्वितीयं
तृतीयं रुद्रा अधि सं बभूवुः।।२।।

धाता वेद सवितैतानि सर्वा
बृहस्पतिः प्रथमो देवो अग्निः।
येभिरिन्द्रो जठरमापृणीते
त्रिभिः पात्रैरुत विश्वे च देवाः।।३।।

---

४ क-ख का. * . . . . स्तरणो मातुरं * . . . . नन्दन्तु;

१.१०१.१ का. * * . . . न्यामत् . . तदक्ष। * * धिया ध्रुवाण्येभि . . . मृतं * ।
क ज. . . . . न्यासं; घ वा . . . . यन्ती → न्ति।।

२ क-ख का . . . . विभजन्तायं * * . . न्यासम्;
म. . . विभयन्त . . . ; घ वा, म. . . अभि * * ।।

३ क उ. * * सवितौ * सर्वे; ख वा. * * * ग्निः। म. . . ऽग्निः।
ग का. एभि . . जजठरोमा . . .;

ऊर्ध्वा तिष्ठन्ति न नु जिह्मा भवन्ति
नोनं बभूव कतमश्चनैषाम्।
देवानां पात्राणि निहितानि यानि
तानि सं पाति य ऋतस्य गोपाः। ।४। ।

१.१०२

शौ.७.८०.४ पौर्णमासी प्रथमा यज्ञियासी-
दह्नां रात्रीणामतिशर्वरेषु+।
ये त्वां यज्ञैर्यज्ञेन बोधयन्त्य-
मी ते नाकं सुकृतः परेताः। ।१। ।

शौ.७.८०.१ पूर्णा पश्चादुत पूर्णा पुरस्तात्
पौर्णमासी मध्यत उज्जिगाय।
तस्यां देवैः संवसन्तो महित्वा
नाकस्य पृष्ठे +समिषा मदेम। ।२। ।

---

४ का. . . .स्तिष्ठन्ति . . जिह्म * . . . . कतमश्चनैषां . . . .
निहतानि * * * पात्वरितस्यगोपा z१z
क वा. ऊर्द्धवातिष्ठन्ति . . .;
म. ऊर्द्धवातिष्ठन्ति . . .; ज. ऊर्दूध्वास्ति . . .
ग वा. . . .जानि;
घ वा. . .गोपः। ।ऋ४। । १०१। । म. * सम्पाति . . .
। ।१०१। ।ऋ। ।
१.१०२.१ का. पुर्णमासि * . . . दह्ना . . . मुतशवरिषु * * यज्ञियैर्यज्ञैत्वोधयन्तमै
* * * * zz
कख वा. . . यज्ञयादह्नां . . .।
ख उ. . . . सर्वरिषु।
ग वा. . . वोयन्त्य-; ज. * * . . . यंज्ञियेन . . .;
घ वा, म. . . . नाकन् * * । । ज. . . नाकन * * । ।
२ का. पूर्ण. . . तस्यं . . . ममिषा * z स्वराः अङ्किताः।
उ. . . . समृषा * । ।

चतस्रो दिशः प्रदिशो ह पञ्च
षडुर्वीराहू रजसो विमानीः।
द्वादशर्तव आर्तवाश्च ते
मा प्याययन्तु भुवनस्य गोपाः।।३।।

शौ.७.८१.६; यथादित्या अंशुमाप्याययन्ति
मै.४.६.२७:१२.२; यमक्षितमक्षितये पिबन्ति
तै.२.४.१४.१ एवा मामिन्द्रो वरुणो बृहस्पति-
काठ.१०.१२ रा प्याययन्तु भुवनस्य गोपाः।।४।।

## १.१०३

शौ.७.७६.३ आगन् रात्री संगमनी वसूनां
विश्वं पुष्टं वस्वावेशयन्ती।
अमावास्यायै हविषा विधेमो-
र्जं वसाना पयसा न आगन्।।१।।

---

३ क॒ग का. . . ** . . . राहु * विमाना। द्वादशान्तर्धा ऋतवश्च* ;
ख उ. . . . राहु ** ।
ग म. द्वादशर्त्तवार्त्तवाश्च * ;
ज. द्वादशर्त्तवा(+आ)र्त्तवाश्च * ;
द्र. वा. ते इति ४र्थपादे।
घ उ. *प्यायन्तु ** ।।
४ का. . . दित्यां आप्यायंयन्ति; उ. . . माप्यायन्ति;
ख का. यथाक्षितमक्षितयष् * ।
उ. घ. . . . प्यायन्तु ** ।। ॠ ४।।१०२।।
१.१०३.१ क का. सा. अ.। वा. . . . वसुनां;
ख उ ** विश्वावेशयन्ती। का. . . यन्ति।
का. अमावस्यां * . . . र्जीं वसानष् * नागं z

मा त्वा रात्रि पुरो दधन् मोत पश्चा विभावरि।
आयुष्मन्तः सुप्रजसः सुवीरा
ऋध्यास्म त्वा सुवर्चसः।।२।।

यस्य देवस्य सुमती
सुनीतिरेति सुमतिं गृहाणाम्।
शौ.३.१०.७कख　आ मा पुष्टं च पोष्यं च
रात्र्या देवानां सुमतौ स्याम।।३।।

शौ.७.७६.२　अहमेवास्म्यमावास्या
मा विशन्ति सुकृतो *मयीमे।
मयि देवा उभये साध्या-
श्चेन्द्रज्येष्ठाः समगच्छन्त* सर्वे।।४।।

१.१०४

शौ.३.१०.१-४
मै.२.१३.१०;
काठ.३९.१०;　प्रथमा ह व्युवास सा धेनुरभवद्यमे।
तै.४.३.११.५　सा नः पयस्वती दुहा उत्तरामुत्तरां समाम्।।१।।

---

२ कख　का. * * * * दमं सोत पश्चाद् * ।
उ. * * रात्री * * ;
घ का. हृद्यास्त * * ;

३ कख　का. * * सुमुतौसुमतिं * ;
ग　वा. . . पौस्य → ष्यञ्च; म. . . पोष्यञ्च;
ज. . . . पुष्टञ्च पौष्यञ्च; का. . . . पुष्टिं * * * ;
घ　का. . . . स्यामा।

४　क　उ. . . . मेवास्यमा . . .;
ख　का. * वसन्तुसुकृतौ मैमे; वा. * विसन्ति . . .।
ज. * वसन्ती . . .। उ. . . . मयीवे।
घ　का. . . गच्छन्तु * Z३Z उ. . . . गछन्तु * ।।१०३।।ऋ ४।।

१.१०४.१　क　का. सा. अ.।

आप.म.२.२०.२७ यां देवाः प्रतिनन्दन्ति धेनुं रात्रिमुपायतीः।
छान्दो. ब्रा.
२.२.१४ द्रः संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली।।२।।

काठ.४०.२ संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते
तेषामायुष्मतीं प्रजां रायस्पोषेण सं सृज।।३।।

मै.२.१३.१०; इयमेव सा या प्रथमा व्यौच्छत्
काठ. ३९.१०; साप्स्वन्तरासु चरति प्रविष्टा।
तै.४.३.११.१ वधूर्जिगाय नवगज्जनित्री
त्रय एनां महिमानः सचन्ते।।४।।

१.१०५

शौ.३.१०.५. वानस्पत्या ग्रावाणो घोषमक्रत
हविष्कृण्वन्तः परिवत्सरीणम्।
एकाष्टके सुप्रजसः सुवीरा
वयं स्याम पतयो रयीणाम्।।१।।

---

२ क उ. **. . . नन्दति;
ख का. धेनु . . . पायती; ज. . . यती (+:)।
ग म. सम्वत्सरस्य **; वा. संवत्सरया *;
घ का. . . . सुमङ्गला z२z
३ क वा, म. सम्वत्सरस्य . . .; ख का. ** रात्रिमुपा . . .
घ का. रायस्पोषण ** ।
४ का. इयमव **** साप्स्वन्तश्च . . . ।
वधूर्मिमाय . . . नित्रीं त्रित *** z४z
कख वा. इयवे → मेव *** व्यौछत् साप्स्वंतरासु ** ।
द्र. का. स्वरा अङ्किताः। वामतः अष्टका ऋ१ इति।
१.१०५.१ कख का. सा. अ.। ग का. एकाष्टकायी हविषा विधेम;

९ इडायास्पदं घृतवत् सरीसृपं
जातवेदः प्रति हव्या गृभाय।
ये ग्राम्याः पशवो विश्वरूपा-
स्तेषां सप्तानां मयि रन्तिरस्तु।।२।।

११ इडया जुह्वतो हविर्देवान् घृतवता यजे।
+गृहानलुभ्यतो वयं वृषदो मोप गोमतः।।३।।

१० यज ऋतुभ्य* आर्तवेभ्यो माद्भ्यः संवत्सराय च।
धात्रे विधर्त्रे समृधे भूतस्य पतये यजे*।।४।।

## १.१०६

शौ.३.१०.८कख आयमगन् संवत्सरः पतिरेकाष्टके तव।
तस्मै देवाय हविषा विधेम
स उ नः शर्म यच्छतु।।१।।

---

२ घ का. सा. अ.। वा. .... रन्तुरस्तु।।
३ का. . . . युजे गुहानड्डुभ्यतो * दृषदेसोप गोमत।
ग म,ज. गृहानूलभ्यतो *; वा. गृहानलभ्यतो *;
घ म. . . . गोम → पतः।।
४ कख का. यजुर्ऋत्विग्भ्य * माभ्यस् * *।
वा. यजुर्त्तभ्य (म. यजुर्त्तुभ्य) * * सम्वत्सराय *।
ज. यजर्त्तुभ्य. . .।
गघ उ. * विधर्त्ते . . . यज।। . . . घ का. * * यज z५z
द्र. अत्र उत्कलीयलेखोऽपि वैकल्यं गतः। का. प्रथम-
मन्त्रद्वयमङ्कितस्वरम्।
१.१०६.१ क का. आयमगं *;
गघ का. * जुहोमि। * घृतेन शी * * *।
ग ज. * * * जुहोमि; घ वा, म . . . यछ्तु।।

एकाष्टकायै हविषा विधेम
यर्तून् पञ्चानु प्रविष्य।
सस्येन सस्यमुपसंचरन्तो-
ऽरिष्टास ऋतुनर्तुमुप सं चरेम।।२।।

शौ. ६.५५.२ द्र: वसन्तो ग्रीष्मो मधुमन्त वर्षाः
काठ. १३.१५ द्र: शरद्धेमन्त ऋतवो नो जुषन्ताम्।
आ नो गोषु भजन्त्वा प्रजायां
सुशर्मण्येषां त्रिवरूथे स्याम।।३।।

शौ.३.१०.१२ एकाष्टका तपसा तप्यमाना
तै.४.३.११.३; जजान गर्भं महिमानमिन्द्रम्।
काठ.३९.१० तेन देवा व्यषहन्त' शत्रून्
हन्तासुराणामभवच्छचीपतिः।।४।।

---

२ का. एकाष्टकाय * विधेमो ऋतूर्पचांन * ।
. . . संचरन्तं अरिष्टास्यन्तुमुप * चरेमा।
ग उ. सस्येम . . .;
घ वा. - रिष्टासर्त्तुनर्त्तुनुप * * ।।
म. - रिष्टास ऋतूनत्तु . . .।। उ. ऽ नास्ति;

३ का. * ग्रीष्मौमधुमन्त वर्षाश्;
वा, ज. मधुमन्त वर्षा; म. मधुमन्ति? वर्षा;
द्र. म. 'न्त' इत्यक्षरस्य नकारशिरसि अर्धवृत्तस्यादौ
भङ्गिविशेषदर्शनात् 'न्ति' इति पाठः गृहीतः।
का. ३, ४ मन्त्रौ अङ्कितस्वरौ।
खग का. . . द्धेमह. . .। . . . विशत्वा *; वा. . . जुषन्ता। . . .
भजंत्वा *;
घ का. शिशुर्मन्येषां . . .। z३z वा, ज. . . त्रिवरुथे * ।।

४ क का. सा. अ.। ख म, ज. यजान. . .।
ग का. * * विषहन्त शतृन्; वा, म. . . व्यषहन्तु *;
ज. . . व्यशहन्तु *; घ वा, ज. . . वतूशचीपतिः।।

शौ.३.१०.७; पूर्णा दर्वे परा पत सुपूर्णा पुनरा पत।
वा.३.४९क-ख सर्वान् यज्ञान् संपृञ्चतीषमूर्जं न आ भर।।५।।
द्र॰

इषमूर्जं न आभृत्येडया पशुभिः सह।
सरस्वति त्वमस्मासु रायस्पोषं नि यच्छ।।६।।

इति प्रथमकाण्डे एकविंशोऽनुवाकः

## १.१०७

ऋ.१०.१६८.१ वातस्य नु महिमा रथस्या-
रुजन्नेति स्तनयन्नस्य घोषः।
दिवस्पृगेत्यरुणानि कृण्व-
न्नथो एति पृथिव्या रेणुमस्यन्।।१।।

---

५ क का. * द्रव्ये * *; म, वा. * दर्भे * *; ज. . दर्वे → दर्भे. . .;
ख-घ का. सा. अ.।
गघ वा. सर्वां * संपृञ्चत्वीष. . .।।
ज. * * संपृञ्चत्रीष . . .।।
६ कख का. . . . नाभृत्य इळया * *;
ग वा. * त्वमास्मासु ; घ. वा, ज. . . यछ।।१०६।।६।।
द्र. ज. ४घ शचीपतिः इत्यतः ५घ भरेत्यतश्च एको दण्डः; ५ख पतेत्यतः द्वौ। एवं पञ्च मन्त्राः। पत्रं भग्नं येन संख्या निर्दिष्टापि लुप्ता।
१.१०७.१ का. वातस्या . . . रथस्यभजयन्नेति . . . घोषा।
. . . ग्येत्यरु . . . एभि . . . z मन्त्रः अङ्कितस्वरः।
क वा. * * * ऋतस्या-;
ख वा, ज. रुजंनेति स्तनयंनस्य(=उ) * ।
गघ वा, म. . . . कृण्वंनथो. . .।। ग म. दिवं → वस्पृगे . . .;

ऋ.१०.१६८.२ सं प्रेरते अनु वातस्य विष्ठा-
मैनं गच्छन्ति समनेव योषाः।
ताभिर्विद्वान् सरथं देव ईयते
पतिर्विश्वस्य भुवनस्य गोपाः।।२।।

ऋ.१०.१६८.४ आत्मा देवानां भुवनस्य गोपा
यथावशं चरति देव एषः।
घोष इदस्य श्रूयते न रूपं
तस्मै देवाय हविषा विधेम।।३।।

ऋ.१०.१६८.३ अन्तरिक्षे पथिभिरीयमानो
गो.ब्रा.१.२.६ न नि विशते[1] कतमच्चनाहः।
अपां योनिः प्रथमजा ऋतस्य
क्व स्विज्ज्ञातः कुत आ बभूव।।४।।

अन्तरिक्षे पतयन्तं वात त्वामाशुमाशुभिः।
शौ.१०.८.१४ग-घ पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः।।५।।

---

२ क म. * प्रेरतो * मातस्य . . .; ज. . . वा → मातस्य. . .;
ख का. नैनं * सुमनेव योषा।
वा, ज. . . गछन्ति; म. जोषाः।
३ का. आत्मावै . . . गोप . . . एकः घोषैदस्य * * * नस्मै वाताय
. . . विधेमा।
४ क वा, ग . . . . रीयमाने;
ख का. * न विशति कतमश्च. .। म. * न(=नि?) मिषते. . .।
वा, ज. . . * * मिषते. .। ग ज. * * प्रथमया * ।
घ का. * सिज्ञातष्कुत्र * * ।
५ ख का. . . . माशुभि। उ. . . शुभाशुभिः।

उपत्रिकं संचविचं त्रियमं चतुरेकजम्।
तं मातरिश्वानं देवं दिवो देवा अवासृजन्।।६।।

१.१०८

शौ.१९.२०.१-४ अप न्यधुः पौरुषेयं वधं म-
दिन्द्राग्नी धाता सविता बृहस्पतिः।
सोमो राजा वरुणो अश्विना यमः
पूषास्मान् परि पातु मृत्योः।।१।।

यानि चकार भुवनस्य यस्पतिः
प्रजापतिर्मातरिश्वा प्रजाभ्यः।
प्रदिशो यानि वसते दिशश्च
तानि मे वर्माणि बहुलानि सन्तु।।२।।

यत्तनुष्वनह्यन्त* देवा द्विराजयोधिनः।
इन्द्रो यश्चक्रे वर्म तदस्मान् पातु विश्वतः।।३।।

---

६ कख * संचविच त्रत्रिर्येमं . . .।
उ. उपतृकं . . .; वा, म. सञ्चविचं;
ख म. त्रिर्जमं. . ग उ. तम्मा . .; घ का * * वासृजं z१z
१.१०८.१ का. अङ्कितस्वरो मन्त्रः।
क ज. अपं * . . .;
का. अपांनिदुष् * * स-;
ग म. . . ऽश्विना *;
२ का. सा. अ.। स्वरा अङ्किताः।
३ का. यत्तनुष्वनह्यन्ति * विराजयोधिना।
* यश्चक्रे * तस्मात् * * ।
क वा, म. . . नह्यन्तु; ज. . . नश्य → ह्यन्तु;
ग ज. तदस्मात् → न् * * ।।

वर्म मे द्यावापृथिवी *वर्माहर्वर्म सूर्यः।
वर्म मे विश्वे देवाः क्रन्मा मा प्रापत् प्रतीचिका।।४।।

१.१०९

शौ.७.४२.१; सोमारुद्रा वि बृहतं विषूची-
ऋ.६.७४.२ ममीवा या नो गयमाविवेश।
बाधेथां द्वेषो निर्ऋतिं पराचैः
कृतं चिदेनः प्र मुमुक्तमस्मत्।।१।।

शौ.५.६.५ख-ग तिग्मायुधौ तिग्महेती सुशेवौ
ऋ.६.७४.४ सोमारुद्राविह सु मृडतं नः।
शौ.५.६.८.द्रः प्र णो मुञ्चतं दुरितादवद्याद्
गोपायतं नः सुमनस्यमानौ।।२।।

ऋ.६.७४.१द्रः सोमारुद्रा धारयेथां वसुवीर्यं
प्र वामिष्ट्वा वरमश्नवातै।
युवं नो धत्तमिह भेषजानि
प्र यच्छतं वृषणा जेत्वानि।।३।।

---

४ कख का. * से * वर्माहु . . . * । म, ज. . . . वर्माहुर्वर्म्म * ।
वा. . . . वमाह . . . * ।
गघ का. सा. अ.।
१.१०९.१क,गघ का. सा.अ.।
घ ज. * चिदेन * . . . .।।
२ कख का. सा. अ.। ख वा; म. . . मृडतन्नः।
ग का. * * * दुरितावद्याद्;
घ उ. गोपायतन्नः * ।। का. . . . मानीः z
३ कख का. . . . येथामसुर्यं जिवासिष्ट्वावरमष्णुवातै।
क वा. * * वसुवी;
ग उ. युवन्नो. . .;
घ का. . . जेत्तानि z उ. * यछतं * * (ज. येत्वानि)।।

शौ.७.४२.२ सोमारुद्रा युवमस्मास्वन्त-
ऋ.६.७४.३ ⁺स्तनूषु विश्वा भेषजानि धत्तम्।
अव स्यतं मुञ्चतं किञ्चिदेनो
अङ्गेषु बद्धमुत यद् दृषत्ते।।४।।

१.११०

शौ.१९.५८.१-४ घृतस्य जूतिः समना सदेवाः
संवत्सरं हविषा वर्धयन्ती।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्व-
च्छिन्ना वयमायुषो* वर्चसः।।१।।

उपास्मान् प्राणो ह्वयता-
मुप वयं प्राणं हवामहे।
वर्चो जग्राह पृथिव्यन्तरिक्षं
वर्चः सोमो बृहस्पतिर्विधर्ता।।२।।

---

४ ख का. तनूंषि विश्व * * । उ. तनुषु * * * ।
ग का. * * मुञ्चते किं चतेनो;
घ म. ऽङ्गेषु. . .।। वा. . . यद्रुशत्वि।। १०६।।ऋ४।।
म, ज. . . यदृशत्वि।।१०६।।ऋ ४।।
द्र. घ < यद् धृषद्वि* ?
का. काण्डिका अङ्कितस्वरा।
१.११०.१ क का. * यूतिस्सुमनास्सुदेवास्; वा. * यूतिः. . .;
ख वा. * * र्द्धयन्ती।
गघ का. . . . प्राण अच्छिन्नो * स्त्वच्छिन्नाह्वयमायुषावर्चसा z
उ. * * * च्छिन्नो. . .;
म. . . . ऽस्त्वच्छिन्ना. . .; वा, ज. . . छिन्ना. . .;
उ. . . . मायुषे * ।।
२ कख का. सा. अ.। उ. . . . ह्वयथामुप . . .।
गघ का. * * पृथिव्यान्त . . . र्बिभर्ति।

वर्चसो द्यावापृथिवी संग्रहणी बभूवतु-
र्वर्चो गृहीत्वा पृथिवीमनु सं चरेम।
यशसा गावो गोपतिमुप तिष्ठन्त्यायती-
र्यशो गृहीत्वा पृथिवीमनु सं चरेम।।३।।

ऋ.१०.१०१.८ व्रजं कृणुध्वं स हि वो नृपाणो
वर्म सीव्यध्वं बहुला पृथूनि।
पुरः कृणुध्वमयासीरधृष्टा
मा वः सुस्रोच्चमसो दृंहता तम्।।४।।

१.१११

शौ.६.९१.२; न्यग्वातो वाति न्यक्तपति सूर्यः।
ऋ.१०.६०.११ नीचीनमघ्न्या दुहे न्यग् भवतु ते विषम्।।१।।

---

३ कख का. वर्चसा द्यावृपृथिवी संग्राणी बभूवथु। वर्चो . . .।
द्र. का. द्यावापृथिवी इति अन्तोदात्तम्। द्या इति स्वरहीनम्।
अशुद्धत्वेऽपि आमन्त्रितस्वराभावदर्शनाद् बभूवतुरिति
प्रथमपुरुषान्त उत्कलीयः पाठ एवात्र रक्षितः।
गघ का. * * गोपतेसुपतितिष्ठन्त्या. . .।
वा, ज. * . . . तिष्ठंत्वायती - ; म. . . तिष्ठन्त्वायती-;
४ कख का. * कृण्वध्वं . . . सीद्यध्वं. . .।
उ. पृथुनि।
४ गघ का. पुनष्कृणुध्वसायसीरसृष्ट सा * सुश्रोश्चमसो * तिं z४z
ग वा. * कृणुध्वंमयासी . . .;
ग उ. . . . दृंहजा * ।। ऋ ४।। ११०।।
द्र. ग आयसीरिति ऋ.। अथर्ववेदे वैकल्यं दृश्यते।
उ. अयासीः < अयास्य + ई? पाठः सन्दिग्धः।
आयसीरिति दुर्गामोहनपादाः। का. काण्डिका अङ्कितस्वरा।
१.१११.१ कग का. सा. अ.।
ग म, ज. . म → वघ्न्या * ;

शौ.६.५२.२; ऋ.१.१९१.४द्र. नि गावो गोष्ठे असदन्नि वत्सा अधि तन्त्याम्⁺ ।
*न्यूर्मयो नदीनां नि शुष्मा अरसानाम् ।।२।।

अहीनामहिकानां सं हि शीर्षाण्यग्रभम् ।
द्रः.पै.१६.१६.६ग-घ शौ.१०.४.१६ग-घ हृदं सहस्रबाहुः परेत्य व्यनिजमहेर्विषम् ।।३।।

शौ.७.५०.१ द्रः तुराणामतुराणां *विशामुरुक्षितामुत ।
कृणोमि तुभ्यं भेषजमाहेयमरसं विषम् ।।४।।

## १.११२

इमा ऊरू सवासिनौ वर्चसाञ्जे अहं मम ।
नाम ह्येनयोर्वेद यथा न बहवो विदुः ।।१।।

वर्चसा पीना पृथिवी सूर्येणोत्तभिता द्यौः ।
त्विषिं यां पश्यामो वाते तां नि यच्छे ममोर्वोः ।।२।।

---

२ उ. * * * असदंनि * * तन्त्या। न्युर्मयो . . .।।
का. . . . वत्सटितांघांन्यन्मयो * न्युच्छुष्मारसानां z१z
द्र. १-२ का. स्वराः अङ्किताः ।
३ का. . . नामेकानां . . .
* * परीद्र → घव्यानिजमहेविषं;
म. हृदं (+यं) . . .; घ वा, ज. व्यनियम. . .।।
४ का. तुराणाविषामरुक्षता . . .। * विश्वं . . . z५z
ख उ. विषामुरु . . .।
द्र. ३घ, ४घ विषमित्यस्य प्रभावात् ४ख विशाम् → विषाम्?
१.११२.१ कग का. * तरौ * वर्चसांजे * सम * . . नयोर्वदो;
कख उ. * उरु (म.उरू) सवाशिनौ वर्चसांये (ज. वर्द्धसाये) * * ।
घ ज. * * * विदु।।
२ गघ का. त्विषी * पश्यासो * तान् * समौर्वा।
ग ज. * या * *; घ वा. * * यछे . . .।।

वेद वै वां नामधेयं जिगीवाँ अपराजितम्।
प्रजां च बह्वीमा शासे राष्ट्रं चेन्द्राभिरक्षितम्।।३।।

विदुषी वां नामधेयमश्विना सारघं मधु।
सूर्य इव चक्षुर्भूतानां प्रजां धारयतं मयि
रयिं धारयतं मयि।।४।।

शतपाशां वि तनोम्यूरुभ्यां जघनेन च।
तस्मिन् यो बध्यते बन्धे स मे अस्त्वन्यक्षकः।।५।।

इति प्रथमकाण्डे द्वाविंशोऽनुवाकः

*।।इत्यथर्ववेदे पैप्पलादसंहितायां चतुर्ऋचो नाम प्रथमः काण्डः।।*

---

३ ख का. जिगवां *; उ. जिगीवाङ् * ।
ग वा, ज. प्रजाञ्च . . .;
घ का. * चन्द्राभि . . .; वा. * रक्षतं।।

४ क म. * वान्नाम. .;
ग-ङ का. सूरीव चक्षु। भूतानां * धारयितं * रसिं * *;
वा. . . . प्रजान्धारयतं * रयि . . .।।
ग ज. . . भूताना;

५ कख का. शत्रपा व्यतनोम्यृग्भ्यां * * ।
ज. शतपाशा . . .; उ. * * तनोम्युरुभ्यां * * ।
ग वा. तस्मि * * *; म, ज. तस्मिं . . .;
घ का. ममेअस्तुनियक्षकः।। zzz औं समेअस्तुनिक्षकः zz
ज. * * अस्त्वन्वक्षकः।।

काण्डान्ते - का. इत्यथर्ववेदे पैपलादशाखायां प्रथमकाण्डस् समाप्तः zz वा. श्री।। ऋ५।। ११२।। अ।। चतृग्घकाण्डः समाप्तोयं।। म, ज. ११२।। ऋ५।। अ २२।। ०।। इति चतुर्ध्वकाण्डः समाप्तः।।

# द्वितीयः काण्डः

## २.१

शौ.४.७.२-६ अरसं प्राच्यं विषमरसं यदुदीच्यम्।
अथेदमधराच्यं करम्भेण वि कल्पते।।१।।

करम्भं कृत्वा तिर्यं पीवस्पाकमुदारथिम्।
क्षुधा किल त्वा दुष्टनो जक्षिवां स न रूरुपः+।।२।।

वि ते मदं मदवति शरुमिव पातयामसि।
प्र त्वा चरुमिव येषन्तं वचसा स्थापयामसि।।३।।

परि ग्राममिवाचितं परि त्वा स्थापयामसि।
तिष्ठा वृक्ष इव स्थामन्नभ्रिखाते न रूरुपः।।४।।

---

२.१.१ क काण्डारम्भे का. ओंनमस्तिलोतमायै zz ओं रसं. .; उ. ओं. . .;
ग का. यथेदसध. . . ;

२ कग का. सा. अ.।
ख वा, म. पीवस्फाक . . .। का. पिवस्साकमुदाहृतं;
घ वा. यक्षिवां. . .।। उ. रुरुपः। का. जक्षिवीप्यस्यनुरूरूपः ;

३ कख का. . . . सरयति शन्त. . .*।
क वा. * * * मदय(→ द)ति;
गघ का. सा. अ.।

४ क का. सा. अ.। ग वा. * वृक्षैव . . .;
गघ का. त्वष्य वृक्षैव स्थासं अभिषाते * *;
उ. . . . स्थामंनभ्रिखाते * रुरुपः।।

पवस्तैस्त्वा पर्यक्रीणं *दूर्शेभिरजिनैरुत।
प्रक्रीरसि त्वमोषधेभ्रिखाते न रूरुपः+।।५।।

२.२

आविध्य द्यावापृथिवी आविध्य भगमश्विना।
आविध्य ब्रह्मणस्पतिं कृणोम्यरसं विषम्।।१।।

अरसं हेदिदं विषं यथैनदहमाशिषम्।
उतैनदध्यात् पुरुषो भवादिदगदः पुनः।।२।।

शौ. ५.३०.८ क मा बिभेर्न मरिष्यसि परि त्वा पामि विश्वतः।
ऋ. खि.२.१.१ कख रसं विषस्य नाविदमुद्नः फेनमदन्निव।।३।।

---

५ का. पवस्त्वंयस्त्वा परियक्रीणं दुरुषेभिरजनीरुत।
. . . षधी अतिषातनरूनमः z१z
ख वा, ज. दुरु(ऋ ?)शे . . .।
म. दुर्ऋशे . . .।
द्र. दूर्शं जीर्णवासः इति दारिलवचनात् (कौ. गृ. ११.१६)
अयं शोधः दुर्गामोहनपादकृतः नान्यथाकृतः। पाठस्तु चिन्त्यः।
घ उ. ** रुरुपः ।।१।।ऋ ५।।
२.२.१ का. * दृधा(→ द्या)वा. . . म्यसं *;
२ का. वसोहेदद * यदेनदहमाशिथं
उतैरदध्यात् प्ररुषो . . . . जगदष् *,
३ ख-घ का. पनि → दि * मासि * . . . मुध्नष् . . . . . २
घ ज. . . . . मदंनिव।।
का कख सस्वरौ।

छा.ब्रा.२.६.१८द्रः अपावोचदपवक्ता प्रथमो दैव्यो भिषक्।
काठ.१७.११कख समक्षमिन्द्र गा इव या वाचो विषदूषणीः।।४।।
तै.स.४.५.१.२कख
माध्य.१६.५कख यश्च पिष्टं यश्चापिष्टं यद् दिग्धं यश्च देह्यम्।
मै.२.६.२.कख देवाः सर्वस्य विद्वांसोरसं कृणुता विषम्।।५।।

## २.३

शौ.२.१०.१ क्षेत्रियात्त्वा निर्ऋत्या जामिशंसाद्
तै.ब्रा.२.५.६.१. द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणा त्वा कृणोमि
शिवे ते द्यावापृथिवी अभूताम्।।१।।

शौ.२.१०.२.कख शं ते अग्निः सहाद्भिरस्तु शं गावः सहौषधीभिः।
२.१०.३कख
तै.ब्रा.२.५.६.२ शमन्तरिक्षं सह वातमस्तु ते शं ते भवन्तु
हि.गृ.२.३.१० प्रदिशश्चतस्रः।।२।।

---

४ क उ. . . . . दववक्ता;
ख-घ का. * दैव्य * समगश्छसिन्द्रगायव * वचो . . . षणिः;
५क-ग का . * यश्च * यश्चा . . . . . . यद्यगृहं यश्च * * * विद्वंसो;
ग ज. * * विद्वाङ्सो;
२.३.१. का क्षेत्त्रियात्वा * जहामिशंस * मुञ्वसि **।
* व्राह्मणा * * शिव * * हभूतां;
कख उ. क्षेत्रियात्वा * जा(म. या)मिशंसा द्रूहो * * *।
घ ज. . . . . अभूता।।
द्र. का. खपादः सस्वरः।
२ क का, उ. शन्ते . . .; का. अन्ये सा. अ.। ख शौ. * सोमः . .
.।
घ का. सस्वरः। घा, म शन्ते . . . .।।

| | |
|---|---|
| शौ.२.१०.४कख | या देवीः प्रदिशश्चतस्रो |
| हि.२.४.१ | वातपत्नीरभि सूर्यो विचष्टे |
| शौ.२.१०.५कख | तास्वेतं जरस आ दधामि |
| | प्र यक्ष्म एतु निर्ऋतिः पराचैः।।३।। |
| शौ.२.१०.८ | सूर्यमृतं तमसो ग्राह्या यथा |
| तै.ब्रा.२.५.६.३. | देवा मुञ्चन्तो असृजन्निरेनसः। |
| हि.गृ.२.३.१०.द्र। | एवा त्वा क्षेत्रियान्निर्ऋत्या जामिशंसाद् |
| | द्रुहो मुञ्चामि वरुणस्य पाशात्।।४।। |
| शौ.२.१०.६.कख | अमोचि यक्ष्माद् दुरितादवद्याद् |
| तै.ब्रा.२.५.६.२ | द्रुहः पाशाद् ग्राह्याश्चोदमोचि। |
| शौ.२.१०.७.कख | जहदवर्तिमविदत् स्योनाम- |
| | प्यभूद्भद्रे सुकृतस्य लोके।।५।। |

---

३ ख-घ का. सा. अ.।

४ का. . . . . . चमसो * * * मुञ्चन्तु असृजन्परेतसः
* त्वांक्षेत्त्रियांनिर्ऋत्या जहामिशंसा * * * पाशा;

द्र. का. ४ग पादादारभ्य अन्तं यावत् स्वरा अङ्किताः।
ख उ. * * असृजंनिरेनसः।
ग वा, ज. * * क्षेत्रियानिर्ऋत्या जा(वा.या)मिशंसा;
म. ** क्षेत्रयान्निर्ऋत्या . . . .शंसा;
घ म, ज * मामुञ्वन्तु * * ।।

५ का. अहोमोचि यक्ष्मादुरितावदघाद *
पात्रद् . . . . . जुहारिवर्ति . . . . . स्यूनामप्यभूत
भद्रे * * z३z
क उ. . . . . . दवद्या;
ग वा. . . . . . सोनाम ; म. यहद . . . . .;

२.४

शौ.२.१४.१ निःसालां *धृष्णुं धिषणमेकावाद्यां जिघत्स्वम्।
सर्वाश्चण्डस्य नप्त्यो नाशयामः सदान्वाः।।१।।

५ यदि वा घ क्षेत्रिया यदि वा पुरुषेषितात्।
यदि *स्थ दस्युभ्यो* जाता नश्यतेतः सदान्वाः।।२।।

६ परि धामान्यासामाशुर्गाष्ठामिवासरम्।
अजैषं सर्वानाजीन् वो नश्यतेतः सदान्वाः।।३।।

२ निर्वो गोष्ठादजामसि निर्योनेर्निरुपानसात्।
निर्वो मुगुन्द्या दुहितरो गृहेभ्यश्चातयामसि।।४।।

---

२.४.१ का * धिष्ण्यं ..... सर्वाश्चण्डमनपतियो * सदात्वा।
कख वा. * धृष्णं धषणमेकाव → वाद्यां * ।
म, ज * धृष्णं.....।
ग वा, ज . . . . . . . नप्त्रो;
२ का. यादे * * क्षेत्रियाद् * * पुरुषेषिता।
यदस्तुदश्विभ्यो ...... सदात्वा;
क वा,म. * * क्षेत्र्या;
ग उ. * स्थिदस्विभ्यो * ;
द्र. कख पाठाः संशयिताः।
३ का. सा अ
४ क-ग का. निरवो ..... निर्योनिभ्रूपानश।
..... मगुंद्या * ;
ख उ. निर्योणेनिरुपानसा(म. शा)त्।

३ अमुष्मिन्नधरे गृहे सर्वाः सन्त्वराय्यः।
तत्र पाप्मा न्यच्यतु सर्वाश्च यातुधान्यः।।५।।

२.५

शौ.२.१२.१ द्यावापृथिवी उर्वन्तरिक्षं
क्षेत्रस्य पत्न्युरुगायो अद्भुतः।
उतान्तरिक्षमुरु वातगोपं
ते घ तप्यन्तां मयि तप्यमाने।।१।।

३ इदमिन्द्र शृणुहि सोमप
यत्त्वा हृदा शोचता जोहवीमि।
वृश्चामि तं कुलिशेनेव वृक्षं
यो अस्माकं मन इदं हिनस्ति।।२।।

शौ.२.१२.२ इदं देवाः शृणुत ये च यज्ञिया स्थ
भरद्वाजो मह्यमुक्थानि शंसतु।
पाशे स बद्धो दुरिते न्यच्यतां
यो अस्माकं मन इदं हिनस्ति।।३।।

---

५ क म. अमुस्मि.....;
ख-घ का सर्वास्वन्तुरायः। * * नियश्छतुसर्वश्च * Z४Z
ख वा * संत्वराज्यः । ज. * * सन्त्वराज्य(ड्य ?):।
द्र. ज. पुस्तके अक्षरलेखस्त्रुटितः। एवं म. पुस्तकेऽपि।
ग शौ. न्युच्यतु।

२.५.१. खग का. सा. अ। ख म...... योद्भुतः।
घ का. तेषु * * तस्यमाने Z मन्त्रः अङ्कितस्वरः।

२ क,गघ का. सा. अ.।
ख का. यत्वा * * * । उ. यस्त्वा * * योहवीमि।

३ का. * * शृणुते यज्ञियास्त * . . . मुत्त्मानि * ।
. . . भ्युच्यतां * स्माकं . . .;
खग ज. . . . शंसभु . . . न्वच्यतां;

४ अशीतिभिस्तिसृभिः सामगेभि-
रादित्येभिर्वसुभिरङ्गिरोभिः।
इष्टापूर्तमवतु नः पितॄणा-
मामुं ददे हरसा दैव्येन।।४।।

५ द्यावापृथिवी अनु मा दीधीथां
विश्वे देवासो अनु मा रभध्वम्।
अङ्गिरसः पितरः सोम्यासः
+पापमार्छत्वपकामस्य कर्ता।।५।।

६ अतीव यो मरुतो मन्यते नो
ऋ.६.५२.२ ब्रह्म वा यो निन्दिषत् क्रियमाणम्।
तपूंषि तस्मै वृजिनानि सन्तु
ब्रह्मद्विषमभि तं शोचतु द्यौः।।६।।

शौ. २.१२.८ आ दधामि ते पदं समिद्धे जातवेदसि।
अग्निः शरीरं वेवेष्टु यमं गच्छतु ते असुः।।७।।

---

४ ग का. सा. अ.। स्वरा अङ्किताः।

५ क, ग का. सा. अ।
घ का. पापसारिच्छत्व . . . z उ. . . . माछत्व. . .।।
द्र. का. सस्वरः।

६ ख-घ का. . . . निंद्विषतष् * * * व्रजनानि * . . . शोच * ; सस्वरः।
ख उ. * * निंदि(→ वि, वा; द्वि, ज.)षतृक्रीयमाणं।
घ म. . . षमपि * * * ।।

७ क,ग का. सा. अ.। ज. आन्दधामि. . .;
ग म. * * देवेष्टु;
घ का. इमं . . . वसु। वा, ज. . . गछतु * * ।।

सप्त प्राणानष्टौ मजूझस्तांस्ते वृश्चामि ब्रह्मणा।
यमस्य गच्छ सादनमग्निदूतो अरंकृतः।।८।।

इति द्वितीयकाण्डे प्रथमोऽनुवाकः

२.६

वेनस्तत् पश्यत् परमं पदं
शौ.२.१.१ यत्र विश्वं भवत्येकनीडम्।
ऋ.खि.४.१०.१ इदं धेनुरदुहज्जायमानाः
माध्य.३२.८ स्वर्विदो अभ्यनूषत* व्राः।।१।।

शौ.२.१.२ प्र तद्वोचेदमृतं न विद्वान्
गन्धर्वो धाम परमं गुहा यत्।
त्रीणि पदा निहिता गुहास्य
यस्तानि वेद स पितुष्पितासत्।।२।।

३क-ख स नो बन्धुर्जनिता स विधर्ता
धामानि वेद भुवनानि विश्वा।
५ग-घ यत्र देवा अमृतमानशानाः
समाने धामन्नध्यैरयन्त।।३।।

---

८ कख का. . . . मझस्तौंस्ते * * ;
क उ. . . . मझस्; ख वा, म. . . वृश्च्यामि * ।
ग वा, ज. * गछ. . .; गघ का. सा. अ.।

२.६.१ का. . . . पश्यन्त . . . कनळं। . . . भ्यनुक्तिर्विराट्;
घ उ. * अभ्यनुषत * ।। का. स्वरा अङ्कितः।

२ क का. पृथग्वोचे . . . ; शौ. . . . नु * ;
गघ का. * * निहता गुहास x
(मु. गुहासु) वस्तानि . . .; पादौ अङ्कितस्वरौ।
उ. . . . वितुष्पिता . . .।।

३ म. * * * सि * ; वा . . . सि → स * ;
ख-घ का. धामनि . . . अमृतामानशाना * धामन्नद्धी . .।।
ग वा. . . . मानसानाः;
घ वा,ज. * धामंनध्यै . . .।। म. * धामन्नध्यै . . .।
का. अङ्कितस्वरो मन्त्रः।

५क परि विश्वा भुवनान्याय-
४ख-घ मुपातिष्ठे प्रथमजा ऋतस्य।
वाचमिव वक्तरि भुवनेष्ठा
धास्युर्न्वेष नन्वेषो अग्निः।।४।।

४क परि द्यावापृथिवी सद्य आय-
५ख मृतस्य तन्तुं विततं दृशे कम्।
देवो देवत्वमभिरक्षमाणः
समानं बन्धुं व्यपृच्छदेकः+।।५।।

२.७

शौ.२.५.१-४ग्र॥ इन्द्र जुषस्वा याहि शूर
पिबा सुतस्य मधोश्चकानः।
चारुर्मदाय।।१।।

आ त्वा विशन्तु सुतास इन्द्र
*पृणस्व कुक्षी विड्ढि+ शक्र।
धियेह्या नः।।२।।

---

४ ख-घ का. -मुपाचष्टे। . . . वाचसिवाक्नि * धास्नंनेष णत्वेषो *; मन्त्रः, अङ्कितस्वरः।
ग उ. . . . वकृथरि *;
घ म. . . . ऽग्निः।। ज. धास्युन्वेष . . . .।।

५ कख का. * . . . पृथि सद्याय . . . दृकेशं।
घ का. . . . विपरिश्छदेकः z9z वा, म. . . व्यपृछदेकः।। . . . ज. व्यपृछदेकः ।।६।।ऋ५।।

२.७.१ का. * जुषस्व * * पिवा सुतश्च . . . कान चारुन्मदथः।
कख वा. . . . जा → याहि . . . शुतश्च → स्य . . .।

२ का. . . मुतास * पृणस्य * विड्यशत्रु धेह्या * ;
खग उ. पृणस्य * विड्डि * । . . . न।।

इन्द्र जठरं पृणस्व मधोरस्य सुतस्य।
उप त्वा मदेषु वाजो अस्तु।।३।।

इन्द्रस्तुराषाड् जघान वृत्रं
सासाह शत्रून् समत्सु वज्री।
मदे सोमस्य।।४।।

*श्रुधी हवं मे गिरो जुषस्वे-
न्द्र *स्वयुग्भिर्मत्स्व मदाय।
महे रणाय।।५।।

२.८

शौ.४.३.१ उदित्ये अक्रमन् त्रयो व्याघ्रः पुरुषो वृकः।
हिरुग् ज्योतिः* सूर्यो हिरुग् देवो वनस्पति-
र्हिरुङ् नवन्तु शत्रवः।।१।।

२ परमेण पथा वृकः परेण स्तेनो अर्षतु।
ततो व्याघ्रः परमः।।२।।

---

३ ग का. . . . * स्तु। म. . . ऽस्तु।।

४ का. सासहाशत्रुर्ममुश्च। वज्रीर्मदिसोमस्या;

५ का x ति (मुम्ब. श्रूति) हव * किरो जुषस्य इन्द्र स्यगुभिन्मत्स
* * Z२Z

क वा, म. शृदि . . .; ज. श्रुति . . .; वा, ज. * हवम्मे . . .;

ख उ. . . . स्ययुग्भि . . .।

२.८.१ का. * क्रमं . . . हगूवेद * हग् *
. . . तिर्हृणमण . . . * ;

ग ज. * जोति * ; वा, म. * ज्योति * ;

२ का. * * वृक * * रर्षतु। * * परमा ;

३ अक्ष्यौ च ते हनू च ते व्याघ्रं जम्भयामसि।
आत् सर्वान् विंशतिं नखान्।।३।।

७क-ख यत् संनशो वीन्नशो[+] यद्विनशो न सं नशः[*]।
६क-ख मूर्णा मृगस्य दन्ता अपिशीर्णा उ पृष्टयः।।४।।

४ व्याघ्रः दत्वतां वयं प्रथमं जम्भयामसि।
आदित स्तेनमहिं यातुधानमथो वृकम्।।५।।

नेव रपूसरौ न गृहः परश्चर।
द्विपाच्चतुष्पान्नो मा हिंसीरिन्द्रजाः सोमजा असि।।६।।

## २.९

शौ.१.३४.१ इयं वीरुन्मधुजाता मधुने त्वा खनामसि।
मधोरधि प्रजातासि सा नो मधुमतस्कृधि।।१।।

---

३ क का, वा, ज. अक्षौ . . .; उ. . हनु * * ;
ग का. * सर्वां वृषतिन्नखां;
४ का. * संनसो वियन्नसो न संनस।
पूर्णा * * उप . . . परिष्टयः;
कख उ. * * चींनशो . . . शंनसः।
घ ज. * अपृष्ट्यः।।
५ क का. * दतुतां * ; ख ज. * जंभया. . .।
ग का. आदिकु स्तेनमह्नं;
वा. . . . स्थेनमहिं ; ज. . . . महि;
६ का. नैवरस्पसैन्न * . . . ष्पान्तो . . . * सीः z
ओं इन्द्रजस्सोमजा असिः z३z
ख ज. * गृह . . . .।
घ ज. - रिन्द्रजा * *।। ऋ६।।८।। विष्णुः।।
उ. काण्डिकान्ते मङ्गलचिह्नानि।
२.९.१ का. सा.अ.। घ ज़ ...... मतष् → सृकृधि।

२क-ख जिह्वाया *अग्रे मे मधु जिह्वामूले मधूलकम्।
५ग-घ यथा मां कामिन्यसो यथा मामन्वायसि।।२।।
पै.२.१७.१घ-ङ

शौ.१.३४.५क-ख परि त्वा परितलुनेक्ष्णाकामविद्विषे।
यथा न विद्विषावहै न विभवाव कदाचन।।३।।

राज्ञे ब्रूहि वरुणायाश्वाय पुरुषाय च।
यथा मे पथ्ये रेवति जायामा वह साधुना।।४।।

जायां मे मित्रावरुणा जायां देवी सरस्वती।
जायां मे अश्विनोभा धत्तां पुष्करस्रजा।।५।।

---

२ कख का, उ. जिह्वायाग्रे * * * मधु(म.धू)लकं।
ग ज. * * कामिन्वसो; घ का. यंवावा मामन्वायसी;

३ कग का. * * परितन्नुतेयक्षणाकाम . . . । * * विद्वावहि;
ख ज. . . . . कामविद्युषे।।

द्र. कख . . . . परितलुनेक्षुणागामविद्विषे इति शौनकीयः पाठः । उत्कलीयः पाठः सन्दिग्धः। तथा काश्मीरीयः। < परितलुनेक्षुणा + अकामविद्विषे?

४ क का. राज्ञि * ...; ग का. पथा * * *;
घ म. .. मा व → मह * ।।

५ क का, वा, ज. जायाम्मे * ;
ग म. जायाम्मे .....; गघ का जायान्मे अश्विनौभा
* पुष्करसृज z४z

## २.१०

शौ.२.९.१ दशवृक्ष मुञ्चेममंहसो ग्राह्याश्च।
अथो एनं वनस्पते जीवानां लोकमुन्नय।।१।।

५ यश्चकार स निष्करत् स एव सुभिषक्तमः।
स एव तुभ्यं भेषजं चकार भिषजाति च।।२।।

४ चीर्तिं ते देवा अविदन् ब्रह्माण उत वीरुधः।
चीर्तिं तेऽघोत्तमामविदन् भूम्यामधि।।३।।

२ आगादुदगादयं जीवानां व्रातमप्यगात्।
अभूदु पुत्राणां पिता नृणां च भगवत्तमः।।४।।

३ अधीतिमध्यगादयमधि जीपपुरा अगात्।
शतं च यस्य वीरुधः सहस्रमुत भेषजा।।५।।

**इति द्वितीयकाण्डे द्वितीयोऽनुवाकः**

---

२.१०.१ का * संचेममहिंस्रो . . . । * येनं * . . . मुन्नया।
२ कख का. सा. अ.। घ उ. भेषजाति * ।।
३ का. चातं * * विदं व्राह्माणमुद्वीवृध
चातं तेभ्योत्तमामविदं . . . ।
क वा, ज. चीतन्ते * *; म. चीतिन्ते . . .;
गघ म. चीतिन्तेघो . . . विदं भूम्यामभि → धि।।
वा, ज. चीतन्तेघो . . .।।
४ क वा. आशा → गादु . . . ., ज. 'आगा' इति नष्टम्।
गघ का. सा. अ.
घ वा. नृणाञ्च . . .।। ज. * च . . .।।
५ कख का. सा. अ.
गघ का. * तेस्य * . . . भेषजः z५z अनुवाकं २z
ग वा. * * ज → यस्य;

## २.११

शौ.२.४.१ दीर्घायुत्वाय¹ बृहते रणायारिष्यन्तो बक्षमाणाः सदैव।
मणिं विष्कन्धदूषणं जङ्गिडं बिभृमो वयम्।।१।।
२ जङ्गिडो जम्भाद्विशराद्विष्कन्धादभिशोचनात्।
मणिः सहस्रवीर्यः परि णः पातु विश्वतः।।२।।
३ अयं विष्कन्धं सहते अयं रक्षोप बाधते।
अयं नो विश्वभेषजो जङ्गिडः पात्वंहसः।।३।।
४ देवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा।
विष्कन्धं सर्वा रक्षांसि व्यायामे सहामहे।।४।।
५ शंणश्च त्वा जङ्गिडश्च विष्कन्धादधि मुञ्चताम्।
अरण्यादन्य आभृतः कृष्या अन्यो रसेभ्यः।।५।।

---

२.११.१ कख का. दीर्घायुत्वाथ * रणायऋष्यम्भो ऋक्षमाणास् . . .।
क उ. दीर्घायत्वाय . . .; ख म. रिश्यन्तो. . .।
ज. रिक्ष्वन्तो * . . .।
ग ज. नष्टः पादः। गघ का. नास्ति।
२ कख का. नास्ति। घ का. . . . पतु * ;
३ क का. इदं * साते; ख म. ऽयं. . .।
ग म,ज. आयन्नो * ;
घ का. जङ्गिणष् . . . .।
४ का. सा. अ.। घ म. व्यायामे → महे।।
५ का. खनश्च * जङ्गिणश्च
. . . दत्याद्यतष् * न्यो * z9z
ग वा. अरण्यादण्य . . . .; म. अरण्याद (+र) न्य . . . .;
ज. अरण्यादन्व . . .;
घ म. कृष्यान्यो → न्नो * ।।

## २.१२

शौ.२.२६.१-५　एह यन्तु पशवो ये परेयु-
वायुर्येषां +सहचारं जुजोष।
त्वष्टा येषां रूपधेयानि वेदा-
स्मिन्तान् गोष्ठे सविता नि यच्छात्।।१।।

इमं गोष्ठं पशवः सं सृजन्तु
बृहस्पतिरा नयतु प्रजानन्।
सिनीवाली नयत्वाग्रमेषा-
माजग्मुषो अनुमतिर्नि यच्छात्।।२।।

सं सं स्रवन्तु पशवः समश्वा उत पूरुषाः+।
सं धान्यस्य या स्फातिः
संस्राव्येण हविषा जुहोमि।।३।।

---

२.१२.१　कख　का. येह * * * युर्वायुर्यषां महतारं तुजोषा।
ख　उ. . . . . सहवारं * ।
द्र.　उ. लिपौ व-चयोः सादृश्यात् का. पुस्तिकायां तचयोर्मिथोभ्रमाद्य +सहचारमिति शोधो नामूलः।
गघ　का. * * रूपयेयानि वेदा अस्मिँस्ताँ * * * * ।
ग　वा, ज. * * रुपधेयानि . . . . .; घ वा, ज . . .यछात्।।
२　का. . . . स्रवन्तु . . नैतुप्रजानाम्। * . . त्वग्रमेषा माजिन्मुखे. .।
क　म. 'सं' इति नष्टम्। ख म . . नएतु * ।
ग　म, ज. शिनीवाली . .; घ उ. . . यछात्।।
३　क　ज. * * श्रवन्तु * ;
ख　उ. . . पुरुषाः। का. समाश्वाहुतपौरुषाः;
गघ　का. सा. अ.। उ. सन्धान्यस्य . . .।।
द्र.　का. २-३ क्वचिदङ्कितस्वरौ।

सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम्।
सं सिक्ता अस्माकं वीरा मयि गावश्च गोपतौ।।४।।

आ हरामि गवां क्षीरमाहार्षं धान्यं रसम्।
आहार्षमस्माकं वीराना पत्नीमेदमस्तकम्।।५।।

२.१३

शौ.३.१४.२ सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः।
समिन्द्रो यो धनञ्जय इह पुष्यत यद्वसु।।१।।

४ इहैव गाव एतनेहो शका इव पुष्यत।
इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः।।२।।

६ मया गावो गोपत्या सचध्व-
मयं वो गोष्ठ इह पोषयाति।
रायस्पोषेण बहुला भवन्ती-
र्जीवा जीवन्तीरुप वः सदेम।।३।।

---

४ क वा. * * * क्षीरं ; खग का. सा.अ.।
ग म. * * ऽस्माकं * ;

५ क ज. * हारामि . . .; ख वा. माहार्ष * * ।
क-ग का. सा. अ.। घ उ. . . . पत्नीवेदमस्तकं ।।ऋ ५।। १२।।

२.१३.१ वा सम्वः . . . धनंजय.:.।। म. . . . . सम्पूषा . . . ।।
का. सा. अ.। स्वरा अङ्किताः।

२ क, ग का. सा. अ.।

३ का. * * गोपत्यास् सचध्वं मयि * * * * ।
ग ज. * वहुधा → ला . . . ;
गघ उ. . . भवन्तीजीवा . . . . ।। घ का. . . . रुपवासदेमा।

१ सं वो गोष्ठेन सुषदा सं रय्या सं सुपुष्ट्या।
अहर्जातस्य यन्नाम तेन वः सं सृजामसि।।४।।

३ संजानाना अविहृता अस्मिन् गोष्ठे करीषिणीः।
मै.४.२.१० बिभ्रतीः सोम्यं हविः स्वावेशास एतन।।५।।

## २.१४

शौ.२.३२.१ उद्यन्नादित्यः क्रिमीन् हन्तु
सूर्यो निम्रोचन् रश्मिभिर्हन्तु।
ये अन्तः क्रिमयो गवि।।१।।

२ कख
पै.७.२.६कख यो विश्वरूपश्चतुरक्षः क्रिमिः सारङ्गो अर्जुनः।
४ गघ हतो हतभ्राता क्रिमिर्हतमाता हतस्वसा+।।२।।

४कख हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः।
५कख हतासो अस्य वेशसो हतासः परिवेशसः।।३।।

---

४ ख का. . . . सपुष्ट्या; उ. * रज्या * * ।
गघ का. . . . र्जातम . . . * मसू् * * ।
ग म. अहर्यातस्य . . . ; वा, ज. * यंनाम;
५ ख का. . . . नांवि[illegible]ामस्मिन् * करीषिणीं
* सोम्य * * एतनः Z३Z
ग म. * सौम्यं * ; ज. . . . सौ → साम्यं . . . ;
२.१४.१ का. ... न्नदित्यष् * * * निम्रोचं . . . * न्तष् * गवीनः;
क वा. . . . क्रिमीन * ;
ख वा. * निम्रोचन्द्र . . . हन्त्। ज. * निम्रोचन्द्र . . . ।
२ का. * द्विशीर्षा (द्र. ७.२. ६ क) चतुरक्षो * शार्गो *
* हतत्राता क्रिमिन्हतमहता हतश्वसा।
ख म. * * ऽर्जुनः। घ उ. . . . हतः स्वसा।
३ का. खग सा. अ.

६ प्र ते शृणामि शृङ्गे याभ्यां त्वं वितुदायसि।
अथो भिनद्मि तं कुम्भं यस्मिन् ते निहितं विषम्।।४।।

३क-ग अत्रिवत्त्वा क्रिमे हन्मि कण्ववज्जमदग्निवत्।
५घ अगस्त्यस्य ब्रह्मणा सर्वे ते क्रिमयो हताः।।५।।

२:१५

शौ.२.३१.१-५ इन्द्रस्य या मही दृषत् क्रिमेर्विश्वस्य तर्हणी।
तया पिनष्मि सं क्रिमीन् दृषदा +खल्वाँ इव।।१।।

दृष्टमदृष्टमतृहमथो कुरूरुमतृहम्।
अल्गण्डून् सर्वाञ्छलूलान्
क्रिमीन् वचसा जम्भयामसि।।२।।

---

४ का. प * शृशृणामि * याभ्यायत्तं वितदायसि।
* भिनद्मि * * * * निहतं * ।
घ ज. 'निहितं विषं' इति नष्टम्।
५ क का. अत्रिवत्त्वा कृमे * ; उ. अत्रिवत्वा . . .;
ग का. अगस्त्यं * ;
२.१५.१ क का. इन्द्राद * महि * ;
गघ का. * पिनश्म * कृमिं दृशव खल्वाङ्वि।
ग वा, म. पिनस्मि, ज. पिनस्मि → ष्मि;वा. क्रिमीं; ज. क्रिमी;
ग उ. * खलवाङ् इव।।
२ का. . . मद्रुहमथोकुरीरमद्रुहां। अल्गण्डूनसर्वा शलूलान क्रिमण * जम्भयामि।
क म. दुष्टमदृष्टम . . .;
ख वा. . . . कुरुरुतृहं;
ग वा. . . . अलूगण्डु → ण्डून् सर्वांछलुलान्;
म. * सर्वां छलुलान्; ज. सर्वांछलूला → नान्

अलूगण्डून् हन्मि महता वधेन
दूना अदूना अरसा अभूवन्।
शिष्टानशिष्टान्नि तिरामि वाचा
यथा क्रिमीणां नकिरुच्छिषातै॑ । ।३ । ।

⁺अन्वान्त्र्यं शीर्षण्यमथो पार्ष्टेयं क्रिमिम्।
अवस्कवं *व्यध्वरं क्रिमीन् वचसा जम्भयामसि । ।४ । ।

ये क्रिमयः पर्वतेषु ये वनेषु
य ओषधीषु पशुष्वप्स्वन्तः।
ये अस्माकं तन्वं स्याम चक्रिर
इन्द्रस्तान् हन्तु महता वधेन । ।५ । ।

इति द्वितीयकाण्डे तृतीयोऽनुवाकः

---

३　　का. अल्गण्डून * * वदेन दुनाद्दुनारसाभुवं।
　　सृष्टमसृष्टीन्यकिलासिवाचा (→ मनाचा) न्यथा * न्यखिलशछवातैः;
क　वा. अल्गण्डु → ण्डून् . . .; ज. अल्गण्डून . . ;
ग　वा. . . . शिष्टानि . . .;
म　ज. शिष्टानिशिष्टान्नि * (म. तरामि) * ;
घ　वा, ज. . . . नकिरुछैषातै । ।म. . . . रुच्छैषातै । ।
द्र.　पाठः सन्दिग्धः। दुर्गामोहनपादकृतः शोधो नान्यथा कृतः।

४　　का. अत्वाहंल्यहं . . . पार्श्वयं कृमीं * यरंक्रिमीण * * ।
द्रः.　अन्ततः अङ्कितस्वरः।
क　उ. अन्वान्त्रियं. . .; ख वा. क्रिमीं।
ग　उ. * व्यद्धरं * ;

५　कख　का. . . . वनेषु। यौ . . .; क म. * क्रिमय . . .;
गघ　का. * स्माकं तन्नो * चक्रिरिन्द्रस्तान् . . . ।५zz अ३z
ग　म. * ऽस्माकं . . . ; घ वा, ज. इन्द्रस्तान * * * । ।ऋ
५ । ।१५ । ।अ३ । ।

## २.१६

शौ.२.२७.१ या शत्रून् प्राशं जयात्' सहमानाभिमूरसि।
सामून् प्रतिप्राशो जह्यरसान् कृण्वोषधे।।१।।

२क-ख सुपर्णस्त्वाऽन्वविन्दत् सूकरस्त्वाखनन्नसा।
३क-ख इन्द्रस्त्वा चक्रे बाह्वोरसुरेभ्य स्तरीतवे।।२।।

४क-ख पाटामिन्द्रो व्याश्नाद्धन्तवा असुरेभ्यः।
५क-ख त्वयाहं शत्रून् साक्षीयेन्द्रः शालावृकानिव।।३।।

६ क-ख रुद्र जलासभेषज नीलशिखण्ड कर्मकृत्।
प्रश्नं दुरस्यतो जहि यो अस्माँ अभिदासति।।४।।

तस्य प्रश्नं त्वं जहि यो न इन्द्राभिदासति।
अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि।।५।।

---

२.१६.१ क का. यश्चतुन्सञ्जयात् ; उ. * * प्राशंजया ;
ख वा, ज. . . . विभूरसि।
गघ का. . . . जयरसाकृण्योवधे। ग वा. सामून . . .;
गघ उ. . . . जह्मरसां . . . ।। म. कृण्मोषधे।।

२ का. . . . स्त्वांनविददत् सु (→ सू) खचरस्थाखनंनसा।
इन्द्रस्त्वा चके ह्रो असु . . . ।
ख उ. . . . खनंनसा।

३ का. पायसिन्द्रो व्याष्णान्हन्तवा * ।
तयाहंशतृन् सक्षीये इन्द्रश्चालावृकानिव;

४ का. * जलाजभेषज नीलशित्य * ;
पृष्णं * * * स्मौं * ।
ख वा.नीळ . . . ; म. नीळसि. . . ; ज. नीळसि → शि . . . ;
क शौ, नीलरुद्रो. १.३ जलाषभेषजः ;
घ वा,ज. * अस्मां * म. * ऽस्मां * ।।

५ क का. * पृष्णं जहि ; ख सा. अ.। ग सस्वरः।
क वा. * प्रश्न * * ; ज. * प्रश्नन्त्वं * ;

२.१७

शौ.२.३०.१　यथेदं भूम्यामधि वातस्तृणं मथायति।
पै.२.९.३ग-घ　एवा मथ्नामि ते मनो यथा मां कामिन्यसो
यथा मामन्वायसि।।१।।

शौ.२.३०.५　एयमगन् पतिकामा जनिकामोऽहमागमम्⁺।
अश्वः कनिक्रदद्यथा भगेनाहं सहागमम्।।२।।

२　सं चेन्नयाथो अश्विना कामिना सं च नेषथः।
सं वां मनांस्यग्मत सं चक्षूंषि समु व्रता।।३।।

४　यदन्तरं तद् बाह्यं यद् वाह्यं तदन्तरम्।
कन्यानां विश्वरूपाणां मनो गृभायौषधे।।४।।

३प्रः　या सुपर्णापक्षणवानपक्षणवा।
अत्रा त आर्पितं मनः शल्य इव कुर्मलं यथा।।५।।

---

२.१७.१　का. . . . भूम्यादि . . . यथि। एव मश्नामि *
* * कामित्यसो एवाममत्वायसी।
ख　उ. वातस्तृण * ।
उ.　ज. अन्तिममक्षरं नष्टम्।

२ क-ख　का. येमगं * . . . गमाम् ;
उ. . . . प्रतिकामा . . . गमन्। * . . . दह्यता . . . गमन्।

३ का.　स . . . नेषितः सर्वाङ्मनास्य . . . मं * सम * ।
क　म. * चेनयाथो * ;

४ कघ　का. सा. अ.। सस्वरः पाठः।

५　का. यस् * रक्षाणवा न वक्षणवा त्रातान्पितं *। शल्येव गुल्मलूं
*। Z२Z
कख　वा. . . . वान् पक्षणवा। म. . . . प → वक्षणवा।
ज. . . . व → पक्षणवा।
"पैप्पलादपाठानामर्थो दुर्ग्रहः" - दुर्गामोहनपादाः।
घ　म. . . कुर्मळं * ।।ऋ ५।। १७।।

२.१८

शौ.६.३८.१-४
काठ.३६.१५
तै.ब्रा.२.७.७.१

सिंहे व्याघ्र उत या पृदाकौ
त्विषिरग्नौ ब्राह्मणे सूर्ये या।
इन्द्रं या देवी सुभगा ववर्ध
सा न ऐतु वर्चसा संविदाना।।१।।

या हस्तिनि द्वीपिनि या हिरण्ये
त्विषिरश्वेषु पुरुषेषु गोषु या।
इन्द्रं या देवी सुभगा ववर्ध
सा न ऐतु वर्चसा संविदाना।।२।।

शौ.४

या राजन्ये दुन्दुभावायतायां
त्विषिः सेनायां स्तनयित्नौ घोषे या।
इन्द्रं या देवी सुभगा ववर्ध
सा न ऐतु वर्चसा संविदाना।।३।।

---

२.१८.१ क वा, ज. * * * * प्रदाकौ; म. . . प्रुदाकौ;
ख वा. . . * जा। ख,घ का. सा. अ.।
घ उ. . . सम्विदाना।।
द्र. का. चतुर्थमन्त्रं यावत् काण्डिका अङ्कितस्वरा।

२ क का. * * * * याहिरण्यये; उ. आदौ 'या' इति नास्ति।
ज. हस्तीनि . . .; वा. * द्विपिनि . . .;
ख का. . . गोषु। वा. . . . जा।।
गघ का. सा. अ.। उ. नास्ति। एवं तृतीयमन्त्रं यावत्।

३ क. उ. 'या' इति नास्ति। . . . वाजतायां;
ख का. त्विषिरश्वेनायांस्तनयित्न गोषु *;
उ. * सेनाया * * *।। वा. 'स्तनइत्नौ'।
घ का. सा. अ.।

३ रथे अक्षेष्वृषभस्य वाजे
पर्जन्ये वाते वरुणस्य शुष्मे।
इन्द्रं या देवी सुभगा ववर्ध
सा न ऐतु वर्चसा संविदाना ।।४।।

x या रुद्रेषु या वसुष्वादित्येषु मरुत्सु या।
त्विषिर्या विश्वेषु देवेषु सा न ऐतु वर्चसा संविदाना।।५।।

२.१६

यदि गाधानां यदि नाव्यानां
नदीनां पारे नृपतिः सखा नः।
विश्वे देवासो अभि रक्षतैनं
यथा जीवो विदथमावदासि।।१।।

यद्यपारे यदि वा घ पारे
यदि धन्वनि नृपतिः सखा नः।
विश्वे देवासो अभि रक्षतैनं
यथा जीवो विदथमावदासि।।२।।

---

४ क, गघ का. सा. अ.।
ख म. पर्यन्ये . . .। ज. पर्जन्वे . . .।
घ उ. नास्ति।
५ घ का. * नैतु * संविदानाम् z३z
उ. . . . सम्विदाना।।ऋ ५।।१८
२.१६.१ क का. * गादानां *;
गघ का. * * * रक्षतेमं . . . विदासि।
२ का. यद्यवारे . . . धन्विनि * * *;
गघ का, उ. नास्ति।

यदि यत्सु यदि दृत्यां
यदि समित्यां नृपतिः सखा नः।
विश्वे देवासो अभि रक्षतैनं
यथा जीवो विदथमावदासि।।३।।

अधस्पद्यन्तामधरे भवन्तु
ये नः सूरिं मघवानं पृतन्यान्*।
विश्वे देवासो अभि रक्षतैनं
यथा जीवो विदथमावदासि।।४।।

यम मृत्यो मैनं हिंसी-
र्यमहं हृदा मनसा जुगोप।
यो मां पिपर्ति यमहं पिपर्मि
स प्रजावान् मघवान् सूरिरस्तु।।५।।

---

३ का. यद्यत्सुदृत्यां यदि समृत्यां * * *;
क उ. * * * घृत्यां; ज. 'यदिघृत्यां' इति नष्टम्।
गघ का, उ. नास्ति।
४ का. अधस्पर्म्यतामधनेभवान्वेनसूर्यं * पृतन्यां * * भि रक्षतेमं। . .
ख वा. . . पृतन्या। ज. . . . सुरिं . . . . पृतन्यां।
म. . . . पृतन्यां।
ग वा. * * * रतैनं;
५ का. इमं मृत्यु . . . हिंसीर्योमां * मनुसा चगोपा।
* महं पिपन्ति योमहं * सुप्रजसावां मघवां . . . Z४Z
द्र. का. पत्रस्य दक्षिणभागे "अन्यपुस्तके मघवा सूरि वासू" इति।
ख ज. . . युगोप।

## २.२०

[.छा.ब्रा.२.५.१४ [.१.५.११] इमां नावमा रोहताच्छिद्रां पारयिष्णवम्।
नराशंसस्य या गृहे शतारित्रा भगस्य च।।१।।

उपं धुवं गुल्गुलुना यक्ष्माः सन्त्वघ्न्यायाः।
रुद्रस्येष्वा यातुधानानथो राज्ञो भगस्य च।।२।।

रुद्रावीशाते द्विपदां चतुष्पदां
तयोर्वयमधिवाके स्याम।
पक्वैर्वित्थैः प्रतिभूषन्त एमौ
वयं देवानां सुमतौ स्याम।।३।।

प्रतीची नाम ते माता शतवारो घ ते पिता।
ततो ह जज्ञिषे त्वमरिष्यन्त्यरुन्धति।।४।।

---

२.२०.१ कख का. इमा . . . अच्छिद्रां पारयिष्णुवं;
उ. . . . रोहनाछिद्रां * (वा. पारइष्णवं)।
का. सस्वरो मन्त्रः।

२ कख का. * धोगुल्गुना यक्ष्मस् संत्वघ्न्या;
क वा. * धुप → व गुल्गुलु (→ δ) ना;
म. * * गुल्गुलु (→ δ) ना;
ज. उप(→ व)धुव (→ प)गुल्गु(→ गुगु)लुना;
ख म. * सन्त्वघ्न्याः →। ज. * संत्वघ्न्याः।
घ का. . . भवस्य *।

३ का. . . वैशाते * * . . . यमगुवाके *।
पक्रीर्वित्थी प्रतिभूषन्तीनो . . .।
ग वा. . . . . एनो; म, ज. . . . . प्रतिभूषंत *;
म. 'त्थैः' इति नष्टम्।

४ ख का. * ह * *।
ग म, ज. * * यज्ञिषे . . .;
घ का. -मिरित्यरुन्धती; वा, ज. . . मरिष्यंत्य. . .।

माता नामासि मातृतो अमृतस्यैव वा असि।
अरुन्धति त्वं सर्वमभि जीवमधा इदम्।।५।।

इति द्वितीयकाण्डे चतुर्थोऽनुवाकः

## २.२१

शौ.२.३६.१ आ नो अग्ने सुमतिं सम्भलो गे-
दिमां कुमारीं सह नो भगेन।
जुष्टा वरेषु समनेषु वल्गु-
रोषं पत्या भवतु सम्भगेयम्।।१।।

३ इयमग्ने नारी पतिं विदेष्ट
सोमो हि राजा सुभगां कृणोतु।
सुवाना पुत्रान् महिषी भवाति
गत्वा पतिं सुभगा वि राजात्।।२।।

२ सोमजुष्टो ब्रह्मजुष्टो अर्यम्णा सम्भृतो भगः।
धातुर्देवस्य सत्येन कृणोमि पतिवेदनम्।।३।।

---

५ का. . . मातृतौ . . . * सि * त्वां . . . युधम् z५z अनु ४z
क वा. . . . नातृतो; ख उ. अमृतस्येव * *।
गघ वा. * * . . मभि →धि . . .।। ऋ ५।।२०।।अ ४।।
२.२१.१ कख का. . . . स्कन्दलोके इदमां कुमार्यां मा * * . . . भवति सुंभगेयं।
२क का. सा. अ.। ख-घ का. . . . सुभगं . . .।
भवासि * * सुभगे * राजा।
खग ज. 'गां * * पुत्रान्' इति नष्टम्।
ग वा, म. * पुत्रां * * ;
घ वा, म. . . * * . . . मि * ।। ज. . . भिराजा।।
३ कख का. सोमोजुष्टो अर्यम्ना संभृतो भग; उ. . . . संभृतो *।
घ का. सा. अ.।

४ यथाखरो मघवंश्चारुरेष
प्रियो मृगाणां सुषदा बभूव।
एवेयं जुष्टा भगस्यास्तु
संप्रिया पत्याविराधयन्ती।।४।।

५ भगस्य नावमा रोह पूर्णामनुपदस्वतीम्।
*तयोपप्रयाहि तं यः पतिः प्रतिकाम्यः।।५।।

७ इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भगः।
एते पतिभ्यस्त्वामदुः प्रतिकामाय वेत्तवे।।६।।

## २.२२

शौ.३.१७.२
ऋ.१०.१०१.३
युनक्त सीरा वि युगा तनोत
कृते क्षेत्रे वपतेह बीजम्।
विराजः श्नुष्टिः सभरा असन्नो
नेदीय इत् सृण्यः पक्वमा यवम्।।१।।

---

४ का. कख सा. अ.। ग यंवयं . . . .;

५ का. * . . . रुह . . मनुपरस्वतीं (शौ. -मनुपद-)
त्रयोपः पूषाहितं * * पतिकास्यं; ख. तु. ऋ. १.१३५.८. नाप
दस्यन्ति धेनवः।।
गघ वा. तयोपःप्रियाहि * * पति *।।
ग म, ज. . . प्रियाहितं; घ ज. * * प → प्रतिकाम्यः।।

६ कख का. * * गुल्गुलुवयसूक्षो * भग।
वा, ज. * * गुलुगुल्ययमौक्षा * *।
म. * * गुलुगुल्वयमौक्षा * * ।
गघ का. सा. अ.।।

२.२२.१ क का. सा. अ.।
खघ का. * क्षेत्त्रे . . . बजं। * सुनिष्टिस् * शिछन्नो * * * . . . युवं;
घ वा. * इछुण्यः . . . .।। म. * छृण्यः . . .।।
ज. * इच्छृण्यः. . .।।

क-ग शौ.३.१७.१ ऋ.१०.१०१.४
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथग्
धीरा देवेषु सुम्नयौ।
अनड्वाहः पुरुषा ये कृषन्ति
लाङ्गलं फालं *समनज्मि स्फात्या।।२।।

शौ.३.१७.५ मै.२.७.१२ माध्य.१२.६९
शुनं कीनाशो अन्वेतु वाहाञ्*
शुनं फालो विनुदन्नेतु भूमिम्।
शुनासीरा हविषा यो ददातै
सुपिप्पला ओषधयः सन्तु तस्मै।।३।।

मै.२.७.१२
शुनं नरो लाङ्गलेनानडुद्भि-
र्भगः फालैः क्षेत्रपतिर्मरुद्भिः।
पर्जन्यो बीजमिरयेदं हिनोतु
शुनासीरा कृणुतं धान्येह।।४।।

---

२ क का, वा. * युंजन्ति * ; म. * * क →गवयो;
ख का. . . पृथक्; ग का. * * सुम्नयो;
घ का. अनुड्वाहाष् * * कृणन्ति। वा . . . जे * ;
ङ. का. * * सुमनजि * ;
उ. . . . सुमनज्मि * ।। वा, म. लाङ्गळं; म. फाळं;

३ क का. * केनाशो * वाहां; उ. . . वाहां
ख का. शुनं * विनदन्नयतु * ; वा, ज. . . विनुदंन्नेतु * ।
ग का. * * * यजात्रै →ˈतै;

४ का क. शुनन्नरो * अन. . .; ख नास्ति। गघ * बीजमिर्यदो। * * * धान्येन;
क वा. * * लाङ्गळेना . . .; ख वा * फालै . . .। म. . . फाळैः. . .।
ग म. * वीजमीरयेदं * ; वा. * . . .मिरएदं * ;

शौ.३.१७.४ ऋ.४.५७.७ इन्द्रः सीतां नि गृह्णातु तां पूषाभि रक्षतु।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्।।५।।

मै.२.७.१२ काठ.३८.१४ उदस्थाद्रथजिद् गोजिदश्वजि-
द्धिरण्यजित् सूनृतया परीवृतः।
एकचक्रेण सविता रथेनो-
र्जो भागैः पृथिवी नेत्यापृणन्।।६।।

## २.२३

गवां गृहाणां रसमोषधीना-
मनुज्येष्ठं वर्च आयुर्विकल्प्य।
स मा हिंसीः पितरौ वर्धमानो
+भद्राच्छ्रेयांसमभि लोकमेहि।।१।

यदीदं भक्तं यदि वा विभक्तं
क्षेत्रं देवानां यदि वा पितृणाम्।

---

५ का. . . . पूषामह्यं रक्षतु . . .।
वा. * सीतान्व . .पुषाभि . . दुहाउ(ज. उ → मु)त्तरामुत्तरां *।।

६ ख उ. . . . सुनृतया *।
गघ का. एकश्चक्रेण * रथनोर्जो * पृथिवीनेत्यापृणं z२z
ज. . . . . रथेनोर्यो . . .।।
का. काण्डिका अङ्कितस्वरा।

२.२३.१ कख का. * * . . . धानां अनु . . . ;
ख उ. . . . विक्लृप्य। ज 'नु . . . आ' इति नष्टम्।
गघ का. स्म * * पितरो * भद्रागच्छांसिमभि . . .।

२ ख वा. . . . पितृणां।
गघ का. उदु * * दिवा * * * स्तु * * * ;
ग वा, * * * उदित्ये . . .; ज. * * * उदित्ये → ते . . .;
गघ वा. . . . मनुष्यव( →ऽ)छिवा . . .।।
म. . . . . मनुष्यवछिवा * ऽस्तु . . .।।

यदि सूर्य उदिते यदि वा मनुष्यव-
च्छिवा नो अस्तु पृथिवी उत द्यौः।।२।।

ऊर्जा वां भागो वरया पृथिव्यां
देवी द्वारौ ब्रह्मणा वां धारयामि।
शिवं शग्ममवसानं नो अस्तु
रातं देवेभिः पितृभिर्मनुष्यैः।।३।।

विश्वावसोस्त्वा सदनं कुलायं
गन्धर्वासो वेधसो मह्यमूचुः।
स मा हिंसीः शेवधिं यन्त एतं
शतं हिमाः परि दध्मो मनुष्यम्।।४।।

रुद्रा उत्से सदमक्षीयमाणे
देवा मदन्ति पितरो मनुष्याः।
अयं भागो भागपतिश्च देवा
उर्वीरस्तर्याः शरदस्तरेम।।५।।

---

२ग द्र. शौनकीयचतुराध्यायिका ४.६५ मनुष्यदिति रूपं मनुष्यवदित्यस्य विदधाति। केवलं वा पुस्तिकायां प्रथमं लिखितस्य व-कारस्य पश्चात् लोपः सङ्केतितः। मूलं चिन्त्यम्।

३ कख वा. ऊर्या . . . वां → वान्धारयामि।
का. ऊर्जो * * बरा * देवैर्द्वारो . . .।
गघ का. . . * स्तु रतिं *. . .;
ग उ. . . . सानन्नो * ;

४ का. . . . कुलायां * वेदसो. . . म * हिंसीशूछेवधी * हेतो शन्तं . . . .;

५ क वा, म. * उछे . . . .;
गघ का. यं * भागपतेश्च * . . . स्तर्या . . . स्तरेमा Z२Z
काण्डिकान्ते उ. मङ्गलचिह्नादीनि।

## २.२४

अ.प.१ख१-५ यो अस्मिन् यक्ष्मः पुरुषे प्रविष्ट
इषितं दैव्यं सहः* ।
अग्निष्टं घृतबोधनो
अप स्कन्दयत्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।१।।

यस्त्वा यक्ष्मो देवेषित इषितः पितृभिश्च यः।
तस्मात्त्वा विश्वे देवा मुञ्चन्तु पर्यंहसः।
ते ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।२।।

यत्त्वमेनो अन्यकृतं यदात्मकृतमारिथ
तस्मात्त्वा विश्वा भूतानि मुञ्चन्तु पर्यंहसः।
तानि ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।३।।

---

२.२४.१ क का. यं * * * * ; वा, ज. * अस्मिं . . .; वा. . . पुरुषो * ;
म. * ऽस्मिं;
ख का, उ. * * सह।
गघ का. . . . घृतवोदनो * . . . . त्वति दूरमस्मात्।
घ वा. * स्कन्दयंत्वधि . . .; ज. ऽप स्कन्दयंत्वधि . . .;
म. ऽप . . . .;
ङच का. * न्येन सपृच्छतां त्वमस्मै * सवामसि।
ङ वा, म. * * समृछतां;
अ. प. * ऽस्मिन् यक्ष्म . . . ऽ पस्कन्दनो वि . . . ऽन्येन समृछता
तस्मै. . .।।

२ ग उ. तस्मात्वा . . .; घ वा. मुंचन्तु . . .।
ङच वा, ज . . . स्कन्दयंत्वधि . . .।। का. . . . स्कन्दयत्वधि;
द्र. उ, का. . . दूरमस्मत् इत्यत ऊह्यम्। एवं चतुर्थं मन्त्रं यावत्।
उ. सर्वत्र 'त्त्व' इत्यत्र 'त्व' इति। अन्य एव अपपाठा अधो दर्शिताः।

३ का. यत्वमेनोन्यकृतं यदात्वमकृतमाहृतः तस्मात्वा . . . स्कन्दयत्वधि;
ज. . . स्कन्दयंत्वधि।।

यत्त्वा स्व आदृशा यद्वा चकार निष्ट्यः।
तस्मात्त्वा पृथिवी माता मुञ्चतु पर्यंहसः।
सा ते यक्ष्ममप स्कन्दयत्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि।।४।।

अपस्कन्देन हविषा यक्ष्मं ते नाशयामसि।
शौ.८.५.५.कख तदग्निराह तदु सोम आह
बृहस्पतिः सविता तदिन्द्रः।
ते ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन +समृच्छतां तमस्मै प्र सुवामसि।।५।।

## २.२५

अग्न्यग्रा इन्द्रबला आदित्या या युधो विदुः।
युधो अधि प्रतिष्ठिता होत्रा जैत्राय जुह्वति।।१।।

अभियुक्तस्य प्रधनेऽनु योद्धारमिच्छताम्।
हवींष्यग्रे युध्यतां प्रति गृह्णीत जुह्वताम्।।२।।

---

४ का. यद्वा सादृशा . . . निष्ट्या . . . न्दयित्वधि।
क वा. . . . निष्ट्यः। म, ज . . . निष्टियः।
घ उ. मुञ्चन्तु . . . स्कन्दयंत्व(म.यन्त्व)धि।।

५ ख का, उ. यक्ष्मन्ते * । . . .
ङच का. . . यत्वधि . . . मस्मात्; वा, ज. . . यंत्वधि . . .;
छज का. * त्येन मपृच्छतां त्वमस्मै * * zz३z
छ ज. सोऽन्येन . . .; उ. . . . समृछतां;
२.२५.१ का. अग्रेअग्रा . . . य इदो इदुः
* इधि * यहोता * जुहुति।
ज. अग्न्यग्रय . . . जुहृति।।
२ ख-घ का. नयवोर्घारमिच्छतां हवीष्यग्रे विघतां * गृह्णात * ;
ख वा, म. . . . मिछतां। घ ज. . . जुहृतां।
द्र. क उ. ऽ नास्ति।

जेत्रा राज्ञा वरुणेन जेत्रा रुद्रेण केशिना।
भवेन जिष्णुना जयति पर्जन्येन सहीयसा।।३।।

अस्त्रा ताम्रेण बृहता अस्त्रा सर्वेण युध्यता।
गन्धर्वेण त्विषीमता रथेनासमयोधिना।।४।।

सिनीवाल्यनुमतिर्वाहाश्वा निषङ्गिणः।
जयन्तोऽभि प्रेतामित्रान्
साकमिन्द्रेण मेदिना।।५।।

इति द्वितीयकाण्डे पञ्चमोऽनुवाकः

## २.२६

यत् स्वप्ने निजगन्थ यद्वा शेपिषेऽनृतम्।
शौ.१४.२.५६ग अग्निष्ट्वा तस्मादेनसो ब्रह्मा मुञ्चत्वंहसः।।१।।
यदक्षेषु दुद्रोहिथ यद्वा मित्रेभ्यस्त्वम्।
सोमस्त्वा तस्मादेनसो ब्रह्मा मुञ्चत्वंहसः।।२।।

---

३ क-ग का. जयत्रा . . . जयत्रा . . . जयेत ;
कख उ. येत्रा . . . येत्रा * * ;
ग म. . . . जयति → त;

४ का. * तांप्रेण वृंहता * सर्व्येनि *।
* * . . . नाउपयोधिना।
क ज. * ताम्रेण *;
ख वा, ज. श(ज. → स)र्वेण *; म. . . . युध्यतां।
ग उ. . . . द्विषीमता;

द्र. ख < + शरव्येण ?

५ ख वा. -र्वाहाऽश्वा. . .।
गघ का. * भिप्रथतामित्रां . . . . ∠ अनुवाकं ५Z
उ. ऽ नास्ति। म. शाक. . .।। २५।।ऋ ५।। अ ५।।

२.२६.१ क का. * * निजगत्थ; ख उ. ऽ नास्ति।
ग का. . . ध्यात्तस्मा . . .;

२ क का. . . . हितं; वा. . . हित → थ;

यत् कुमारः कुमारेषु यद्वा ज्यायस्तरेषु च।
नीविं यत् कृत्वा शेपिषे तत् कृण्मो अगदं शिवम्।।३।।

शौ.७.६५.१
पै.५.२३.४ प्रतीचीनफलो हि त्वमपामार्ग बभूविथ।
शौ.४.१९.७ग्रः सर्वान् मच्छपथाँ अधि वरीयो यावया त्वम्।।४।।

शौ.४.१७.८ अपामार्ग ओषधीनां विश्वासामेक इत् पतिः।
तेन ते मृज्म आस्थितमथ त्वमगदश्चर।।५।।

२.२७

शौ.१९.३६.१-६ शतवारो अनीनशद् यक्ष्मान् रक्षांसि तेजसा।
आरोहन् वर्चसा सह मणिर्दुर्णामचातनः।।१।।

शृङ्गाभ्यां रक्षो नुदते मूलेन यातुधान्यः।
मध्येन यक्ष्मं बाधते नैनं +पाप्माति तत्रति।।२।।

---

३ का. यद * . . . रेषुनिमेत * * तशत्कृण्वो * *।
ख उ. . . ह्यायस्तरेषु *। ग म. . . शेपिशे;
४ का. प्रतीदीनिफलं हत्वामपामार्ग बभूव्यथः
सर्वां गच्छपथामधि मर्यो * *।
ग वा, ज. * मछपथाङ् *; म. * मछपथां *;
५ का. प्राअपामार्ग * . . . उत्पति * * मृजुमास्थित . . . श्चरः
z१z
२.२७.१ खघ का. रक्षमां * *। आरोहं * * मणिर्दुनामशातनं;
घ वा. मणिदु → दूर्ण्णाम. . .।।
ज, म. . . दुर्ण्णाम. . .।।
२ क का. सा. अ.। ख म. मूळेन *।
घ का. . . पप्माति *। उ. . . पाप्माधि तत्रत।।
(ज. . . तत्रति?)

ये यक्ष्मासो अर्भका महान्तो ये च शब्दिनः।
सर्वान् दुर्णामहा मणिः शतवारो अनीनशत्।।३।

शतं वीरानजनयच्छतं यक्ष्मानपावपत्+।
दुर्णाम्नः सर्वान् हत्वा अप रक्षांसि धूनुते।।४।।

हिरण्यशृङ्ग ऋषभः शातवारो अयं मणिः।
दुर्णाम्नः +सर्वांस्तृड्ढ्वा अप रक्षांस्यक्रमीत्।।५।।

शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां शतम्।
शतं श्वन्वतीनां शतवारेण वारये।।६।।

---

३ ख का. सा. अ.। ज. * * * शद्धि → विनः।
द्र. ज. अक्षराङ्कनं सदोषम्।
ग वा, ज. सर्वां . . .; वा. . . . दुण्णांमहा *;
का. * दुन्नामहा *;
४ का. * वीराणिजनय: . . यक्ष्मान्नमावपत्;
गघ का. नास्ति।
ख वा. - छतं . . .। उ. . . नपावयत्।
ग वा. . . हत्वा → तृढ्वा ;
घ वा. -'सि-धू'- इत्येतयोरुपरि 'श' इति।
५ का. कख नास्ति।
क वा. . . शृङ्गो → ङ्ग *; म. . . शृङ्गि *;
ज. . . . शृङ्गो *;
गघ का. दुन्नाम्निस्सर्वाम्निढ्वा * . . . स्यपक्रमीम्।
ग वा. * सर्वान् तृढ्वा → हत्वा;
म, ज. . . सर्वान्तृढ्वा
६ क का. सा. अ.।
ग का. * सुन्वतीनां;

२-४ शौ.६.७१.१,३,२ २.२८

मै.४.११.१.२२द्रः विश्वं विव्यज्मि पृथिवीव पुष्ट-
मादायत् प्रति गृह्णाम्यन्नम्।
वैश्वानरस्य महतो महिम्ना-
पै.२०.१५.१घ ग्निष्टद् विश्वादगदं कृणोतु।।१।।

तै.आ.२.६.(१२)द्रः यदन्नमद्मि' बहुधा विरूपं
तु.पै.२०.१५.१ हिरण्यमश्वमुत गामजामविम्।
वैश्वानरस्य महतो महिम्ना-
ग्निष्टद् विश्वादगदं कृणोतु।।२।।

तै.आ.२.६(११)द्र. यदन्नमद्म्यनृतेन' देवा
दास्यन्नदास्यन्नुत वाकरिष्यन्।
वैश्वानरस्य महतो महिम्ना-
ग्निष्टद् विश्वादगदं कृणोतु।।३।।

---

२.२८.१ का. * विज्मि पृथिवव पुष्टमायदायतु . . . विश्वासुहितं *।
ख म. -मादाय. . .।
क-ग मै. * विव्याच . . . पुष्टमन्यमन्यत् प्रतिगृभ्णात्यायत्। * * *;
२ क का. . . मद्भिर् * * व्यासु; म . . . मज्मि वहुदा → धा *;
वा. . . मज्मि म → वहुधा *; ज. . . मज्मि * *;
ख ज. . . मयामविं। उ, का. गघपादौ ऊह्यौ।
२घ, ३घ, ४घ शौ. अग्निष्टद्धोता सुहुतं *।।
३ का. . . मद्म्यानृतेन * उदास्यनुत . . . ।
उ. . . . मज्मिनृतेन * . . . स्यंनुत . . . ।
का, उ. गघ नास्ति।

यन्मा हुतं यदहुतमाजगाम
यस्मादन्नान्मनसोद्गारजीमि।
वैश्वानरस्य महतो महिम्ना-
ग्निष्टद् विश्वादगदं कृणोतु।।४।।

जमदग्निः कश्यपः स्वाद्वेत-
द्भरद्वाजो मध्वन्नं कृणोतु।
प्रतिग्रहीत्रे गोतमो वसिष्ठो
विश्वामित्रो नः प्र तिरात्यायुः।।५।।

## २.२६

अग्ने यज्ञस्य चक्षो।
इदं वेदाम यथेदं भविष्यति स्वाहा।।१।।
अग्ने यज्ञस्य श्रोत्र।
इदं वेदाम यथेदं भविष्यति स्वाहा।।२।।
अग्ने यज्ञस्य प्राण।
इदं वेदाम यथेदं भविष्यति स्वाहा।।३।।
अग्ने यज्ञस्यापान।
इदं वेदाम यथेदं भविष्यति स्वाहा।।४।।
अग्ने यज्ञस्यात्मन्।
इदं वेदाम यथेदं भविष्यति स्वाहा।।५।।

---

४ ख-घ का. यस्मादन्नमनसो . Z यदूदेवानां चक्षुषाकशीनाग्निष्टद्धोता सुहुतं *।

५ क का. . . . कस्यपस्साद्वेत-; उ. यमदग्निः . . .; म. शाद्वेत-;
ग का. प्रतिगृहित्रे *; उ. . . वशिष्ठो;
घ का. * * * तिरन्त्यायुः ; द्र. अधः "पाठेन प्रतिराधायुः zz३zz" इति।

२.२६.१ का. * * चक्षुरेदं विदामि . . . स्वहा। पत्रस्य वामतः 'अग्निऋचां' इति।

२-५ उ. का. खग पादौ न स्तः। म. ३, ४ अग्ने इति नास्ति।
का २ . . . श्रोत्रं; ४. . . स्यापनः; ५ . . . स्यात्मं;

अग्ने यज्ञस्य सर्व।
इदं वेदाम यथेदं भविष्यति स्वाहा। ।६। ।

२.३०

ऋ.१.८९.२ देवानां भद्रा सुमतिर्ऋजूयतां
देवानां रातिरभि नो नि वर्तताम्।
देवानां सख्यमुप सेदिमा वयं
देवा न आयुः प्र तिरन्तु जीवसे। ।१। ।

३ तान् पूर्वया निविदा हूमहे+ वयं
भगं मित्रमदितिं दक्षमस्त्रिधम्+।
अर्यमणं वरुणं सोममश्विना
सरस्वती नः सुभगा मयस्करत्। ।२। ।

ऋ.१०.१५.२ इदं पितृभ्यो नमो अस्त्वद्य
शौ.१८.१.४६ ये पूर्वासो ये परासः परेयुः।
पै. १८.६१.६ ये पार्थिवे रजस्या निषत्ता+
ये वा नूनं सुवृजनासु दिक्षु। ।३। ।

---

६ . . . विदामि . . . z४z सस्वरा काण्डिका।

२.३०.१ का. सा. अ.।

२ का. . . . हूमते * *. . . दितिर्दक्षमस्त्रिधिं अर्यम्नं. . .।
क वा, म. . . नविदा हुर्महि *; ज. तान * * हुमहे *;
ख उ. . . . यक्षमसृधं।

३ क वा. . . . ऽस्त्वद्य; म. * * * स्त्वद्य;
ग का. . . . निषता; उ. . . . निषत्का; वा. . . . जरस्या. . .;
घ का. . . . सुवृजिनासु विक्षु;
द्र. घ ऋ. . . . विक्षु । शौ. दिक्षु।

प्रत्यञ्चो अग्रे शरवः पतन्तु
कृत्याकृते रिपवे मर्त्याय।
क्रव्यादे अत्रिणे मा मीमृणः*
क्रविष्णुमा धेहि निर्ऋतेरुपस्थे।।४।।

मै.४.१४.१७ ज्यायसः शंसादुत वा कनीयसः
सजातिशंसादुत जामिशंसात्।
अनादिष्टमन्यकृतं यदेन-
स्त्वं नस्तस्माज्ञातवेदो मुमुग्धि।।५।।

इति द्वितीयकाण्डे षष्ठोऽनुवाकः

२.३१

इमौ पादौ प्र हराम्या गृहेभ्यः स्वस्तये।
इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रो नः पातु मध्यतः।।१।।

इन्द्रो भयं व्यस्यतु शूद्राश्च* न आर्याश्च*।
इन्द्रः पथिभिरद्रवदसमृद्धा+ अघायवः।।२।।

---

४ का. * * सर्वः * * * मर्त्यायः * तृण * मे मृड
क्रिविष्णुमा . . .;
ख ज. * रीपवे * । ग उ. . . . मीमृण ;
घ ज. 'स्थे' इत्यतः ५ ख 'शं' इत्यवधिकं नष्टम्।

५ कख का. जायस्सश्शँसा. . . सजातश्शंसादुतजमिशंसा;
क वा. ह्यायसः. . .; म. ज्या → ह्यायसः . . .;
ख म. . . . यामिशंसात्। घ उ. स्त्वन्नस्तस्मा . . .।।
द्र. काण्डिकान्ते उ. षष्ठोऽनुवाकः संकेतितः।

२.३१.१ खग का. . . . . * भ्यस्त्वास्तयेन्द्रष् . . .; ख उ. . . . गृहेभ्य *।

२ का. इन्द्रं * विश्वतः शूद्राचनार्याच * . . द्रव असृमृद्धा
घायवः; ज. क-ग 'इन्द्रः' इत्यवधिको भागो नष्टः।
ख वा, म. शूद्राचन आर्याच। ज. नास्ति।
घ वा. -दशमुर्द्धा * ।। म, ज. -दशमृद्धा *।।

इन्द्रो हनिष्यतां वधं वि नः पाशाँ इवाचृतत् । ।३ । ।

शौ.१४.२.८क-ख एमं पन्थामरुक्षाम+ सुगं स्वस्तिवाहनम् ।
येन विश्वाः परि द्विषो वृणक्ति
विन्दते विश्वास्तमेत्यनाहतः । ।४ । ।

परा व्रजतु कृन्तत्यवकां विक्षणन्निव ।
विष्वञ्चो यन्त्वस्य पाला विष्वञ्चः परिपन्थिनः ।
शौ.१.२७.२ ग-घ विष्वक् पुनर्भुवा मनो असमृद्धा अघायवः । ।५ । ।

+स्वस्त्यन्वचाकशं स्वस्ति प्रत्यचाकशम् ।
स्वस्ति पथिषु धन्वसु स्वस्त्यप्स्वन्तः ।

---

३ का. इन्द्रंहष्यतां विधि * * पाशानिवाचरत् ।
ख उ. * * पाशाङ् . . . । ।[1] (वा. एको दण्डः)
४ का. इदमं . . . मदुक्षामसुगो * । यत्र विश्वाः * * * निन्दतेस्वान्तमे . . .;
क म. एवं → मं . . .; उ. . . . मरुक्ष्माम;
५ का. * व्रजत किंतत्तवकांवक्षणन्निव । विश्वञ्चो यन्तशृशफला विश्वंचः परिमन्थिनः विश्वक्पुनर्भवा * असामृद्धाघायवः z
ज क-ग 'तु . . . न्त्व' इति नष्टम् ।
ख वा. . . विक्षणंनिव । । म. . . . विक्षिणंनिव । ।
ज. नष्टम् ।
ध वा, ज. * अघायतः → वः । ।
६ का. स्वस्ति व्यचाकशं *'प्रत्युचा . . * परिदिग्धंन्यपुस्वस्त्यप्संतः * * स्वरिज स्वस्तेनसमे भरद्वाजं * . . . यणं z६z अनु ६z
द्र. पत्रस्योपरि 'स्वत्यृचा१' इति
क उ. स्वस्त्यनचाकशं; ग वा, म. * * धन्नसु;
द्र. का. अत्रानुवाकसमाप्तिः । अत उत्तरं का. अनुवाकसमाप्तयः उ. पुस्तिकाभ्यः एकया काण्डिकया अन्तरिताः । वा, का. पुस्तिकयोः मन्त्रसंख्या षडिति सूचितम् । म. नास्ति । ज. तत्र पत्रं भग्नम् ।

परि व्रजं स्वरित स्वस्त्ययनमसि
भारद्वाजं स्वस्ति पुनरायनम् ।।६।।

२.३२

य उत्तरादाजायते मधुघो मधुघादधि।
वेदाहं तस्मिन् भेषजं जिह्वा मधुमती मम।।१।।

*मधुमत्ते पर्णमासा मधु शृङ्गोत पुष्पकम्।
मधुमान् पर्वतासिथ यतो जायस ओषधे।।२।।

शौ.६.९५.३ क गर्भो अस्योषधीनामपां गर्भ उतासिथ।
अथो सोमस्य भ्रातासि मधुघ प्राव मे वचः।।३।।

चृतत् इत्यत्र पादद्वयात्मक एव मन्त्रः समाप्त इति म, ज.। ततो मन्त्रसमाप्तयः असमानाः। ता एवम् -

| | म | ज | वा | का |
|---|---|---|---|---|
| -चृतत् | ।।१ | ।।१ | । | । |
| - वाहनं | । | । | ।। | । |
| - हतः | ।। | ।। | । | x |
| - निव | ।। | भग्नम् | ।। | । |
| - न्थिनः | ।। | । | । | x |
| - यवः | ।। | ।। | ।। | z |
| - कशं | ।। | । | । | x |
| - स्वन्तः | । | ।। | ।। | x |

२.३२.१ क ज. नष्टः पादः। ख का. मधुगोमधुगादधि
का. ये उत्तारात्र्रजायते मधुगो मधुगादधि वेदाह (→ हं) तद् * * * पिव।

२ का. मधुमत्येपौर्णमासिमधोशृङ्गो अध * * पर्वतामसि। * जातस्योषधे।

क उ. मधुमते . . .; < . . . पर्णमास ? "मधुमती पौर्णमासी" Barret; "मधुमत्ते पर्णमासीत्" दुर्गामोहनपादाः।

३ का. * स्योषधी . . . उतासितः * * त्रातासि मधुरा * * वच।

क म. ग → दर्भो ऽस्यो . . .; घ वा. मधुघः. . .।। ज. नास्ति। ज "३ घ मधुघ. . . ४ख पि" इति नष्टम्।

शुनमहं मधुघस्य पितुनमिव जग्रभ* ।
यो मा हिरण्यवर्चसं ⁺कृणवत् पूरुषप्रियम्⁺ । ।४ । ।

शौ.१६.६२.१ प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये । ।५ । ।

२.३३

*ऊध्ना वन हृदा वन मुखेन जिह्वया वन ।
प्रपीना पयसा वन । ।१ । ।

शौ.६.६.१क-ख वाञ्छ पदो वाञ्छ त्वचं
पै.२.६०.२क-खद्रः वाञ्छाक्ष्यौ वाञ्छ सकृथ्यौ ।
शौ.३.१८.६ ग-ङ द्रः क्तूसमनु प्र ते मनो निम्नं वारिव धावतु । ।२ । ।

शौ.६.६.१.ग-घद्रः ऊर्ध्वानि ते लोमानि तिष्ठन्त्वक्ष्यौ कामेन शुष्यताम् ।
पै.२.६०.२ ग-घ द्रः समिद्धत्सेन गौरिव मुद्रा सुरेब पृच्यताम् । ।३ । ।

---

४ का. श्रुणंवहं मधुगस्य पितृणामेव जग्रभः . . . कृणोमि पौरुषंप्रियं ।
ख उ. . . जग्रभः । । घ उ. कृणुवत् पुरुषप्रियं ।

५ ख उ. * राजस * * । घ का. . . उतार्य z१z

२.३३.१ का. उद्ना * . . . वनं; उ. उध्ना. . . । ।

२ का. वाच्छ से पदौ तत्वं वाच्छक्ष्यौ वांच्छ षक्तौ ।
वीच्छमनु * दे वनो . . .z
कख ज. नास्ति । ख म. वाञ्छाक्षी * शकृथ्यौ ।

३ का. . . तिष्ठन्त्यक्षी * शिष्यतं सिमिदवत्सेन . . . उध्नासुरैव पश्यतां ।
कख वा, ज. . .. तिष्ठंत्वक्ष्यौ * * ।

इमा गावः सबन्धवः समानं वत्समक्रत।
+हिङ्ङिति करिक्रतीराद्धारानिरमवश्वसा। ।४। ।

शृङ्गैपशा गलभूषा अघ्न्याश्चर्मवासिनीः*।
शौ.६.६.३ग गावो घृतस्य मातरस्ता वत्से वानयामसि। ।५। ।

२.३४

यश्च वर्चः कन्यासु यश्च हस्तिष्वाहितम्।
हिरण्ये गोषु यद्वर्चस्तस्य भक्षीय वर्चसः। ।१। ।

यश्च वर्चो राजरथे यश्च राजस्वाहितम्।
निष्के रुक्मे च यद्वर्चस्तस्य भक्षीय वर्चसः। ।२। ।

यदप्सु यद्वनस्पतौ यदग्नौ यश्च सूर्ये।
यज्ञे यद् दक्षिणायां वर्चस्तस्य भक्षीय वर्चसः। ।३। ।

---

४ ख उ. * वत्समकृतः।
गघ का. हिङ्ङति कनिक्रती . . . निरविद्वसा;
ग उ. हिं इति . . . .;
घ वा . . . निरमिवश्वसा। ।
ज. ४घ - ५ख "-रम . . . र्मवा-" इति नष्टम्

५ का. शृङ्गोपसा * . . . सिनी। गवो . . . ZRZ
क वा. * वालतु → तूषा; म. * वालभूषा; ज. नष्टम्।
ख वा. . . वाशिनी। म, ज. . . वासिनी।
घ वा. . . . वस्ते → त्से * । । ऋ ५ । । ३३ । ।
क द्र. उ. 'वालभूषा' इति पाठः सन्दिग्धः। उ. पुस्तिकासु 'ग' 'वा' अक्षरयोः कथञ्चित् सादृश्यं लक्ष्यते।

२.३४.१ का. यश्च * * यश्च . . . * षु . . . भक्षीइह *;
ख वा. . . . स्वाहितं।

२ का. यश्च * * र्यश्च . . . * रुक्मे * . . . भक्षीइह *;
२ग-३ख ज "यद्वर्च. . . ग्नौय" इति नास्ति।

३ ख का. . . . यश्च *। ग का. 'यद्' इति नास्ति।
घ का. * भक्षीइह *;

वर्चस्वन्मे मुखमस्तु वर्चस्वदुत मे शिरः।
वर्चस्वान् विश्वतः प्रत्यङ् वर्चस्वान् वर्णो अस्तु मे।।४।।

सुभागं* मे मुखमस्तु सुभागमुत मे शिरः।
सुभागो विश्वतः प्रत्यङ् सुभागी वर्णो अस्तु मे।।५।।

२.३५

ऋ.१०.१५९.१ क उदसौ सूर्यो अगात् सहावतुना मम।
शौ. १.२९.५ क
शौ.१.३४.४ ख अहं ते मधुमती मधुघान्मधुमत्तरा।।१।।

शौ.६.१.१८ यद्गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु।
शौ.६.६९.१ ग-घ सुरायां सिच्यमानायां कीलाले अधि यन्मधु तेन मधु तन्मयि।।२।।

शौ.६.७०.१ क-ख यथा सुरा यथा मधु यथाक्षा अधि देवने।
शो.६.१०२.१ ग यथाह गव्यतो मन एवा मामभि ते मनः।।३।।

---

४ का. वर्चस्वान्मे . . . स्वतांदु * * वर्चस्वां * * वर्चस्वां * स्तु * z
घ वा * * स्तु * ।। म. . . . ऽस्तु *।।

५ क का. सुभगं . . .; उ. सुभाग * . . .;
ग वा. . . . प्रंत्यक् → ङ्; म. . . . प्रत्यक्; गघ ज. . . प्रत्यक्सु → प्सु . . . ।।
घ म. . . ऽस्तु *।। ३४।।ऋ।। का. . . .स्तु * z२z

२.३५.१ क का. सा. अ.। म. . . . ऽगात् . . .। ख का. सहवत्तना *।
ग म, ज अहन्ते . . .; घ का. मधुगां *।

२ क का. सा. अ.।
घङ का. 'अधियन्मधुतेन' इति नास्ति।
घ वा. * * जन्मधु; ज. * ऽधि जन्मधु;
म. * ऽधि. . . .;

३ घ वा. . . ते → तो *।। का. * सामभि * *।।

शौ.४.३६.१०ख आ ते पदं पदेनादिष्या ते मनसा मनः।
शौ.५.१४.६घ प्रत्यञ्चमग्रभं त्वाश्वमिवाश्वाभिधान्या।।४।।

शौ.६.८६.३; मह्यं त्वा द्यावापृथिवी मह्यं देवी सरस्वती।
पै.२.६०.५ क-ख मह्यं त्वा मध्यं भूम्या उभावन्तौ समस्यताम्।।५।।

इति द्वितीयकाण्डे सप्तमोऽनुवाकः

## २.३६

या वैश्वदेवीरिषवो+ या वसूनां
या रुद्रस्य सोमस्य या भगस्य।
विश्वे देवा इषवो यावतीर्व-
स्ता वो अग्निना शर्मणा शमयामि।।१।।

या आदित्यानामिषवो या वसूनां
या रुद्रस्याश्विनोर्यावतीस्ताः।
विश्वे देवा इषवो यावतीर्व-
स्ता वो देवः सविता शमयाति।।२।।

यास्ते अग्न इषवो वात यास्ते
ऽपामदित्यामुत या मरुत्सु।

---

४ का. या * * पदेनऋष्यतं * * प्रत्यंचमग्रभं त्वा अश्वमिवा . . .।
घ म. . . . विधान्या।।

५ घ वा. . . . समश्वतां।। म. . . समस्व → श्वतां।।
ज. . .समस्वतां।। काण्डिकान्ते उ. ऋ ५।।३५।।अ ७।।

२.३६.१ क उ. * वैश्वदेवीऋषभो . . .; का. * . . . रिषावो. . . .;
घ म. . . ऽग्निना. .।। वा. . . शमयामि → ति।।

२ कख का. * आदिदेवीरिषवो * * * रुद्रस्यश्विनो यावतीस्ताः;
क उ. य. . .;

३ का. यस्तेग्निषवो * याते अपामुश्छित्यामुत वा *। इन्द्रस्य * वरुणस्य
* * वत् * * *।
ख उ. ऽ नास्ति। वा. . . . मरुघु।

इन्द्रश्च साम्ना वरुणश्च राजा
ता वः सूर्यो बृहता शमयाति । ।३ । ।

मा वृक्षमज्यादित्येभ्यो मा वसुभ्यो
मा रुद्रायाग्नये पार्थिवाय ।
इन्द्रस्य शुचो वरुणस्य याः शुच-
स्ता वो देव्यदितिः शमयाति । ।४ । ।

याश्च वाते विष्वग्वाते याश्च रुद्रस्य धन्वनि ।
अग्निष्टा वसोरीशानः सर्वास्ता भेषजाः करत् । ।५ । ।

२.३७

चित्तिं यजामि मनसा चित्तिं देवाँ ऋतावृधः ।
जातवेदः प्र णस्तिराग्ने विश्वाभिरूतिभिः । ।१ । ।

---

ग म. . . . वरुणश्च → स्य *; द्र. पाठः संशयितः ।
घ वा. * वत् . . . । ।
४ का. * वृह्यादित्यो * * * . . . ।
* * * याशुचिस्ता . . . ।
क वा. * वृक्षमय्यादित्येभ्यो . . . ;
म. * वृक्षमह्या . . .; उ. . . . पशुभ्यो ;
< मा वृक् + समज्या + आदित्येभ्यो. . .?
मा वृक्षम् अद्य* आदित्येभ्यः ? तु. मा ज्यायसः शंसमा वृक्षि देवाः
ऋ. १.२७.१३
५ का. यश्च * . . . यश्च * * । अग्नि ष्ट्व वसोरीराशानस्त्वा
सर्वाभेषजष् * z५z अनुवा ७z
ख उ. . . . रुद्रश्च * ।
ग ज. अग्निष्ठा . . .;
२.३७.१ का. * यत्तासि * चित्तिन् * * * णस्तिर अग्रे विश्वामरुद्भिः;
उ. चित्तं * * चित्तं देवाङ् * ।
घ वा, म. . . . रुतिभिः । । ज. . . . रु → रूतिभिः । ।

यावयास्मद् द्वेषांसि यवमयेन हविषा।
तु.पै.३.८.४ ग　यस्ते *त्रित दुःस्वप्न्यस्य भागः
शौ.१६.५७.३घ द्रः स +त एष तं त एतं प्र हिण्मः।।२।।

शौ.१६.५७.१ ६.४६.३　यथा कलां यथा शफं यथर्णं संनयन्ति।
पै.३.३०.१ ऋ.८.४७.१७क-घ　एवाह दुःस्वप्न्यं सर्वमप्रिये सं नयामसि।।३।।

अररो है शतमद्य गवां भक्षीय शतमजानां
शतमवीनां शतमश्वानां शतं पुरुषाणाम्।
तत्रापि भक्षीयामुमामुष्यायणममुष्याः पुत्रम्।।४।।

तमहं निर्ऋतये प्र यच्छामि
तं मृत्योः पाशे बध्नामि।
स बद्धो हतो अस्तु स ततो मा मोचि।।५।।

---

२　का. यवयायवयास्स * * * . . . मृतद्विष्वप्रीयस्य भावस् * तेतु दन्त * * *;
ग　उ. . . तृत. . . .; म. . . . दुःष्वप्न्यस्य *;
घ　उ. सच * * * (तन्त म.) * * *।।
त्रित इति शोधे दुर्गामोहनपाद कृता टीका, "त्रित आप्त्यस्तस्मै प्रहितं दुष्ष्वप्न्यं धारयतीति वैदिकी प्रसिद्धिः। तु. ऋ. ८.४७.१५: त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दध्मसि। शौ. १६.५६.४: त्रिते स्वप्नमदधुराप्त्ये"।

३　क　वा. यथां . . .;
ख　वा. . . संन → न्नयन्ति। म. . . . सन् *। ज. . . त्सं *।
ख-घ　का. यथर्णोसोन्न . . । एवा दुस्स्वप्न्यंसर्वसप्रियेसुन् * z

४　का. * हीश् . . . गगवां * . . . ; म. शतमयानां;
का. पुरुषाणां इत्यतः पूर्वं 'शतं' इति नास्ति।
ङ-च　का. . . . भक्षया. . .पत्रं

५　का. . . . प्रेक्ष्यामि * * पाशय बध्यामि * * * स्तु। . . . मोचिः z१z
क　वा. . . . . निऋतये . . .; वा, ज. यछामि;
ग　म. . . . स्तु;

## २.३८

ये नः शपन्त्यप ते भवन्तु
वृक्षानिव वृक्तां अति तां अयाम।
शौ.१२.२.३०ख, पै.१७.४६.१०ख द्राघीय आयुः प्रतरं दधाना
पै.४.३१.४घ वयं देवानां सुमतौ स्याम।।१।।
कृत्याकृतं प्रत्यवसानदर्शनमग्रे प्रति स्म बुध्यस्व।
प्रति स्म देव तं दह।।२।।
पै.७.१.६ यस्त्वा कृत्ये प्रतिघाय विद्वाँ अविदुषो गृहम्।
शौ.५.१४.४ घ पुनस्त्वा तस्मा आ दध्मो यथा कृत्याकृतं हनत्।।३।।
शौ.५.१४.४क-ख पुनः कृत्यां कृत्याकृते हस्तगृह्य परा णय।
उतो तमुत सा पुनस्तर्द इव सदनं स्वम्।।४।।
शौ.६.३७.१घ कृत्या यन्तु कृत्याकृतं वृकीवाविमतो गृहम्।
स्तोकं पाकस्य वर्धतां सुवृष्ट ओषधीरिव।।५।।

---

२.३८.१ ख-ग का. वृक्षान्व वृक्तां अपि * जयाम। द्रघीय (←भ्राजीय) * प्रतिरं दधानां ;
ख वा. . . वृक्तां → क्ता * * *। म. . . ताङ् *।
२ का * पयस्वानदर्शत अग्रेः। प्रत्यस्वनु बुद्ध्यस्व * * रैव * दहः।
ख म. . . वु → विध्यस्व।
३ गघ का. . . . स्मा दधिमो * कृकृतं हनः;
घ म. . . . हनत् → नः।।
४ कख का. सा. अ.।
गघ का. * त्वमुत्तमा . . . स्ततर्मैव सुदनैं *।
घ वा. * तमुत्त → त * . . . .; ज. * तमुत → त्त * . . .;
५ ख उ. मृग इवाभिमतो *।
द्र. +वृक इवावि . . . इति शोधो ध्येयः।
गघ का. * पाकस्व * मवृवृष्ट। . . .।

२.३६

पै.२४.१ यत्ते ग्रावा बाहुच्युतो अचक्रो-
तै.ब्रा.३.७.१३.१-३ न्नरो यद्वा ते हस्तयोरधुक्षं।
तत्त आ प्यायतां तत्ते नि ष्ट्यायतां सोम राजन्।।१।।

यत्ते ग्राव्णा चेच्छिदुः+ सोम राजन्
प्रियाण्यङ्गानि सुकृता पुरूणि।
तत् सं धत्स्वाज्येनोत+ वर्धयस्वा-
नागसो यथा सदमित् संक्षियेम।।२।।

यां ते त्वचं विभिदुर्यां च योनिं
यद्वा स्थानात् प्रच्युतो यदि वा सुतोसि।
त्वया सोम क्लृप्तमस्माकमेत-
दुप नो राजन् सुकृते ह्वयस्व।।३।।

---

२.३६.१ कख का. . . . चक्रो नरो . . . ; द्र. 'न' इत्यत्र न्न? इति शोधः। मुम्ब 'नरो' इति।
वा. . . . ऽचक्रोन्नरो . . .। ज. . . . वाहुच्यु → च्यतो . . .।
ख म. . . . रुधुक्षं।
गघ का. तत्ता * उत्ते * * * * z

२ का. . . चिचृदस् * राजिन् . . . ण्यङ्ग * परोणि। * * जत्स्वा जेनेतो . . . अनागमा . . . zzz ओँ
अनागमो यथा सदमित्संक्षियेम;
क वा. यन्ते . . .; उ. चेछिदुः;
ख म. प्रियान्य. . .।
ग वा. . . ध → गत्स्वाह्येनो . . .; म, ज. . . धत्स्वाह्येनो . . .;
घ उ. मन्त्रान्ते मङ्गलचिह्नानि

३ क का. * * * बभ्रुतांतयोनिर्हृद्यां स्थाना * दिवा . . . तस्मै ते * लुप्तमस्माकमे . . .।
क उ. यान्ते . . .; वा, ज. . . यांञ्च *;
ग वा. * * कृप्तमस्मा . . .;

सं प्राणापानाभ्यां समु चक्षुषा
सं श्रोत्रेण गच्छस्व सोम राजन्।
यत्ते विरिष्टं समु तत्त एत-
आनीताग्नः संगमने पथीनाम्।।४।।

अह्नाः शरीरं पयसा समे-
त्यन्योअन्यो भवति वर्णो अस्य।
तस्मै त इन्दो+ हविषा विधेम
वयं स्याम पतयो रयीणाम्।।५।।

अभि क्षरन्ति जुह्वो घृतेना-
ङ्गा परूंषि तव वर्धयन्ती।
तस्मै ते सोम नम +इद्वषड्
वोप नो राजन् सुकृते ह्वयस्व।।६।।

---

४ का. ** सं *** गच्छस्य . . . । . . . विलिष्टं . . . तन्वयत्तआनीतां . . .;

क उ. . . सम *; ख वा, ज . . . गछस्व. . . ।

५ का. अहश् ** समेत्वन्योन्यो * वरुणोस्य। * तदो * विधेमः . . .;

ख म. . . . न्योऽन्यो . . . । ग उ. ** इन्द्रो . . .;

६ का. अभ्यक्षरन्ति जिह्वोघृतेनागा परूंषि त *। **** यद्विषड्वप * राज *** z३z

क वा. ** जिह्वो . . .; म. * क्षर(→रक्ष)न्ति . . .;

ख वा. . . . वर्धयन्ति।

गघ वा, ज. *** इड्वषड्वो उ → दुप . . . ।।ऋ ६।।३६।।

म. . . . इड्वषड्वोप (→उप) . . . ।।३६।।ऋ।।

द्र. ख वर्धयन्तीः इति शोधो ध्येयः।

२.४०

इहेत देवीरयमस्तु पन्था
अयं वो लोकः शरणाय साधुः।
इदं हविर्जुषमाणा उदेत
क्षिप्रा राज्ञा वरुणेन प्रसूताः।।१।।

इहैतु राजा वरुणोजिराभि-
र्देवो देवीभिर्हविषो जुषाणः।
कृणुष्व पन्थामुदयानमूर्मिभि-
रनेन बभ्रो महता पृथिव्याः।।२।।

प्रिये ध्रियध्वमुत या न मुञ्चती-
रोकैघानामिह राराणीतु।
अनेन वेगानसृजत् प्रजापति-
रिह ध्रियध्वं शरणं सरस्वतीः।।३।।

---

२.४०.१ क का. इहत . . . पन्थ;
ख वा, ज. अयम्वो . . . ।
वा. . . स → शरणाय * । म. . . . सरणाय * ।
गघ का. . . . मानाउदित * ज्ञा * प्रसूता z
घ वा. क्षि → क्षीप्रा . . . प्रसुताः।।

२ का. इहत * * ददाभि . . देवेषु * जुषाताः * . . मदयान्मूर्मिभि . . . पृथिव्याम्;
ख म. * देवी → वेभि . . .। ज. * देवे → वीभि . . .।

३ का. प्रियद्ध्रियद्ध्मदयानभुञ्जतीरोकोघानामिह राणीतु;
द्र. का. गघ नास्ति।
क ज. * . . . मुत → दयान . . .; ज, म. . . . मुञ्जती- ;
ग वा. * . . . सृजत् → त प्रजापती-;
म. * . . . सृजत प्रजापती-; ज. . . प्रजापति → ती-;
घ वा. . . . सरस्वतीः → ती।।

द्र. कख पाठः सन्दिग्धः। < उदयानमुञ्छतीरेकौघानाम् ?

इह वो जूतिर्ध्रियतां समा-
न्यपामग्नीनां वरुणस्य सोम।
अनेन वेगानसृजत त्विषीमतो-
हिंस्राञ्छम्भूनजिराँ अतृष्णजः।।४।।

ये पारतो मध्यतो ये ते अन्तयो
अप्सुषदो निहितास्तीरे अग्नयः।
ते देवजा इह नो मृड्य-
न्त्वापश्च जन्मन्नुभये सवन्तवः।।५।।

शौ.३.१३.७ इदं व आपो हृदयमयं वत्स ऋतावरीः।
इहेत्थमेत शक्करीर्यत्रेमं* वेशयामसि।।६।।

**इति द्वितीयकाण्डे अष्टमोऽनुवाकः**

---

४ कख का. नास्ति।
क म. ** जूति . . .;
ग का. अनेने वेगां॰जतद्विषीमतोजह्योस्रांशभूंअजनां अधृष्णतः।
घ उ. हिंस्रांछंभूनजिराङ् अतु (वा. → तृ) ष्णजः।।
५ का. . . . चयन्तये अप्सुमदोनिहता . . . मृडुन्नापश्चाजिह्व (→न्च) नुभयेसबन्धवः;
ख वा, म. ऽप्सुषदो . . . .।
गघ वा, ज. . . मृडयंत्वाप. . . . .;
घ उ. . . .जन्मंनुभये . . .।। ज. . . सम → वन्तवः।।
६ का. ** वापो . . . वस्वरितावरी
इहत्वामेत शक्वरी यत्रैवं * z४z
क वा. इदम्व . . .; ख उ. . . . उतावरीः।
गघ म, ज. . . शक्वरीयत्रेमं *।।ऋ६।।४०।।अ८।।
वा. . . . रीयत्रेमम्वे . . .।। ऋ ५।।. . . .

## २.४१

ऋ.१०.१५९. १-५
आ.म.१.१६.१-५ उदसौ सूर्यो अगादुदयं मामको भगः।
तेनाहं विद्वला पतिमभ्यसाक्षि विषासहिः।।१।।

अहं केतुरहं मूर्धाहमुग्रा +विवाचनी।
ममेदपि क्रतुं पतिः सेहानाया उपाचरात्।।२।।

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्।
उताहमस्मि संजया पत्यां मे श्लोक उत्तमः।।३।।

येन देवा असुरेभ्योभवन् *द्युम्नवत्तराः।
ऋ.१०.१७४.४गघ इदं तदक्रि देवा असपत्ना किलाभुवम्।।४।।

असपत्ना *सपत्नघ्नी जयन्त्यभिभूवरी।
मुष्णाम्यन्यासां भगं वासो अस्थेयसामिव।।५।।

---

२.४१.१ कख म. . . . ऽगादु . . .।
घ वा, म. . . विषासहि।। ज. . . . विषासही।।

२ का. . . . मूर्ध्वा अहमुग्रा विषादनि।
नमेदपक्रदं . . . उपचरा।
क उ. * . . . रहमूर्द्धा - ;
ख वा. . . . मिवाच → चिनी। म, ज. . . मिवाचनी।

३ ख का. वो * * *। वा. ऽ नास्ति।
घ का. पत्यार्मे . . .; वा, ज. . . श्लोकमुत्तमः।।
म. पत्याम्मे श्लोक उ → मुत्तमः।।

४ का. * देवास् सुरेभ्योभवन्तिमर्मत्तरा * उतक्र * सपत्ना . . .;
वा. कख नास्ति।
ख म, ज. -भवन्त्युम्नवत्तरा।
ग उ. . . रेवा ;

५ कख का. सपत्नासपत्न्यघ्नीजयत्यभि . . .;
उ. * सपत्न्यघ्नी; ख ज. जयंत्यभि . . . ।
क द्र. -त्न्य - इत्यस्य सर्वत्र दृष्टत्वेऽपि 'जयन्त्य'- इत्यत्रदृष्टयकार-
प्रभावानुमानेन सपत्नघ्नी इति शोधः कृतः।
घ का. वामोयस्तेयशामिव z५z अनु ८z

## २.४२

शौ.२.२४.१ शेरभक शेरभ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त।।१।।

शौ.२.२४.२ शेवृधक शेवृध।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त।।२।।

शौ.२.२४.४ सर्पानुसर्प।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त।।३।।

शौ.२.२४.३ म्रोकानुम्रोक।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त।।४।

द्र. शौ.२.२४.५-८ जूर्णभरूज्यर्जुन्युपब्दो।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त।।५।।

---

२.४२.१ क का. षरभकषेरशभ; वा, म. शेरभक् *।
खग का. सा. अ.।
घ-च का. * * दमत्त * वप्राहीतमुत्तम्मासांसामन्यता;
उ. * स्थितमत * * प्राहैतमत * . . .।।
वा. . . . मांसा → सांन्यत्त।।

२ का. शेवृकशेवृध; उ. शेवृधक् * ।।
उ, का. द्र. २-७ ख-च-पादा ऊह्याः।

३,४ का. सा. अ.।

५क,घ-च का. ज्यर्ण्यत्रोजर्जुन्वपप्रदो; * * दमत्त * न प्रा। हीतमुत्व स्मामांसाण्यत्ता z१z
उ. जूर्ण्णभरू (वा, ज. रु) ह्यर्जून्यु (वा. न्य) पव्धो।
* स्थितमत * * प्राहैतमत . . .।।ऋ५।।४२।।

### २.४३

शौ.२.१६.२ द्यावापृथिवी उपश्रुतये मा पातं स्वाहा।।१।।
धनायायुषे प्रजायै मा पातं स्वाहा।।२।।
शौ.२.१६.१ प्राणापानौ मृत्योर्मा पातं स्वाहा।।३।।
शौ.२.१६.३ सूर्य चक्षुषे मा पाहि स्वाहा।।४।।
शौ.२.१६.४-५प्र: अग्ने विश्वम्भर विश्वतो मा पाहि स्वाहा।।५।।

### २.४४

शौ.२.१७ प्र: आयुर्दाग्निरायुर्मे दात् स्वाहा।।१।।
वर्चोदाग्निर्वर्चो मे दात् स्वाहा।।२।।
तेजोदाग्निस्तेजो मे दात् स्वाहा।।३।।
सहोदाग्निः सहो मे दात् स्वाहा।।४।।
बलदाग्निर्बलं मे दात् स्वाहा।।५।।

### २.४५

शौ.२.१७.४ आयुरस्यायुर्मयि धेहि स्वाहा।।१।।
वर्चोऽसि वर्चो मयि धेहि स्वाहा ।।२।।
तेजोऽसि तेजो मयि धेहि स्वाहा।।३।।

---

२.४३.१ का. द्याव . . . उपश्रुते . . .।
२-३ म, ज स्वाहेत्यूह्यम्।
४ उ. . . . पाति * ।। का. * चक्षुषी . . .
५ उ. अग्नये विश्वंभर . . .।।ऋ५।।४४।।
२.४४ का. आयुर्माअग्नि आयुर्मेधा * . . . . ग्रे . . . धा * . . . . धा *।
. . अग्नेस् * * * धा *। . . . अग्निर्बलं * स्वाहा z३z
२-४ म, ज. . . मे।।
२.४५.१ का. . . स्याआआयुर्मे * *।
२-४ वा, ज. ऽ नास्ति। म, ज. 'धेहिस्वाहे' त्यूह्यम्।

शौ.२.१७.२ सहोऽसि सहो मयि धेहि स्वाहा.।४।।
शौ.२.१७.३ बलमसि बलं मयि धेहि स्वाहा।।५।।

**इति द्वितीयकाण्डे नवमोऽनुवाकः**

## २.४६

शौ.२.१८.४ द्रः पिशाचक्षयणमसि पिशाचजम्भनमसि स्वाहा।।१।।
यातुधानक्षयणमसि यातुधानजम्भनमसि स्वाहा।।२।।
शौ.२.१८.५ द्रः सदान्वाक्षयणमसि सदान्वाजम्भनमसि स्वाहा।।३।।
शौ.२.१८.२ द्रः सपत्नक्षयणमसि सपत्नजम्भनमसि स्वाहा।।४।।
शौ.२.१८.१ द्रः भ्रातृव्यक्षयणमसि भ्रातृव्यजम्भनमसि स्वाहा।।५।।

## २.४७

आ ते सौवीर्यं ददे मयि ते सौवीर्यम्।।१।।
आ ते सौवर्चो ददे मयि ते सौवर्चः।।२।।
आ ते सौतेजो ददे मयि ते सौतेजः।।३।।
आ ते सौनृम्णं ददे मयि ते सौनृम्णम्।।४।।
आ ते सौशुक्रं ददे मयि ते सौशुक्रम्।।५।।

## २.४८

शौ.२.१९.१ अग्ने यत्ते तपस्तेन तं प्रति तप
योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।१।।

---

४ वा. . . ममइ * *।।
५ का. बल्लमसि . . . धेंधे * ४zz
२.४६. का. सर्वत्र 'क्षीणमसी'ति।
२-४ म, ज. - मसि स्वाहेत्यूह्यम्।
द्र. का. पत्रस्य वामपार्श्वे 'रक्षामन्त्रंवाअग्निः'।
२.४७ २-४ म. आ इत्यूह्यम्।
का. 'आ ते' इत्यस्य स्थाने 'अ' इति।
२.४८.१ क का. ओँ अग्न. . . .;
गघ वा, ज * अस्मां. . .।। म. * ऽस्मां. . .।। का. सा. अ.।
घ का यंचवयन् * z

शौ.२.१९.२ अग्ने यत्ते हरस्तेन तं प्रति हर
योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।२।।

शौ.२.१९.४ अग्ने यत्ते शोचिस्तेन तं प्रति शोचय
योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।३।।

शौ.२.१९.३ अग्ने यत्तेऽर्चिस्तेन तं प्रत्योषय
योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।४।।

अग्ने यत्ते ज्योतिस्तेन तं प्रति दह
योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।५।।

२.४६

प्राची दिग् गायत्रं देवता। यद्देवेषु पितृषु मनुष्ये-
ष्वेनश्चकारायं त्वं तस्यावयजनमसि।
मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा।।१।।

दक्षिणा दिग् रथन्तरं देवता। यद्देवेषु पितृषु मनुष्ये-
ष्वेनश्चकारायं त्वं तस्यावयजनमसि।
मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा।।२।।

---

२-४ का, म, ज. 'अग्ने यत्' इति, द्वितीयश्चार्धः नास्ति।

२-३ वा. द्वितीयार्धो नास्ति।
का. ३ख . . . शोच, ४ख . . . प्रत्यर्च। अन्येऽपपाठाः सामान्याः।

४ क ज. ते अर्चिस्तेन . . . ;

५ क उ. योऽस्मां . . .।। घ का. यंच * * z२z

२.४६.१ २यं वाक्यम्. का. . . ष्येशुनश्चकारायत्तं तस्यावेदनमसि z स्वं
(→मुं) चेममस्माद्यक्षतस्मादामयेतु * ।
म. . . . रायन्त्वं. . .।।
३य. उ. . . . स्माह्यक्ष्मा. . .।।
द्र. २यान्ते म, ज. द्वौ दण्डौ। १म-२य वाक्यान्तयोः वा. पुस्तके 'का' इति चिह्नितम्।

२,३,४ का, उ. देवतेत्यत ऊह्यम्।

प्रतीची दिग् वामदेव्यं देवता। यद्देवेषु पितृषु मनुष्ये-
ष्वेनश्चकारायं त्वं तस्यावयजनमसि।
मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा।।३।।

उदीची दिग् यज्ञायज्ञियं देवता। यद्देवेषु
पितृषु मनुष्ये-
ष्वेनश्चकारायं त्वं तस्यावयजनमसि।
मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा।।४।।

ऊर्ध्वा दिग् बृहद्देवता। यद्देवेषु पितृषु मनुष्ये-
ष्वेनश्चकारायं त्वं तस्यावयजनमसि।
मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा।।५।।

२.५०

अग्निं वयं त्रातारं हवामहे
य इमं त्रायाता अस्माद् यक्ष्मादस्मादामयतः।
जुषाणो अग्निराज्यस्य त्राता त्रायतां स्वाहा।।१।।

मित्रावरुणौ वयं त्रातारौ हवामहे
याविमं त्रायैते अस्माद् यक्ष्मादस्मादामयतः।
जुषाणौ मित्रावरुणावाज्यस्य त्रातारौ
त्रायेतां स्वाहा।।२।।

---

३ का. . . वामदेवं * ;

४ उ. . . य(वा.ज्ञ)ज्ञियायज्ञियं * ।।

५ उ. १ द्र.।
का. . . मनुष्ये। श्वन. . . रायत्तं. . . वेदनमसि z . . : यक्षतस्मा
. . . तु * z३z इमं रक्षा मन्त्रं दिग्बन्धनं zz

२.५०.१ २या पङ्क्तिः का. इमं * स्माद्यक्ष्मातस्मादामयत
वा. . . अस्माद्यक्ष्मा . . .।
३या म. * ऽग्नि . . .।।

मरुतो वय त्रातृन् हवामहे
य इम त्रायान्ता अस्माद् यक्ष्मादस्मादामयतः।
जुषाणा मरुत आज्यस्य त्रातारस्त्रायन्तां स्वाहा ।।३।।

पितृन् वयं त्रातृन् हवामहे
य इमं त्रायान्ता अस्माद् यक्ष्मादस्मादामयतः।
जुषाणाः पितर आज्यस्य त्रातारस्त्रायन्तां स्वाहा।।४।।

बृहस्पतिं वयं त्रातारं हवामहे
य इमं त्रायाता अस्माद् यक्ष्मादस्मादामयतः।
जुषाणो बृहस्पतिराज्यस्य त्राता त्रायतां स्वाहा।।५।।

**इति द्वितीयकाण्डे दशमोऽनुवाकः**

---

२ का. . . यावयिमं त्रायीतेस्माद् यक्ष्मतस्मादामयत. . .।

द्र. २-४ उ. यक्ष्मादस्मादामयतः इत्यूह्यम्।
घ वा. . . त्राये (→यै) तां *।।

३ का. मरुतान् * त्रात्रीन् * इमं त्रायांतस्माद्यक्ष्मादामयत। जुषाणौ मरुताज्यस्य . . .z
वा. . . . त्रातृन् . . . ऽस्मात्।

४ वा. पितृन् * त्रातृन् . . . त्रायान्ता → ताऽस्मान्। . . . आह्यस्य. . .।।
का. . . . भ्रातृन् * । इमं त्रायन्ताम्मद्यक्ष्मातस्मा. . . त। जुषणाष्पितराज्यस्य. . .z

द्र. ३-४ मन्त्रयोर्मध्ये का. "अग्नयगृहपतयेस्वाहा। अग्निनाग्निगृहेभ्यस्वाहा। वाजस्यानग्नियेस्वाहा। अग्निंवयंस्वाग्नयस्वाहा। तेनब्रह्मणातेन च्छन्दसातयादेवतयाङ्गिरस्वद्देवेभ्यस्स्वाहा zz इति अग्निसूक्तम् zz"

५ का. * * * * इमं * स्माद् यक्ष्मातस्मादामयत. . . त्रातारं * * z४z
वा. . . तास्माद्यक्ष्मा. . .।। ऋ ५।। अ१०।।५०।।

२.५१

अग्निं वयं त्रातारं यजामहे
मेनिहनं बलगहनम्।
जुषाणो अग्निराज्यस्य मेनिहा
बलगहा त्राता त्रायतां स्वाहा।।१।।

इन्द्रं वयं त्रातारं यजामहे
मेनिहनं बलगहनम्।
जुषाण इन्द्र आज्यस्य मेनिहा
बलगहा त्राता त्रायतां स्वाहा।।२।।

सोमं वयं त्रातारं यजामहे
मेनिहनं बलगहनम्।
जुषाणः सोम आज्यस्य मेनिहा
बलगहा त्राता त्रायतां स्वाहा।।३।।

विश्वान् वयं देवांस्त्रातॄन् यजामहे
मेनिघ्नो बलगघ्नः।
*जुषाणा विश्वे देवा आज्यस्य मेनिहनो
बलगहनस्त्रातारस्त्रायन्तां स्वाहा।।४।।

---

२.५१.१ कख का. . . .त्रतारं * . . . हन. . .हणं;
ग वा. * अग्निराज्यस्य * ;
२ का, उ. 'त्रातारं . . . हनं' 'मेनिहा . . . स्वाहा' इत्यूह्यम्।
३ ख का. मेनिहलं * ।
४ वा. * * देवान् * (हवा→) यजामहे. . .।
का. . . यजामहे मेनघ्नो वलगघ्नास्त्रा . . . .z
"जुषाणा. . गहन"- इति नष्टम्।
२यं वाक्यम् - उ. जुषाणो (म. वे → विश्वे) * * . . .।

बृहस्पतिं वयं त्रातारं यजामहे
मेनिहनं बलगहनम्।
जुषाणो बृहस्पतिराज्यस्य मेनिहा
बलगहा त्राता त्रायतां स्वाहा।।५।।

२.५२

तै.ब्रा.२.७.१७द्रः ये केशिनः प्रथमाः सत्रमासथ
येभिराभृतं यदिदं विरोचते।
तेभ्यो जुहोमि हविषा घृतेना-
शौ.६.६८.३घ द्रः श्ववान् गोमानयमस्तु वीरः।।१।।

नर्ते दानात्तमसो मुच्यते परि
द्विनाम्नीं दीक्षां वशिनीं य आयत्।
प्रास्य केशाः सुवते काण्डिनो भवन्ति
तेषां ब्रह्मेशे वपनस्य नान्यः।।२।।

शौ.६.६८.३ द्रः येनावपत् सविता शीर्ष्णोऽग्रे क्षुरेण
सोमस्य राज्ञो वरुणस्य केशान्।
तेन ब्रह्माणो वपतेदमस्या-
श्वामो दीर्घायुरयमस्तु वीरः।।३।।

---

५ का. . . मेनिहलं * * वृहस्पति। राज्यस्य . . . z५z अनु z
उ. काण्डिकान्ते मङ्गलचिह्नादीनि।

२.२५.१ क को. . . सत्रमसित; वा. . . सत्रमासि → सथ;
गघ का. भ्यो. . . घृतेन अश्वान् गोममा . . . वीराः;
क < सत्रमासत?

२ का नन्तेरानास्तपसो * षुद्विनाव्रीयं * विशनीयं ह्येतत्
प्राप्य केशा स्तुवते काण्यनो भवन्तु . . . नाम्न्या;
ख उ. द्विनाम्नी . . .;
वा. . . . य → न आजत्। ज. . . ज आजत्।

३ क वा, म. . . सविताः . . .; का. . . अग्रे * ;
ख का. सोमस्येति नास्ति।
गघ का. . . स्याश्यामो . . .z

मा ते केशाँ अनु +गाद्वर्च एत-
त्तथा धाता दधातु ते।
तुभ्यमिन्द्रो वरुणो बृहस्पतिः
सविता वर्च आदधन्।।४।।

आ रोह प्रोष्ठं वि षहस्व +शत्रून-
वास्रा दीक्षां वशिनी ह्युग्रा।
देहि दक्षिणां ब्राह्मणेभ्यो
ऽथो मुच्यस्व वरुणस्य पाशात्।।५।।

## २.५३

मै.२.६.३
का.१५.२
ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणः।
ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा।।१।।

ये देवा दक्षिणासदो यमनेत्रा रक्षोहणः।
ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा।।२।।

ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणः।
ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा।।३।।

---

४ का. * * केशामनुगदवन्त . . . त्तया * * *। . . . वर्चोदधं।
क वा. * * केशाङ् . . . ; म, ज. * * केशां. . .;
उ. अनुगावर्च्च *;

५ का. . . षहस्य शतुनाजस्रा . . .।
. . . व्रह्मणेभ्यो अथो . . .z9z
क उ. . . शत्रून्;
ख वा. वाश्रा → स्रा. . .।ज. वाश्रा. . .।

२.५३.१ ख वा अग्निनेत्रा *।
द्र. ग का. तेनोवन्तु इति नास्ति। एवं चतुर्थं मन्त्रं यावत्।
२-४ उ. द्वितीयो मन्त्रार्धो नास्ति।

ये देवा उत्तरासदः सोमनेत्रा रक्षोहणः।
ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा।।४।।

ये देवा अन्तरिक्षसदो बृहस्पतिनेत्रा रक्षोहणः।
ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा।।५।।

२.५४

काठ.१५.३;
मै.२.६.३　अग्नये पुरःसदे रक्षोघ्ने स्वाहा।।१।।

यमाय दक्षिणासदे रक्षोघ्ने स्वाहा।।२।।

मरुद्भ्यः पश्चात्सद्भ्यो रक्षोहभ्यः स्वाहा।।३।।

सोमायोत्तरासदे रक्षोघ्ने स्वाहा।।४।।

बृहस्पतयेऽन्तरिक्षसदे रक्षोघ्ने स्वाहा।।५।।

अवस्पते दिवस्पते रक्षोघ्ने स्वाहा।।६।।

---

४　क　का. * * उत्तरात्सदस्;

५　कख　का. . . अन्तरिक्षात्सदो वृहस्पतिन्नेत्रा . . .;
वा. * * ऽन्तरिक्षसदो . . .।।

२.५४.१　का. . . . रक्षोघ्न *।

२　का. * दक्षिणात्सदे * *।

३　का. . . . रक्षोहाभ्यस् *।

४　का. सोमाय उत्तरासदे * *।
ज. 'सोमा' इत्यतः पत्रं भग्नम्। उपरि तु 'सोमाय दक्षिणासदे' इत्यादीनि योजितानि।

५　का. * अन्त . . . z३z द्र. षष्ठोऽयं मन्त्रः।

६　का. पञ्चमोऽयं मन्त्रः। ज. मन्त्रसंख्या पञ्चेति सूचितम्। अत्र दुर्गामोहनपादैः अवस्वद्वते दिवःसदे इति शोधः कृतः। तथैव पूर्वस्यां काण्डिकायामनुरूपो मन्त्रोऽपि योजितः।

२.५५

दिवो जातो दिवस्पुत्रो यस्माज्ञातं महत् सहः।
अश्वत्थमग्रे जैत्रायाच्छा देवं वदामसि।।१।।

तं त्वाश्वा यथारथमुप तिष्ठन्तु राजानः।
समितिभ्यो विवक्तवे।।२।।

त्वया वयं देवजातः सर्वाः प्राशो जयामसि।
उत सत्या उतानृताः।।३।।

योऽश्वत्थेन मित्रेण समितीरव गच्छति।
जयात् स सर्वाः पृतना याश्च सत्या उतानृताः।।४।।

अधराञ्चो निर्द्रवन्तु समित्या उलुलाकृताः।
अश्वत्थमित्रं पुरुषं ये वाचा पृतन्यात्।।५।।

**इति द्वितीयकाण्डे एकादशोऽनुवाकः**

---

२.५५.१ क वा. दीवो . . .;
खघ का. अस्माज्ञातं * सह . . . यात्सह * दामसि।
वा, म. . . याछा * *।।
२ का. * त्वामा . . . सुमतिभ्यो विवभुवे।
३ खघ का. . . चयामसि। . . . नृतः; ख वा. * प्राशो → णो *।।→।
४ का. * अश्वत्थेन * सुमतीरिव * जयश्चसर्वष् . . . नृतः ;
ख वा, म. . . गछति; ग वा. ययात् . . .; म. जयाश्च. . .;
५ का. * निद्रुवन्तु सुमत्या . . . कृत। . . . वाता पृदन्या z४z
घ म. . . प्रृतन्यान्।।५५।।ऋ५।।अ११।।

## २.५६

उग्रा नाम स्थ तेषां वः पुरो गृहाः
प्राची दिक् तेषां वो अग्निरिषवः।
ते नो मृड़त द्विपदे चतुष्पदे
तेषां वो यान्यायुधानि या इषव-
स्तेभ्यो नमस्तेभ्यः स्वाहा।।१।।

तै.स.५.५.१० द्रः क्रव्या नाम स्थ तेषां वो दक्षिणा गृहा
दक्षिणा दिक् तेषां व आप इषवः।
ते नो मृड़त द्विपदे चतुष्पदे
तेषां वो यान्यायुधानि या इषव-
स्तेभ्यो नमस्तेभ्यः स्वाहा।।२।।

विराजो नाम स्थ तेषां वः पश्चाद् गृहाः
प्रतीची दिक् तेषां वः काम इषवः।
ते नो मृड़त द्विपदे चतुष्पदे
तेषां वो यान्यायुधानि या इषव-
स्तेभ्यो नमस्तेभ्यः स्वाहा।।३।।

अवस्था नाम स्थ तेषां व उत्तरा गृहा
उदीची दिक् तेषां वो वात इषवः।
ते नो मृड़त द्विपदे चतुष्पदे
तेषां वो यान्यायुधानि या इषव-
स्तेभ्यो नमस्तेभ्यः स्वाहा।।४।।

उत्तरे नाम स्थ तेषां व उपरि गृहा
ऊर्ध्वा दिक् तेषां वो वर्षमिषवः।

---

२.५६. द्र. उत्कलीयपुस्तिकासु तेषांवः इत्यत्र प्रायश स्तेषाम्वः इति पाठः। २-४ का, उ. तेनोमृडत इत्य...दकोभाग ऊह्यः!

१ का, उ. 'ग्रहाः' इति। २-५ मन्त्रेषु का. गृहा (:), उ. ग्रहा (:)। का. १ मृळत; २ दक्षिणाद्गृहा; ३ पश्चद् गृहा; ४. . . वा उत्तराद्गृहा; ५ * णाम . . . मृदु → डत . . . z५zz अनु ११z

ते नो मृडत द्विपदे चतुष्पदे
तेषां वो यान्यायुधानि या इषव-
स्तेभ्यो नमस्तेभ्यः स्वाहा। ।५। ।

२.५७

यदीदं देवो दिव आजगाम
यद्यन्तरिक्षाद् यदि पार्थिवो यः।
यदि यज्ञो यज्ञपतेः स्वर्ग-
स्तेभ्यः सर्वेभ्यो नमसा विधेम। ।१। ।

यमिन्द्रमाहुर्वरुणं यमाहु-
र्यं मित्रमाहुर्यमु सोममाहुः।
यमग्निमाहुर्यमु सूर्यमाहु-
स्तेभ्यः सर्वेभ्यो नमसा विधेम। ।२। ।

ये श्मशानानि मनसा नयन्ति
सूर्यस्य रश्मीननु संचरन्ति।
शौ.१९.११.५क. ये देवानामृत्विजो यज्ञियानां
तेभ्यः सर्वेभ्यो नमसा विधेम। ।३। ।

---

२.५७.१ क का. . . दिवोयद्यवाजगाम
ग का, वा. . . . यज्ञपते; का. . . सर्ग
घ का. . . मनसा *।

२ क का. . . 'र्वरुणं यमाहु' इति नास्ति।
ख का. . . . हुयम. . .; उ. . . . र्यम. . . (म. सोमआहुः)।
ग का. 'मुसूर्य' इति नास्ति। उ. . . र्यम. . .;
घ म, ज. सर्वेभ्यो इत्यत ऊह्यम्।

३ कख का. . . . नान नमसा नियन्ति * * रश्मीरनु *।
द्र. ३ कख = का. ४कख
३ग म, ज . . . यज्ञियानान्;
३घ उ. २घ द्र.

ये तन्त्रिया जल्प्याः प्रोर्णुवन्ति
स्वप्नं दुर्भूतमभि ये किरन्ति।
ये देवानां धर्मधृतो बभूवु-
स्तेभ्यः सर्वेभ्यो नमसा विधेम।।४।।

स्वभ्यसैरभि ये भा यन्ति
ये भाः कृण्वन्ति य उ रोदयन्ति।
ये वा स्त्रीणां प्रतिरूपा बभूवु-
स्तेभ्यः सर्वेभ्यो नमसा विधेम।।५।।

२.५८

व्यावृत्तौ पथो गावौ व्यस्यौ युग्या उत।
विद्वेषणं किलासिथ [+]यथैनौ व्यदिद्विषः।।१।।

वि किलैनावदिद्विषः *शश्वतीभ्यः समाभ्यः।
अथोल्मुकमिव खादिरमग्निर्वामस्त्वन्तरा।।२।।

---

४　　कख = का. ३कख

कख　का. यदिन्द्रिया * प्रोर्ध्नवन्ति स्वपुनं . . . षिनन्ति।
क　म, ज. * तन्त्रया . . .; वा, ज. . . . प्रोर्ण्णवन्ति (वा. -न्ती);
ख　वा. . . . किरन्तिं।
घ　उ. ३घ द्र.

५　कख　का. स्वर्भिसियेरभि * * * * भ्यः कृण्वान्ति यो *;
क　उ. . . . यन्ते

२.५८.१　　का. * पयौ * विश्वौ विज्ञातत * किलासित यतैनौ व्यतद्विषः
ख　वा. व्यस्यै . . .। ज. * जुग्या *।
घ　उ. यथैनो . . .।। वा. . . . व्यतिद्विषः।।

२　कख　का. * किलीनावतद्विषत्वासतीभ्यस् *;
ख　म. सस्वती . . .। वा, ज. सश्वती . . .।
गघ　वा. अ(→उ) तो ल्म (→ल्मु) क . . . मग्निर्वामस्त्यंतरा।।
ग　म, ज. अतोल्मुक . . .;

पै.६.२३.८. सिंहस्ते अस्तु चक्षुषे व्याघ्रः परिष्वञ्जने।
अग्निर्वामस्त्वन्तरा यथा वां न सहासति।।३

व्यद्यौर्व्यद्य ततनद् व्यास्तत् कपट्टिव।
या ओषधे प्रसर्पसि व्यग्निरिव तौ वह।।४।।

वि वां यन्तु हृदयानि वि चित्तानि मनांसि च।
अथो यत्तन्वोः सङ्गतं तद्वामस्तु विदूरकम्।।५।।

अस्ति वै वां विद्विकमुभौ शयने अन्तरा।
विष्वञ्चौ पर्यावर्तेथां यथा वां न सहासति।।६।।

२.५९

शौ.५.२८.३-११ त्रयः पोषास्त्रिवृतः श्रयन्ता-
मनक्तु पूषा पयसा घृतेन।
अन्नस्य भूमा पुरुषस्य भूमा
भूमा पशूनां त इह श्रयन्ताम्।।१।।

---

३ का. सिंहस्ते चक्षुषो * परिषुंजने अग्निर्वस्त्यन्तेरा . . . शासति;
ख म. * परिष्यञ्जने। ग वा. . . मस्त्व → त्वन्तरा;
४ का. वि द्यौर्व्यततद्वयास्तत कपट्यवः व्या * प्ररस्पस्यग्निरिव * दहः।
मु. प्रसर्पस्य. .।
ग वा. * * प्रसर्प (→र्प्य) सि; म. . . प्रसर्प्यसि;
द्र < *व्यद्यौद् व्यद्य ततनद् व्यास्थत् कपटू इव ?
तु. हफ़्मान् (१९७६) पृ. ५६६।
ख वा. लेखाया उपरि 'रिव' इति शोधः। कपटूरिव इत्यभिप्रेतम्?
५ क का. व्यवाय्यंतु *;
गघ का. * यतंनो * . . . विधूलकं।
घ वा. . . . विदुरकं।।
६ का. * * षां विद्विषमुभौ सन्नेतरा * पर्यावर्तयेतां * * * शासति
Z२Z
ग वा. विष्वो (→ष्वा) ञ्चै (→ञ्चौ). . .;
२.५९.१ कख का. * * पोषत्रिवृतश्श्रयन्तासनक्तु . . .।
गघ का. सा. अ.। घ वा, ज. * पशूनान्त * *।।

इममादित्या वसुना समुक्ष-
तेममाग्ने वर्धय वावृधानः।
*अस्मिंस्त्रिवृच्छ्रयतां पोषयिष्णु-
रिममिन्द्र सं सृज वीर्येण।।२।।

भूमिष्ट्वा पातु हरितेन विश्वभृ-
दग्निः पिपर्त्वयसा* सजोषाः*।
वीरुद्भिस्ते अर्जुनं संविदानं
वर्चो दधातु सुमनस्यमानम्।।३।।

त्रेधा जातं जन्मनेदं हिरण्य-
मग्नेरेकं प्रियतमं बभूव।
सोमस्यैकं हिंसितस्य परापत-
दपामेकं वेधसो रेत आहु-
स्तत्ते हिरण्यं त्रिवृतस्त्वायुषे।।४।।

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्।
त्रेधामृतस्य चक्षणं त्रीण्यायूंषि नस्कृधि ।।५।।

---

२ का. . . समक्षतेसमग्नेवर्धयामावृधानः
यस्मिंच्त्रिवृश्छेतां पूषयिष्णुरिममिन्द्र * सृजा *।
गघ वा. अस्मिनृवृत्श्रयन्तां पोषइष्णुममिन्द्र. . .।।
म, ज. अस्मिंनृवृच्छ्यतां पोषयिष्णुममिन्द्र. . .।।

३ का. . . विश्वभिरग्निः पिपर्तु पयसा मजैषा . . . अर्जुनो . . .;
उ. . . . पिपर्त्यियसा सयोषा (वा. सजोषा). . . . सम्वि. . .।।

४ क का. द्वेधा . . . .; ख का. सा. अ.।
ग-ङ का. सोमस्यैकां * . . . वेदसो रेताहुस्तत्ते त्रिवृतास्त्वायुषे;
ग वा. . . . परावत -;

५ कख का. सा. अ.। क ज. * यमदग्नेः;
घ वा. . . निस्कृधि।। म, ज. . . निष्कृधि।।

त्रयः सुपर्णास्त्रिवृता यदाय-
न्नेकाक्षरमभिसम्भूय शक्राः।
प्रत्युह्य मृत्युम्मृतेन साक-
मन्तर्दधाना भुवनानि विश्वा।।६।।

दिवस्त्वा पातु हरितं मध्यात्त्वा पात्वर्जुनम्।
भूम्या अयस्मयं पातु प्रागाद्देवपुरा अयम्।।७।।

इमास्तिस्रो देवपुरास्तास्त्वा रक्षन्तु सर्वतः।
तास्त्वं बिभ्रदायुष्मान् वर्चस्वा-
नुत्तरो द्विषतो भव।।८।।

पुरं देवानाममृतं हिरण्यं
*य आबेधे प्रथमो देवो अग्रे।
तस्मै नमो दश प्राचीः कृणोम्य-
नु मन्यतां त्रिवृता वधेन।।९।।

---

६ का. * सु (=मुम्ब; का. भग्नाक्षरम्) पर्णास्त्रिवितायमेका. . . शक्रा प्रत्यूह मृ x x x न विश्वा z
ख वा. . . . सृर्भूय *। म. . . . सुर्भूय *। ज. . . . सर्भूय *।

७ खघ का. म x x x यपातुप्रहरादूदेवपुरायं;
ख उ. मध्यात्वा . . .।

८ का. इमास्ति [स्रोदेवापुरुस्तारक्षंतसर्व] तः तांस्त्वं विभ्रतायुष्मा-न्वर्चस्वानुत्त [रोद्विषतां]; कोष्ठस्थो भागो मुम्ब.मात्रलभ्यः।
ग वा, ज. तांस्त्वं . . .;

९ क का. [पुरन्देवाना] ममृतं *; कोष्ठस्थो भागो मुम्ब.मात्रलभ्यः।
ख-घ का. याभेदेः (मुम्ब . . .दे) प्रथमो * अ [ग्रे तस्मै नमो दिशः प्राची कृ] णोम्यनु * * *।
ख वा. यावेधेः . . .। म, ज. यावेधे . . .।
ग वा. * * दशः. . .;

शौ.५.२८.१ नव प्राणान्नवभिः सं मिमीते
दीर्घायुत्वाय शतशारदाय।
हरिते त्रीणि रजते त्रीण्य-
यसि त्रीणि तपसाविष्ठितानि।।१०।।

शौ.५.२८.१२ आ ते चृतत्वर्यमा पूषा बृहस्पतिः।
अहर्जातस्य यन्नाम तेन तेऽति चृतामसि।।११।।

पै.१.५४.५ ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा।
शौ.५.२८.१३ संवत्सरस्य तेजसा तेन संहनु कृण्मसि।।१२।।

२.६०

शौ.६.१२२.४ यज्ञं यन्तं तपसा बृहन्त-
मन्वारोहामि मनसा सयोनिः।
उपहूताग्ने जरसः परस्ता-
त्तृतीये नाके सधमादं मदेम।।१।।

---

१० का. * प्रा [णा नवभि संम्मिमीयते दी] र्घायुत्वाय * * त्री [णि रजते त्रीणि नयसि त्रीणि] रजसा विष्टितानि।
द्र. [ ]= मु. मात्रलभ्यः।
क ज. * प्राणांन . . .; वा, ज. . . . समिमीते;
ख वा. दीर्घायत्वाय *। ज. * *।।
गघ म. . . . त्रीण्यसि * . . . ।। घ ज. . . .।

११ का. अतेत्रितत्व [यमा आ पूषा आ वृहस्पति अ] हर्जातस्स यन्नाम * तेचिचृ [तामसि] z३z
ग ज. . . . र्जातस्व्य यंनाम; वा. . . यंनाम;
घ वा. * * ति *।। म. * * अ (→ऽ) ति *।

१२ का नास्ति। उ. ऋतुभिष्ट्वार्त्तवैरियेका ।।ऋ १२।।५६।।
मु. धतुभिष्यन्तवैरित्येका ३

२.६०.१ का. यज्ञेन्तंतपसावृ [हतुमन्वा. . . सयो] निः * * परस्ता x x x (मुम्ब. पुरस्ता x x x );
ग उ. . . पुरस्ता-;
घ वा. . . मदेस।।

शौ.६.१२२.१द्रः तं प्रजानन् प्रति गृह्णातु विद्वान्
प्रजापतिः प्रथमजा ऋतस्य।
अस्माभिर्दत्तं जरसः *परस्ता-
दच्छिन्नं तन्तुमनु सं चरेम।।२।।

शौ.७.४१.२ श्येनः सुपर्णो दिव्यो नृचक्षाः
सहस्रपाच्छतयोनिर्वयोधाः।
स नो नि यंसद्वसु यत् पराभृत-
मस्माकमस्तु पितृषु स्वधावत्।।३।।

शौ.६.१२३.१ एतं सधस्थाः परि णो ददामि
यमावहाच्छेवधिं जातवेदाः।
अन्वागन्ता यजमानः स्वस्ति
तं स्म जानीत परमे व्योमन्।।४।।

---

२ का. xxx पति गृह्णाति * वृ xxx [ स्य अस्माभिर्दत्तं जरसः पुरस्ताद xxx म];
क वा. . . . गृह्णान्तु *; ग उ. . . पुरस्ता-;
घ वा. -दछिन्नं . . .।। म. . . तन्तुमन * *।।
ज. -दछिंनन्ततु . . .।।
३ का. [शयनः सुपर्णो * नृचक्षात् स xxx सनोनिहिंसद्वसत्वु xxx स्तुपितृषुस्वृधावत्]
[] मु. मात्रलभ्यः।
ख वा. . . पाछत. . .; म. . . र्वयोधा।
ज. 'च्छतयो' इति नष्टम्
४ का. [एतं सवंधस्ता xxx वहाच्छेवधिं जातवेदाः अन्वागन्ताय x xx जानीत] = मुम्ब.मात्रलभ्यः।
क वां. . . ददासि; ख वा, ज. . . . हाछेवधिं * (वा. यातवेदाः)।
ग ज. * यजमान *;

शौ.६.१२३.२क-ख जामीत स्मैनं परमे व्योमन्
देवाः सधस्था विद लोकमेतम्।
शौ.१८.२.५७ग-घ इष्टापूर्तमनुसंक्राम विद्वान्
यत्र ते दत्तं बहुधा विबन्धुषु।।५।

इति द्वितीयकाण्डे द्वादशोऽनुवाकः

२.६१

येभिः पाशैरभि दधासि द्रुह्वणः
समामिनो अनृतं ये समामिरे।
तांस्ते वि ष्याम्यायुषे बलाया-
नमीवं पितुमद्धि प्रसूतः।।१।।

अनागा बभ्रो अयमस्तु वीरो
द्रुहः पाशेभ्यः परि पाह्येनम्।
राजन् प्रविद्वान् प्र मुमुग्धि पाशान्
यस्मै चरामि हविषा घृतेन।।२।।

कश्यप इन्द्राय हविषा चचार
हरित्वतीषु मघवा मघोने।
पस्पार[+] विश्वा भुवनस्य गोपा
अन्तरिक्षस्य महतो विमाने।।३।।

---

५ का. नास्ति।
कख म. . . . व्योमं * सधस्ताविदु → द. . .।
२.६१.१ क म,ज . . .दृह्वणः; द्र. १-२ का. पत्रं भग्नम्।
२ ख ज. दृहुः → हः . . .।
३ का क. नष्टः पादः। ख-घ ने। पस्पारि * भुवनानि * * x x x वि x x;
ग उ. पश्यार . . .; वा. . . विश्या → श्वा . . .;

अपूपं नाभिलं ते घृतश्चुतं
नदीनां पदे सुश्रुतं जुहोमि।
प्रविद्वान् राजन् प्र मुमुग्धि पाशा-
नस्य पत्नी विधवा यथासत्।।४।।

अनातुरेण वरुणः पथेमं
स्वस्तिभिरति दुर्गाणि नेषत्।
तमश्विना प्रतिगृह्या स्वस्तये
दोषा एनमुषसे सं प्र यच्छात्।।५।।

२.६२

ये पिशाचा इमां वित्तिमाकूतिं मोहयन्ति नः।
तेषां त्वमग्ने नाशय वर्चश्चित्तमथो प्रजाम्।।१।।

नाशयाग्ने पिशाचानां वर्चश्चित्तमथो प्रजाम्।
अथाशां मह्यं राधय यथाहं कामये तथा।।२।।

---

४ का. xxx नाभिलं * * * पथे * * । * xxx मुमुग्धि पाशान्यस्यपत्नि * . . . ।
क वा. अपूपां → पं . . .; उ. . . नाभिलन्ते घृतश्च्युतं;
गघ वा. . . . पाशान्यस्य . . . ।।
द्रः गघ 'पाशानन्यस्य' यद्वा "पाशान्नास्य" इति शोधः?
५ का. * वरु x x थेनो . . . * वेष्यत्।
. . . स्वस्त x दोषवेनपूषसे * * * z५z अनुवाकं १२ zz
२.६२.१ का. * पि x चा * विघमा . . . मोहयन्तु * *. . . वर्च x त्तमथो *; वा. ख. . मोहयंति * । घ वर्च्चश्चित . . . ।।
२ ख-घ का. . . प्रजानां य x शां * धारयथाहं कामयन्तु मे।
ग वा. अथासां * *;

आशां मह्यं राधयत्वेन्द्रियेण यथा मृताम्।
त्वमग्ने क्रव्यादः सर्वान् पिशाचां अर्चिषा दह।।३।।

प्रति दह यातुधानान् मूरदेवान्+ विचर्षणे।
ये नों दुरस्याद्वेषेणाथाशां मोहयन्ति नः।।४।।

ये नः पशुषु दिप्सन्त्याशायां पुरुषेषु च।
तांस्त्वं सहस्राक्षेशानः पिशाचाँ अर्चिषादह।।५।।

२.६३

सहस्वेदं सहमाने अथो देवि सरस्वति।
अथेदमश्विना लक्ष्म रोहितं कृणुतं युवम्।।१।।

आसुरस्य मुखस्याग्रे लक्ष्म मुखं नामासि।
मेतो ज्यायो भूरित इत् कनीयोसो
नश्येतः* पुरो मा त्वा हिंसिषम्*।।२।।

---

३ क-ग का. * म्यहं राधत्विन्द्रियेण xxx तां . . . सर्वां;
कख वा. . . त्वेन्द्रयेण . . .।
४ का. * द xxx दानां सूरदेवां विचर्षण * *. . . द्वेषणयथाशं x xx नः;
घ ज. . . . मोहयंति *।। ख उ. मुरदेवान् . *।
५ का. एनष्पशुग्मित्संत्याशायां * *।
. . . सहस्र xx पि x षा x ह zz
कख म. . . दिप्सन्याशायां . . .।
ग वा, म. . . . सानः; घ उ. पिशाचाङ् * *।।ऋ५।।६२।।
२.६३. का. काण्डिका नष्टा।
२ ग उ. . . . ह्मायो . . . .
वा. . . . स्ये → स्यो; ज. . . . स्ये;
घ उ. . . . नः श्येतः * * * हिंशिषं।।

यासां पिता पर्जन्यो भूमिर्माता बभूव।
ह्वयामि सर्वा ओषधीर्गोजाताः सोम जिन्व ताः।।३।।

इदं सप्तप्रखे त्वं किलासं नाशया त्वचः।
६.४.७घ निष्कृतिर्नाम वा असि सेदं निष्कृधि भद्रया।।४।।

११.६.५कख निष्कृतिर्नाम ते माता निष्कृतिर्नाम ते पिता
उतो त्वमसि निष्कृतिः सेदं निष्कृधि भद्रया।।५।।

२.६४

और्ध्वनभसः प्रथमः सूर्यचेता उशन्द्व्यः।
चकार कृत्यामासुरः सा नो भवतु भद्रया।।१।।

य इमां कृत्यामुपजहुर्ये वा चक्रमिरेऽक्षितम्।
देवानां सर्वेषां स्वसा +तान् देवी निर्ऋतिर्हनत्।।२।।

शौ.३.९.१ कश्यपस्य प्रतिसरो द्यौष्पिता पृथिवी माता।
यथाभिचक्र देवास्तथापि कृणुता पुनः।।३।।

---

४ घ वा. . . निष्कृति *।।

५ ग वा. . . . निष्कृधिः;

२.६४. का. १-२ ख 'चक' इत्यवधिको भागो नष्टः।

१ क उ. और्द्ध . . .; ख म,.ज. . . . उशम्यः।

२ कख वा. * * . . . पयहुर्ये . . .। ज. . . जह्रुये . . .।
उ. अवग्रहो नास्ति।

खघ का. मिरेक्षतिं * * सजातानाद x व x निर्ऋतिर्ह x x;

घ उ. तां . . .।।

३ क का. x श्यपस्य *; ख ज. द्यौष्पिता * *।

गघ का. . . . चक्रुदेवास्तथाभि * *;

याः कृत्या नीलवतीर्याः कृत्याः पाश्यावतीः।
कृत्या याश्चक्रुर्लोहिनीस्ता इतो नाशयामसि।।४।।

यदि वा इदमाजहुरिमे भद्रा असन्निति।
कृत्यासि कल्याण्यसि सामुं कर्तारमन्विहि।।५।।

२.६५

वृहत्ते वर्चः प्रथतामुपद्यां
मित्रेभ्य एधि सुरभिः सुवर्चाः।
अधि ते राजा वरुणो ब्रवीतु
तस्मा उ त्वं हविषा भागधा असः।
शतं हेमन्तान्* दमया सपत्नान्
विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।१।।

---

४ का. * * नीलवतीयाष् * पश्यावतीः * याश्चक्रुन्लो . . .
क म, ज. * * नीळवती -;
ग वा, म. * याश्चक्रुलो . . .; ज. याश्चकृलो . . .;

५ कख का. * * यदिमाजाहुरिमे भद्रासिसुन्वति।
वा. * * . . . जहुं → हुं . . . असंनिति।
घ का. . . . कर्तारस्वंजहि z३z
वा, ज. . . . मन्वि → न्वहि ।।६४।। ऋ५ ।।
द्र. ज. न्वि इत्यस्य इकारः अस्पष्टः कृत इति प्रतीयते।

२.६५.१ का. . . . पृथतामपद्यां . . भ्येति सुदुभिस्सुवर्चः
ऋते * * * * त्त्वं * भागदाम z
* हेमन्तां दशया सपत्नां . . . सर्वान्गुङ्ग्वो * z
क उ. वृहते . . .; वा, म. . . पृथतामु . . . . . .;
घ म. पादान्ते . . . द्वौ दण्डौ।
ङ. उ. * हेमन्तां . . .;
ङच वा. . . सपत्नाद्विषस्त्वा * * गुंङ्ग → ङ्गवो *।

यस्त्वोत्पिपानं प्रत्युत्पिपाति
यस्त्वा सजातो विरिफात्यन्तितः।
इन्द्रस्तं योक्त्रे अधि मे युनक्तु
तस्मा उ त्वं हविषा भागधा असः।
शतं हेमन्तान्* दमया सपत्नान्
विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।२।।

यस्त्वा यच्छन्तं प्रतियंयमीति
यस्त्वा जिगीषात् पृतनाः समर्ये।
बृहस्पतिस्तमव जङ्घनीतु+
तस्मा उ त्वं हविषा भागधा असः।
शतं हेमन्तान्* दमया सपत्नान्
विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।३।।

ये ते शुल्कमाहरां य उ ते बलिं
सोमः सजातौं उत संनयाति ते।
अग्निः सयुग्धानधि ते ब्रवीतु
तस्मा उ त्वं हविषा भागधा असः।
शतं हेमन्तान्* दमया सपत्नान्
विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।४।।

---

२ का. यस्तोतिपानां प्रत्युत्पात . . . सुजातो विलहात्वं x च z इन्द्रस्त्वं * * * विनक्त्वस्मै;
ङ वा. इन्द्रस्तयोक्ते * * * ; ज. . . योक्ते . . .;
द्र. सर्वत्र 'तस्मै' इत्यत ऊह्यम्। एवमापञ्चमम्।

३ का. . . . यच्छन्दं प्रत्युंसि x x x स्मा जिगीषां पृतनस्सपर्ये वृहस्तमवजंघनी x x x;
क वा. . . . . . . यछंन्तं *;
ख ज. . . . प्रतनाः *। द्र. अंशतः कीटदष्टम्।
गघ उ. . . . स्तममजंहनीतु तस्मै।।

४ का. x x x रास्यते बलिं सोमसृजातानुपसं x x x;
क वा. . . . शुक्ल → ल्कमाहरां . . .;
ख वा. * सजातां → ताङ् * सं नमाति *।
म, ज. * सजाताङ् . . . .; ज. . . . संनमा → याति *।

वरिष्ठै अधि पुरुः प्रजया सुवीरो
अभि प्र युंक्ष्व* दमया सपत्नान्।
इन्द्रो मरुत्वानधि ते ब्रवीतु
तस्मा उ त्वं हविषा भागधा असः।
शतं हेमन्तान्* दमया सपत्नान्
विशस्त्वा सर्वा अनु गुङ्ग्वो भवन्तु।।५।।

इति द्वितीयकाण्डे त्रयोदशोऽनुवाकः

२.६६

भगाय राज्ञे प्रथमं जुहोमि
विश्वे देवा उत्तरे मादयन्ताम्।
उशन्* पत्नीभ्य उशतीभ्य आभ्यः
पतिमग्न आ वह रातहव्यः।।१।।

पतिं वृणीष्व हविषा गृणाना
तमा वहात् सविता तं ते अग्निः।
तस्मै नमस्व शतशारदाय
भगभक्ता भगवती सुवीरा।।२।।

---

५ का. रो अभ्यप्रयुङ्ग * *। ऋते राजा वरुणो * तस्मात्त्वं * भाग दास z * हेमन्तां * सपत्नां . . .सर्वाग् गुङ्गुवो * z४z ख उ. . . . . यंक्ष्व . . . . .।
उ. * हेमन्तां * * ; च वा. विषस्त्वा * * गुङ्गु → ङ्ग्वो * ।।ऋ ५।। ६५।। अ ८३।। अन्यत्र "अ १३" इति।।

२.६६.१. ग का, उ. उशं * * *;
घ का. पतिमग्नि आवहरातहव्या।
उ. . . मग्नावह *।।

२ कख का. . . गृणानस्तमा वहत्सवित * * *;
क वा. * गृणीष्व * *;
ख ज. . . . वह x त् . . .। उ. . . . तन्ते *।
गघ का. तमिंद्रमस्मि * * * सुवीराः।

यमर्यमन् पतिमस्यै दिदेशिथ
जने चित् सन्तं तमिहा वहासि।
सुमङ्गल्यपतिघ्नी सुशेवा
रायस्पोषेण तमिषा सचस्व।।३।।

यं ते पतिमर्यमा जायमानायै
धाता चकल्प तमिहा वहासि।
अभि वरेण हविषा जुहोमि
प्रजानन्नैतु सुमनस्यमानः।।४।।

पतिं ते द्यावापृथिवी अधातां
पतिर्मित्रावरुणा वातो अग्निः।
सप्त ऋषयोऽदितिः सोम इन्द्र-
स्ते त्वा देवाः पतिवत्नीं + कृण्वन्तु।।५।।

---

३ का. यमर्षासं पतिमस्ये दिदेषित
* दिच्छन्तं तमिया *। . . . सुषेवा . . . उचिषासुतस्व;
ग उ. . . ल्यपतिमघ्नी * (वा. सुसे → षेवा);

४ कख का. यत्ते . . . मानांयां * * जमिहा *। क उ. यन्ते . . .;
ख वा. * चल्पितमिहा *।
घ का. प्रजांनैतु सुमनस्यमानां;
वा, ज. प्रजानंनैतु *।।

५ क उ. पतिन्ते * *
ख का पतिं मित्रावरुणा * ग्निः सप्तर्षयोदितिस् * . . . पतिवली *
z५z अनु १३ zz
ख म. पतिमित्रावरुणा * ऽग्निः।
ग वा, ज. ऽ नास्ति। वा, म. . . इन्द्र → मिन्द्र-;
ज. . . . सोममिन्द्र-;
घ उ. . . पतिपत्नीं *।।ऋ५।।६६।।

२.६७

यस्त्वारायः प्रविवेशाजानिर्जनिवाँ उत।
अथो यस्तन्वं पस्पर्श तमितो निर्णयामसि।।१।।

निष्ट्वाराय नयामसि य इमां प्रविवेशिथ।
आत्मानमस्या मा हिंसीरन्यत्र चर मेह भूः।।२।।

यदरायेमामुपायसि धेह्यस्यै रयिपोषणम्।
प्रजां चिदस्या मा हिंसीरन्यत्र चर मेह भूः।।३।।

यदरायेहायसि हनाम वीरुधा त्वा।
अथो खनित्रिमैस्त्वाद्धृषेण यथा भगम्।।४।।

यदरायासूयं+ स्त्रैषूयमावतोक्यम्।
यत् पैतृषद्यं दौर्भाग्यं तदितो निर्णयामसि।।५।।

---

२.६७.१ का. . . राय . . वेशजानुर्जानिवाङ्कुत। * तन्वं पस्पृश . . . निन्नयामसि;
ख उ. . . र्जनिवाङ् उत। ग वा. * . . . पःस्पर्श;
२ खग का * इमानूप्रविवेशतः आत्मानमस्य. . .;
घ वा, म. - रन्वत्र . . .।।
३ क का. येजरायेमामु. . .;
ग का. * चतस्या . . .; म, ज. प्रजाञ्चिदस्या . . .;
घ म. रन्वत्र . . .।।
४ कख का. येजरायेविहायसि हनामि * *।
क वा. यदराए → येहायसी;
गघ का. * खनित्रमीस्त्वा नर्षेण * *;
ग म, ज. * . . . मैत्वा —;
५ का. येजरायासूयंस्तृषुयमा . . . .* पौतृषद्यं * तमितो * z१
कख म. . . . षुयंस्त्रैषुयंमावतोक्यं; वा, ज. . . षूयंस्त्रैषूयंमावतोक्यं।

## २.६८

अग्नेर्वो बलवतो बलेन मन्युं वि नयामसि। ।१। ।
इन्द्रस्य वो बलवतो बलेन मन्युं वि नयामसि। ।२। ।
सोमस्य वो बलवतो बलेन मन्युं वि नयामसि। ।३। ।
बृहस्पतेर्वो बलवतो बलेन मन्युं वि नयामसि। ।४। ।
प्रजापतेर्वो बलवतो बलेन मन्युं वि नयामसि। ।५। ।

यत्ते सूर्य दिवि देवेषु वर्च-
स्तस्य नो धेहि त्वमसि प्रचेताः।
अहं त्वदुग्रस्त्विषितस्त्विषीमा-
निमां वाचं वि साक्षीय। ।६। ।

## २.६९

वार्तः पुरस्तात् पवसे नभस्वान्।
नमस्ते विद्म ते नामधेयं मा नो हिंसीः। ।१। ।

तपोजा असुरो दक्षिणतः पवसे नभस्वान्।
नमस्ते विद्म ते नामधेयं मा नो हिंसीः। ।२। ।

---

२.६८.१. का. . . . मन्यु व्य *।
५ का. . . . मन्युर्व *।
२-४ "बलवतो" इत्यारभ्य सर्वत्र ऊह्यम्।
६ का. . . सूर्यं . . देहि तमसि प्रचेतां * चविग्रस्त्वि . . . * *
श(→सां)क्षीय z२z
क वा. . . सुर्य . . .;
ग म. * . . . स्त्विषीतस्त्वि . . .;
घ म, ज. . . शाक्षीय। ।ऋ ६। ।६८। ।
२.६९.१ कख का. वातष् * पवमे *; ख वा. * नभस्वां।
द्र. का. सर्वत्र 'पवमे' इति।
२ कख का. तपोदष्पुरो * पवमे *;

विश्वायुर्विश्वजनीनः प्रतीच्या दिशः पवसे नभस्वान्।
नमस्ते विघ्न ते नामधेयं मा नो हिंसीः।।३।।

शिवो वैश्वदेव उदीच्या दिशः पवसे नभस्वान्।
नमस्ते विघ्न ते नामधेयं मा नो हिंसीः।।४।।

अतिष्ठावान् बार्हस्पत्य ऊर्ध्वाया दिशः पवसे नभस्वान्।
नमस्ते विघ्न ते नामधेयं मा नो हिंसीः।।५।।

२.७०

अप द्यौरपाततनदपस्कद्य वधेदहिम्।
कल्याण्या यथा स्मृतं शमुनः सन्तु विद्युतः।।१।।

ऋ.५.८३.९ द्रः यत् पर्जन्य स्तनयति सर्वं संविजते जगत्।
पतिं तदृत्वियावती पृथिवी प्रति मोदते।।२।।

---

२,३,४ उ. पवसे इत्यत ऊह्यम्। वा. ४ नास्ति।
५ का. अतिष्ठावा . . . पवमे . . . z३z इति षड्तसूक्तं zz
ख वा. . . नभस्वां।
२.७०.१ का. * द्योरपा उतनद . . . वदेदहिं * यताः * सुम * * विद्यतः।
ज. "द्यौरपातत‌न" इति भागो नष्टः।
ख वा. ‑दपस्कन्द. . .।
ग म. कल्यान्या * *;
क < अपाद्यौदपातत‌न . . .? तु. २.५८.४ क।
२ का. * * पर्जस्तयिलुस्ससं सं व्यतते * पतन्तु द्वितीया त्रयावती . . .।
क म. * पर्यन्य *;
ख वा. पतन्तु (→न्तित) दृ. . .;
म. पतिन्तदृ. . .; ज. * तदृत्विजाप → वती ;

एष एनाभ्यक्रन्दीद्वृषाश्वो धेनुका इव
अहींस्त्वं विद्युतां जहि मास्माकं पुरुषान् वधीः। ।३। ।

अभिक्रन्दा स्तनयित्नोरवस्फूर्जादशन्या उत।
देवा मरुतो मृड़त नः पातु नो दुरितादवद्यात्। ।४। ।

ऋ.६.७५.१२ द्रः ऋजीते परि णो नमादित्याः शर्म यच्छत।
वा.स.२६.४६ द्रः युयुत् पर्णिनं शरमुतापर्णं रिशादसः। ।५। ।

इति द्वितीयकाण्डे चतुर्दशोऽनुवाकः

२.७१

शौ.५.१४.९ कृतव्यधनि विध्य तं यश्चकार तमिज्जहि।
न त्वामचक्रुषे वयं वधाय सं सिसीमहे। ।१। ।

---

३ का. एषेनाभ्यर्कंदीवृकाश्वेधेनुंकामिव अहिंस्त्वं * * मास्मकं पुरुषां *।
क ज. * एनाभ्यः क्रन्दीद्;
ग म. अहिं → हींस्त्वं विद्युता *;
४ कख का. अभिक्रन्दाः स्त → तनय . . . स्फूर्जद . . .।
वा. * स्तनइलोरवस्पूर्याद . . .।
घ म. * * . . . दवर्त्त्या → द्यात्। ।
ज. * * दवद्या → र्त्यात्। ।
५ का. वीचिते * * नम आदित्यश्चर्म *। यूयत पर्णिनो . . . पर्णो ऋषादश z४z ख वा, ज. . . . यछत्। ग ज. * पर्ण्णनं . . .; घ वा. . . . रिषादसः → शः। ।अ १४। । ऋ ५। । ७०। । म. . . . रिशादस । । . . .ज. . . . रिशादशः। । . . .
२.७१.१. क का. . . . धनविद्व *; वा. कृतव्य → व्यिधनि * *;
ख उ. . . तमुज्जहि।
गघ का. दत्वामिचक्लिषे * * शंससीमहे;
ग वा, म. * . . . चकृषे *;

यथा ते देव्योषधे प्रतीचीनं फलं कृतम्।
शौ.५.१४.४ख एवा त्वं कृत्वने कृत्यां हस्तगृह्य परा णय।।२।।

शौ.५.१४.४क पुनः कृत्यां कृत्याकृते गोधेवावटमन्नयत्।
सक्तुरिव सक्तुप्रेष्यं प्रतीचीः प्रति दध्म सत्।।३।।

यां ते चक्रुर्वर्तनेषु वार्ताकुषु वृतासु च।
शौ.४.१७.४घ मण्डूके कृत्यां यां चक्रुस्तया कृत्याकृतो जहि।।४।।

शौ.५.१४.१३ अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम्।
सुखे रथ इव वर्ततां कृत्या कृत्याकृतं कृता।।५।।

## २.७२

अग्निर्द्युम्नेन सूर्यो ज्योतिषा
द्यौर्महिम्नान्तरिक्षं* व्यचसा।
दिश आशाभिः पृथिवी पयोभि-
रिदं राष्ट्रं वर्धयन्तु प्रजावत्।।१।।

---

२ का. * त्वा देव्योषधं . . . त्वांकृत्यने कृतं हस्तिग्रीह परायनः;

३ का. 'प्रतीचीनं फलं . . . हस्तिग्रीपरानयः पुनष्कृत्याकृतांकृती' इत्यधिकम्।
ख-घ का. गोधेनुकावटुंमुंनयत्। शक्तुर्व्यशक्तुपेश्यं * * तद्वसत्;
ख वा. . . . वटमंनयत्। म. . . मन्नयत् → त। घ उ. प्रतीची . . .।।

४ कख का. यान्ते . . र्वन्तनेषु वन्ताकूखुर्व्रतासु *।
क उ. यान्ते . . .; खग म. वार्त्ताकुसु * *। * * * चकृसु;
क वा. . . .चक्रुव → र्वर्त्त → त्तनेषु; द्र. ३ ख <. . . वटमिन्नयत्?

५ कख उ. . . . कूळमनुकूळ . . .।
कख का. सा.अ.।
गघ का. शुके रथै * कृत्ये * ताः z५z अनु १४z

२.७२.१. खग का. . . . म्नाअन्तरिक्ष * दिशाशाभिष् * *;
क वा. अग्निद्युम्नेन सुर्यो *;
ख उ. . . . न्तरिक्षेण *। ज . . . ऽन्तरिक्षेण

त्वष्टा रूपेण सविता सवेना-
हर्मित्रेण वरुणेन रात्री।
पूषा पुष्टैर्भगो अंशेन भत्त्र्ये-
दं राष्ट्रं वर्धयन्तु प्रजावत्।।२।।

यां विश्वकर्मा निजघान मेथि-
मन्तरा द्यावापृथिवी उभे।
तस्या आहुः क्षत्रियं गर्भमेतं
परि माव पत्था मूर्धनि धारयस्व।।३।।

छन्दांस्यस्या अभितो मयूखा
स्तोमा आत्मा यजुरस्याः पुरीषम्।
तस्या आहुः क्षत्रियं निर्मितं
परि माव पत्था मूर्धनि धारयस्व।।४।।

---

२ का. त्वाष्टा . . . सवेनअहर्मिच्चेण . . . पुष्टीर्भगंसेन भगदयिदं * * *;
ख उ. — हंमित्रेण * *।
गघ ज. . . भक्तृवेदं * * *।।.
३ का. यानि * णिजघान मेदिमंतरा द्याका . . .। * हुः * गर्भं परि मावपथा * चारयस्व;
क वा, ज. * णि → निजघान. . .;
ग उ. * * क्षत्र्यं . . .;
४ कख का. श्छन्दांस्याभितो . . . तुमा यजरस्याः *;
ख म. * * ययुरस्याः पुरुषं। वा, ज. . . पुरुषं।
ग का. * हुः * * ;
वा. . . क्षत्र्यं निर्मिमीतं; म. . . . क्षत्र्यं *।
ज. . क्षत्रियं ( → त्र्यं) निर्मि (+मी) तं,

परा णुदस्व व्यथयाभिमाति-
मधस्पदं कृणुष्व दुर्धरायतः।
मा त्वा दभन् सपत्ना दिप्सन्त-
स्तव राष्ट्रमुत्तरं द्युम्नमस्तु।।५।।

२.७३

इदं तन्मित्रावरुणा हविर्वां
येनाग्रे देवा अमृतत्वमायन्।
येनास्मै क्षत्रमधिधारयौजो
ऽसपत्नाः प्रदिशः सन्त्वस्मै।।१।।

घृतस्य धारा मित्रावरुणा
दुहां वां धेनुरनुपस्फुरन्ती।
देवः सवितोत वायुरग्नि-
र्भूतस्य पतिरिह शर्म यच्छात्।।२।।

---

५ का. * णितस्य व्रतथायापिमहतिमदस्पदं * दुर्धरायवा * * दभं सपत्नादिप्सतुस् . . . मुत्तमं . . . z१z
ख ज. पादान्तो भग्नाक्षरः।
२.७३.१ क का. * तंमित्रा. . .;
गघ का. . . धारयोजो सपत्नाष् * . . . ।
वा. . . . धारयौ(→यो)जो (+अ)सपत्नाः. . .।
ग ज. . . . धारयोजो ;
२ खग का. दुह * . . . देव . . .;
ख वा. . . . पस्पुरन्तीं → न्ती।
घ वा. - र्भुतस्यप्रतिरिह * यछात्।।
ज. - . . . प्र → पतिरिह * यछात्।।

शं नस्तन्मित्रावरुणा गृणीतं
दृढावमित्रा बहुधा वि शेराम्।
जयतु सेनोप घोष एतु
पृथक् सत्वानो बहुधा भरन्ताम्।।३।।

हनाम मित्रावरुणावमित्रान्*
भवाम भद्रे सुकृतस्य लोके।
पारयान्नः सविता देवो अग्नि-
र्जयामेदं हविषा कश्यपस्य।।४।।

वातोयं मित्रावरुणा तदाह
विश्वन्तरं निर्मितं कश्यपस्य।
अध्वर्यवो मरुतो अस्यासन्
तेन देवेभ्यो वरिमाणि चक्रुः।।५।।

---

३ का. * नस्तंमिच्चा . . . गृणीतां त्रेधामित्रा * व * जयते सेनोअप * एतत् * * * भवन्तां;
क उ. सन्न (वा. → शंन्न) स्तन्मि (← म्मि वा.) त्रा. . .;
ग वा. . . . एतु → त; म. . . एत;
४ क का. * . . . णासमित्रां;
वा. हनाव . . . वमिता; म., ज. हनाव . . . वमित्रा;
ग म. . . देवोऽग्नि-; घ उ. -र्ययामेदं * *।।
५ क ज. . . द → तदाह;
ख-घ का. हविष्यन्तरं * * * मरुतायस्यासन् * * वरुणानि * औं तेनदेवेभ्योवरिमाणि चक्रुः z २ z
ख ज. विश्वंतरं * *। ग म. * * ऽस्यासं; वा. . . अस्यासं;
घ उ. काण्डिकान्ते "विष्णुः" इति, मङ्गलचिह्नानि च।

## २.७४

शौ.३.३.१ अचिक्रदत् स्वपा इह भव-
मै.४.१४.१५ दग्ने *यजस्व रोदसी उरूची।
आमुं नय नमसा रातहव्यो
युञ्जन्तु सुप्रजसं पञ्च जनाः।।१।।

शौ.३.३.२ दूरे चित् सन्तमरुषास इन्द्र-
मा च्यावयन्तु सख्याय विप्रम्।
यद् गायत्रीं बृहतीमर्कमस्मै
सौत्रामण्या दधृषन्त* देवाः।।२।।

शौ.३.३.३ अद्भ्यस्त्वा राजा वरुणो जुहाव
सोमस्त्वायं ह्वयतु पर्वतेभ्यः।
इन्द्रस्त्वायं ह्वयतु विड्भ्य+ आभ्यः
श्येनो भूत्वा विश आ पतेमाः।।३।।

२.७४.१ का. असिक्रत् * * . . . दम्भ * * । अमुं * नममा * युञ्जन्ति * * *।
खग उ. . . . यदस्व * रोची। * (ज. आमुन्) * नममसा *;
२ का. * दिश्छन्तमर्शास . . . श्यावयन्तु * रिपुं यदि गायत्रियं . . . ददृशन्तु *।
क वा. * चिछ ( → त्स) न्त. . .; ज. * चिछन्त. . .;
घ वा. सौत्रामन्वा दधर्ष ( → धृष) न्तु *।।
म. * द → सधृषन्तु *।। ज. * दधृषन्तु *।।
३ ख का. . . ह्वयति * ;
गघ का. . . . ह्वयति विड्भ्याभ्यः * * विषा पतेमश्;
ग उ. . . . विद्भ्य *; घ ज. मन्त्रान्ते एको दण्डः।

शौ.३.३.४ श्येनं हविर्नयत्वा परस्मा-
दन्यक्षेत्रे अपरुद्धं चरन्तम्।
अश्विना पन्थां कृणुतां सुगं ते
गर्भं सजाता अभिसंविशध्वम्।।४।।

श्येनं हविः कश्यपस्योप शिक्षे-
न्द्रं वातः प्रहितो दूत आ वह।
विषह्य शत्रून् सेनाग्नै-
र्विशो वृणानोऽव गच्छ कामी।।५।।

*शौ.३.३.६ यस्ते हवं परितिष्ठात् सजात उत निष्ट्यः+।
अपाच इन्द्र तां नीत्वाथेममव गमय।।६।।

शौ.३.३.५ ह्वयन्तु त्वा पञ्च जनाः पतिमित्रा अवर्षत।
इन्द्राग्नी विश्वे देवा विशि क्षेममदीधरन्।।७।।

---

४ का. श्येनो हविन्नयत्वा . . . अप(→पु)रुध्यं * अश्विनां ** सजन्ते
* सुजाता अभिसंषं . . .;
ग उ. *** सुगन्ते; घ ज. एको दण्डः।

५ क वा. . . . सिक्षे; का. श्येनो . . . . ;
ख का. इन्द्रं ** दूतावा; वा. . . आवः(→वह)।
म. . . . वात . . .। ज. . . . आवः।
गघ का. विषिय * । सेनाग्नै विषो वृषणानो अधराकासी;
गघ उ. ** सेनाग्नैर्विशो . . .।।
वा, ज. . . गछ * ।। उ. अवग्रहो नास्ति। घ ज. एको दण्डः।

६ का. . . प्रतिनिष्ट्यात् सजाता * निष्ट्या z२z
अपात * तां मीत्वायथेहमवगायः;
ख उ. ** निष्टियः। घ वा, म. अथेममव *।।
ग द्र. तां < तान्?

७ का. ह्वयन्ति ** जन्याः * वर्षत;
क वा. ह्वयंन्तु ** ; ज. ह्वयन्ति → न्तु . . .;
घ का. . . धीधरं z३z

पुनर्द्यौर्देवी पुनरन्तरिक्ष-
मग्निर्वातः पवमानो भिषज्यतु।
ग्राह्याः पाशान्निर्ऋत्याः पाशान्मृत्योः
पाशाद्वाक् त्वा देवी पुनर्ददातु।।५

इति द्वितीयकाण्डे षोडशोऽनुवाकः

२.८१

इदं +चक्षुर्ऋतावरी मा मा हासीत् पुरायुषः।
यद्वां तमो यदृपिशमप वां तन्नि दध्मसि।।१।।

यदन्धियं यदल्गणं योऽर्मो अधिरोहति।
अयस्मयस्तदङ्कुशोऽक्षोर्ममप लुम्पतु*।।२।।

---

५ क का. . . . पुनन्तरिक्ष -; ज. . . . देवी . . .;
गघ का. * पाशांनिर्ऋत्याष्पाशांमृत्योः पर्शाद्वाकृच * . . .z४z
ग वा. * पाशानिर्ऋत्याः. . .;
घ ज. पाशाद्दाक् . . .।।ऋ ५।।८०।।अ १६।।
२.८१.१ का. * . . . र्पतावरी * हिंसीत् . . .कल्लपिषमपवाचंनि *।
क उ. * चक्षुरुतावरी
गघ उ. यद्वान्तमो . . . वान्तंनि *।। द्र. वा. यदृपि → फि . . .;
ज. 'यदृपिशम(म. → ठ)प' इति
< यदृबीसमप? 'रिपिशमित्यस्य हिंसनमित्यर्थो भवेत् किम्?' इति दुर्गामोहनपादाः।
२ का. इदंधेह्यदगणं यथोर्मातिरोहति। अयस्मयस्तराङ्कुशो अक्षौररंम-मपुलंपतु z
ख वा. क्षो → योर्मो *। म. क्षोर्मो * । ज. क्षोऽर्मो *।
गघ वा. . . . स्तदंकुशोक्ष्यो (+च) र्ममपलंपतु।।
म. . . . लंपतु।। ज. . . . शोक्ष्योर्ममपलंपतु।।
द्र. घ. < अक्ष्णोऽर्मम् अपलुम्पंतु ?

यमज्याजिमजयं नृचक्षा
यं वा श्येनः शकुनिर्यं सुपर्णः।
यदाहुश्चक्षुरदितेरनन्तं
सोमो नृचक्षा मयि तद् दधातु।।३।।

यथा चक्षुः सुपर्णस्य यथाश्वस्य यथा शुनः।
एवा मे अश्विना चक्षुः कृणुतं पुष्करस्रजा।।४।।

यस्याः सुपर्णः प्रपतन् चक्षुषा चक्षुराददे।
तस्याः समुद्रजे तव चक्षुषा चक्षुरा ददे।।५।।

## २.८२

अग्निं ते हरः सिषक्तु यातुधान स्वाहा।।१।।

---

३ कख का. यमह्याधमुजयं * * शंसेनश् . .. सुपर्णा;
क म. यमज्यानि → जिमजयं . . .;
द्र. * यमद्याजिमित्यादिकः शोधो ध्येयः।
ख वा. . . श्वेनः. . .। म. . . . जंसुपर्ण्णः। ज. यम्वा. . .।
गघ का. उदाहुश्चक्षुरुदिते . . . तदूदमंधातु।
ग वा. . . . क्षुरु → रदिते. . .; म. यदाहुच. . .;

४ कख का. * * सुपर्णश्च . . . श्वश्रू * *;
वा. * श्चक्षु *; म. * चक्षु *;
घ का. * . . . स्रज।

५ का. यस्यसुसुपर्णप्रपतश् *. . . दधे
तस्याह * उव * . ... दधे z५z अनु १६zzz
क. उ. * * प्रपतं;
ग वा. * समुदूए *; म, ज. * समुद्रये *;

२.८२.१. का. अग्निस्ते हारस् * * *;
उ. काण्डिकायां प्रथमपदद्वये अनुस्वारस्य बहुलं नूकारादेशः; २-५ मन्त्रेषु यातुधानस्वाहेत्यूह्यम्; १-५ सर्वत्र शिषक्तु इति। २-४ का. यातुधानस्वाहेत्यूह्यम्। पत्रस्य दक्षिणतः "रक्षा मन्त्रह ४" इति।

२.७९

हिरण्यपुष्पी सुभगा कूपश्चायं सुमङ्गलः।
तावेनां भद्रया धत्ताममृतावमृते भगे।।१।।

हिरण्यं पृङ्गद्धरितं तत्ते अङ्गेषु रोहतु।
शौ.१४.१.५५ ग तेनेमामश्विनौ नारीं भगेनाभि षिञ्चतम्।।२।।

यथा कूपमुदहृदस्तृष्यन्तो+ यन्ति कामिनः।
एवा त्वा सर्वे देवरः पतयो यन्तु कामिनः।।३।।

हिरण्याक्षि मधुवर्णे हिरण्यपरिचर्तने।
अङ्गो+ हिरण्ययस्तव तेनास्यै पतिमा वह।।४।।

शौ.७.३८.५ यदि वासि तिरोजनं+ यदि वा नद्यस्तिरः।
पै.३.२९.६ इयं त्वा मह्यमोषधिरङ्क्नेव+ न्यानयात्।।५।।

---

२.७९.१ का. * * . . . सुमङ्गल . . . दत्ताम . . .*;
उ. घ. . . . मृतो *।। द्र. ख बेरेट् 'रूपश्चायं'। तत् प्रामादिकम्।

२ का. हिरण्यपिद्धंहरितं . . . रोहति . . . नारी . . .;
क वा. * पृङ्वधरितं ; म. * पुङ्वद्धरितं;
ख वा. षु इत्यस्योपरि 'सा' इति।
घ म. . . षिञ्चितं।।

३ कख का. * कूपसुधृतस्तृप्यन्तो * *; उ. . . . स्तुष्यन्तो * * *।
बेरेट् 'रूप' . . .। प्रामादिकं तत्।
घ का. पेतयो यंतु *; वा * युन्तु *।। म. . . यन्ति *।।

४ का. हिरण्याक्ष मधुवर्णो . . .
अङ्कं . . . यस्तुव तेनास्यैः . . .;
क वा * मधुपर्ण्णे; ज. * मधुम → वर्ण्णे;
ख उ. हिरण्यपरिवर्त्तने। ग उ. अङ्गो . . .;

५ क का. * वास्पदिरोचनं; ज यदी . . .; उ. . . तिरोदनं;
खघ का. . स्तिर यं * . . . रङ्क्नेमन्यानय Z३Z
घ उ. -रङ्क्नेवं . . . ।।ऋ ५।।७९।।

## २.८०

पुनः प्राणं पुनरपानमस्मै
पुनर्व्यानमुत सोम धेहि।
आत्मायं चक्षुरुदते समान-
स्तमू नु पाहि तमू नु जीव जागृहि।।१।।

त्वष्टा रूपेण सविता सवेना-
हर्मित्रेण वरुणेन रात्री।
इन्द्रो ज्यैष्ठ्येन ब्रह्मणायं बृहस्पतिः
पूषास्मै पुनरसुं दधातु।।२।।

य आदित्या वसवो ये च रुद्रा
विश्वे देवा अदितिर्या च रात्री।
यज्ञो भगः सविता ये च देवा
यमोऽस्मै पुनरसुं दधातु।।३।।

पुनस्ते राजा वरुणो दधातु
सोमो राजाऽसुमित्ते पुनर्दात्।
इन्द्रो मरुद्भिरश्विना ते भिषज्यता-
मग्नी रुद्रोऽसुमित्ते पुनर्दात्।।४।।

---

२.८०.१ क का. . . . पानं अस्मै;
गघ का. आत्मानंचक्षुरुदिते . . . स्तमनु * तमनु * जागृवि।
घ ज. -स्तमू (→नू) न * स्तमू . . .।। वा, म. . . * स्तमू * * *।।

२ का. त्वाष्टा * * सवेन अहर्मि . .* ज्येष्ठेन ब्रह्मणाय * . . रसं *;
ख वा, ज. - हंमित्रेण * * । म. - हम्मित्रेण * * ।
गघ ज. * ज्यैष्ठेन . . . पुनरमुं *।।

३ क का. यथादित्या . . .; ज. . . . चे → जे * *;
गघ का. . . ये च। * . . . रसं * । घ वा. अवग्रहो नास्ति।

४ क का. नास्ति। म, ज. . . . ददातु;
ख-घ का. * * असुचित्ते पुनर्मा इन्द्रो . . . भिषज्यदग्नी * वसुवित्त. .;
खग वा. * * सुमित्ये → त्ते . . .। * . . . भेषज्यता — ;
घ ज. . . . सुमित्ये . . .।। द्र. पुस्तिकासु अवग्रहो नास्ति।

२.७७

द्र.शौ.१.३४.२ग पै.३.२६.४गघ अहं बिभर्मि ते मनो अहं चित्तमहं व्रतम्।
ममेदपि क्रतावसो मम चित्ते सचावहै।।१।।

आमना अस इहमना अस
इह ते रमतां मनः।
मयि ते रमतां मनः।।२।।

शौ.६.१०२.३कख आञ्जनस्य मधुघस्य कुष्ठस्य नलदस्य च।
वीरोदेकस्य मूलेन मुखे निमन्दनं कृतम्।।३।।

मधु मे अन्तरास्ये मुखे निमन्दनं कृतम्।
तत्रो त्वं वि वर्तस्व नराचीव वर्तसि।।४।।

शौ.६.८.१खग यथा नेमी रथचक्रं समन्तं परिषस्वजे।
एवा परि ष्वजस्व मा यथासन्मयि ते मनः।।५।।

---

२.७७.१ ख म, ज. ऽहं. .। का. . व्रव्रतं . . दप. . ममासश्चेदसीदपि।
२ कख का. आम्नासै (→ मै) ख्रासैंहितेरमतां मनो;
३ का. आंजनस्य मधुषस्य * नलतस्य *। वीरोदीकस्य * * नर्मदनं *;
ख उ. * नळदस्य *;
ग वा. वीरोदे → दकस्य *; म. * मूळे न;
द्र. ३घ, ४ख निमन्दनं; का - मन्दनं तथा - मर्दनं; र-नयोर्मिथोभ्रमः प्रायिकः। उ. दुर्गामोहनपादैर्यत् निमथिनं इति पठितं तत् उ. पुस्तिकासु 'न्द' 'थि' वर्णयोर्लेखने भेदाभावात्। केवलं म पुस्तिकायां स्वल्पो भेदो दृश्यते।
४ का. * * . . . . . * नमन्दनं *. . . नराची इव *।
५ गघ का. * * षस्व * यथासंपयि * *z9z
वा. * * षजष्व . . . सन्मइ → यि * * ।।ऋ ५।। ७७।।

२.७८

यथेदमश्विना तृणं वातो वहति भूम्याः।
एवा वयं वहामसि यां वयं कामयामहे।।१।।

उत्त्वा माता स्थापयतु प्र त्वा नुदतामश्विना।
अथा शिशुरिव[+] मातरं मामेवान्वेतु ते मनः।।२।।

यथा क्षीरं च सर्पिश्च मनुष्याणां हृदः प्रियम्।
एवाहमस्या नार्या हृदो भूयासमुत्तरः।।३।।

अग्नेष्ट्वा तपस्तपतु वातस्य ध्राजिः।
मा स्पृक्षथा निषदनाय साधव
उत्तिष्ठ प्रेह्यग्निवत्ते कृणोमि।।४।।

सूर्यस्य त्वा तपस्तपतु वातस्य ध्राजिः।
मा स्पृक्षथा निषदनाय साधव
उत्तिष्ठ प्रेहि सूर्यवत्ते कृणोमि।।५।।

---

२.७८.१ कख का. . . त्रिणं * हवतु भूम्यां;
२ क का, उ. उत्वा * *; ख वा. प्र → न्र *. . .।
गघ का. दाश्वशुरिव *. . . वाजोतु * *;
ग उ. * शिषुरिव *;
३ क वा. * क्षीरंञ्व . . .; ज. * क्षीरञ्व . . .; द्र. का. पत्रस्य वामत एकत्रचां इति।
ख-घ का. * हये *। . . . नारीया * . . . मुत्तमः;
४ क-ग का. . . . व्राजि * स्पृक्षता निषदनानिमाधव;
घ उ. * . . . वर्त्ते *।।
५ क-ग का. सुर्यस्त्वा . . . व्राजि * . . . तातिषदनानिमाधव;
घ उ. * * . . . वर्त्ते *।। ऋ ५।।७८।।

२.७५

प्रजापतिरनवर्तिः स प्रजाभिरनवर्तिः।
स मानवर्तिरनवर्तिं कृणोतु।।१।।

इन्द्रो ऽनवर्तिः स वीर्येणानवर्तिः।
स मानवर्तिरनवर्तिं कृणोतु।।२।।

सोमो ऽनवर्तिः स ओषधीभिरनवर्तिः।
स मानवर्तिरनवर्तिं कृणोतु।।३।।

आपो ऽनवर्तयस्ताः पर्जन्येनानवर्तयः।
ता मानवर्तयो ऽनवर्तिं कृण्वन्तु।।४।।

देवा *अनवर्तयस्ते ऽमृतेनानवर्तयः।
ते मानवर्तयो ऽनवर्तिं कृण्वन्तु।।५।।

इति द्वितीयकाण्डे पञ्चदशोऽनुवाकः

---

२.७५.१ का.... रनुवर्तिस्... रनुवन्तिः... नुवर्ति अनुवन्तिं *। द्र. का. सर्वत्र 'अनवर्ति' इत्यस्य स्थले 'अनुवर्ति' 'अनुवन्ति' इति वा। उ. सर्वत्र तकारद्वित्वम्।

२ उ, का. अवग्रहो नास्ति। द्वितीयार्धो नास्ति।

३ उ, का. अवग्रहो नास्ति। का. द्वितीयार्धो नास्ति।

४ क ज. नष्टः। का. १ द्र.।

५ कख का. * नुवर्तयस्तेमृतेनानु...; उ. * नवर्त्तयस्ते...।

द्र. अवग्रहो नास्ति।

गघ का. * मानुवर्तयोरनु... z४z उ. अनुवाकसङ्केतः।

## २.७६

पयो मह्यमोषधयः पयो मे वीरुधो दधन्।
अपां पयस्वद् यत् पयस्तन्मे वर्षन्तु वृष्टयः।।१।।

पयो मह्यं पयस्वन्तो हस्तिनो मे पयो दधन्।
पयः पतत्रिणो मह्यमैणेया[+] मे पयो दधन्।।२।।

पयस्वन् मे क्षेत्रमस्तु पयस्वदुत धान्यम्।
अहं पयस्वान् भूयासं गावो म उत पयस्वतीः।।३।।

पयो मह्यमप्सरसो गन्धर्वा मे पयो दधन्।
पयो मे विश्वा भूतानि वातो दधातु मे पयः।।४।।

पयो मह्यं द्यावापृथिवी अन्तरिक्षं पयो दधत्।
पयो म इन्द्रश्चाग्निश्च धाता दधातु मे पयः।।५।।

---

२.७६.१ का. . . . दधं। * पयस्वाद् * पयस्तेन्वे * *;
२ का. . परस्वन्तो . . . दधं। * * मह्यं वीणया * * दधं।
गघ उ. . . . मह्यमैणेजा. . .।।
३ का. पयस्वान्द्रे . . . पयस्वदृतुधां। . . . * मोत *;
४ कख का. . . . प्सरसं . . दधं।
५ ख म. * * * दधन् → त्।
ग का. * मे विश्वा भूतानि;
द्र. का. पयष्पृथिव्यांपयओषधीषुपयोधिव्यन्तरिक्ष
पयोधः पयस्वतीष्प्रदिशंस्सन्तु मह्यम् zz
z५z अनु १५z इत्यधिकं काश्मीरीये भुर्जपत्रे।
अयं यजुर्वेदे (वा. १८.३६, काठ. १८.७१ इत्यादयः) सूक्तान्तरे पठ्यते। उ. पुस्तिकासु तु मन्त्राः पञ्चैवेति सूचितम्। काश्मीरीये मन्त्रारम्भे पार्श्वतः पयष्पृथिव्यां १ इति सूचितम्। किं काठकप्रभावादस्यात्रान्तर्भुक्तिः?

शौ.१.२१.३ ऋ.१०.१५२.३ वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासति।।२।।

शौ.१.२१.२ ऋ.१०.१५२.४ वि न इन्द्र वि मृधो जहि नीचा यच्छ पृतन्यतः।
अधमं गमया तमो यो अस्माँ अभिदासति।।३।।

शौ.१.२१.१ ऋ.१०.१५२.२ स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुर एतु नः सोमपा अभयङ्करः।।४।।

शौ.१.२१.४ ऋ.१०.१५२.५ अपेन्द्र द्विषतो मनो ऽप जिज्यासतो वधम्।
वि महच्छर्म यच्छ वरीयो यावया वधम्।।५।।

---

२ का. क, ग सा. अ.।
ख म. * वृत्तस्य हनु *। वा. * वृत्तस्य . . .। ज. * वृर्त्त → त्रस्य . . .।
गघ वा. . . . वृतहंनमि . . .।। म. . . .वृव्रहन्न. . .।।
ज. . . . वृत्रहंनमि . . .।।
३ कख का. सा. अ.। वा, ज. . . यछ *।
ग उ. अधमङ्गमया *;
घ वा. * अस्मातं *।। म. * अस्मां → ङ् *।।
ज. * ऽस्माङ् *। का. * अस्मा *।
४ ख का. -वृत्रहा विमृदोजहि।
घ वा, म. * अभयंकरः।।
५ ख वा, ज. ऽपि ( ← प वा.) जिह्यासतो *। म. * जह्यासतो *।
गघ का. * महश्शर्म * * यवधा * z२z
ग वा. * महछ → शर्मयछ; म. * महछर्म *;

## २.८६

अयं योतितरो मणिस्तेनाति तर दुःश्यसः।
सपत्नां द्विषतो मणे प्र णुदस्व पृतन्यतः।।१।।

प्र णुदस्व प्र सहस्व सपत्नां द्विषतो मणे।
तराभिमातिं दुःश्यसां वर्चो भङ्ग्धि
*पृतन्यताम्।।२।।

वर्चो जहि मन्युं जह्याकूतिं द्विषतां मणे।
देवो योतितरो मणिस्तेनाति तर धूर्वतः।।३।।

ये धूर्वन्ति ये द्रुह्यन्ति ये द्विषन्ति पृतन्यतः।
सर्वां सपत्नांस्ते *मणिर्निमन्युं द्विषतस्करत्।।४।।

---

२.८६.१ का. योतितरो . . . . तरुष्वसः सपत्नां * * पृणुतस्व पृदन्यतः।
क ज. * यो → ज्योतितरो . . .;
गघ वा. सपला * * * * प्रुतंन्यतः।।
घ ज. . . . . प्रुतन्यतः।
द्र. दुःश्यसः। अर्थो दुर्ग्रहः। = दुःश्वसः?
२ का. पृणुतस्व * दहस्व सपत्रां * * तरापिमहतं दुष्वसां * भङ्क्ति प्रदन्यतां;
ग म. . . . . माति *;
घ वा. . . . . प्रुतन्यतां।। म, ज. प्रतन्यतां।।
३ घ का. . . . . घूर्वता।
४ कख ज. * दृह्यन्ति . . . प्रुतन्यतः।
ख-घ का. . . . . प्रतन्यतः। * सपत्नास्ते मनिर्णमन्युं . . .;
उ. . . . मणिनिमन्युं . . .।।

उदीचीं दिशमास्थां सोमो मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।४।।

ध्रुवां दिशमास्थां विष्णुर्मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।५।।

ऊर्ध्वां दिशमास्थां बृहस्पतिर्मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।६।।

२.८७

कौ.१०७.२ मनायी तन्तुं प्रथमं पश्चेदन्या अतन्वत।
तन्नारीः प्र ब्रवीमि वः साध्वीर्वः सन्तूर्वरीः।।१।।

साधुर्वस्तन्तुर्भवतु साधुरोतुरथो+ वृता।
अथो होर्वरीर्यूयं प्रातर्वोढ्व धावत।।२।।

---

५ का. घ्रुवं . . .;
म घृवां . . .;

६ म. ऊर्द्धां . . .; वा, ज. ऊर्द्ध्वां . . .;
का, म, ज. . . मावत्वौजसे . . .।। ऋ६।।८६।।
का. . . प्रिय भूयासां अनुमित्त्रा . . . तीका zz५zअ १७z

२.८७.१. का. * तंतु . . दंव्यातन्वत तंनारी * * वशादीर्णा सन्तु( → म्तू;
मु. स्तू )र्वरी;
क उ. मनायै * (वा. तन्तु; म. तन्तं) *;
ग वा, म. तंनारीः * * ; घ वा, म. . . . सन्तुर्वरीः।।
कौ. मनायै, पश्येदन्या। अस्माभिर्गृहीतः पाठः नामूलःअर्थवहोऽपि।

२ का. साडुर्व्यस्तन्तुम्भवतिसाधुनोडुरितोवृकः . . . प्रात्तर्वोढेव धावजा;
क वा, ज. साधूर्वः सन्तूर्भवतु; म. साधुर्वः संतुर्भवतु;
ख उ. साधुरोत्त (←त, वा.) रथो वृता (→ताः, वा)।
ग म. * होरर्व . . .; घ ज. . . . वोंडेव *।।

खल्गला इव पत्वरीरपामुग्रमिवायनम्।
पतन्तु पत्वरीरिवोर्वरीः साधुना पथा।।३।।

अपाच्यौ तोतुद्येते तोदेनाश्वतराविव।
प्र स्तौममुर्वरीणां शसयानामस्ताविषम्।।४।।

नारी पञ्चमयूखं सूत्रवत् कृणुतं वसु।
अरिष्ठे अस्य वस्ता प्रेन्द्र वास उतौरिव।।५।।

२.८८

शौ.१.२०.४
ऋ.१०.१५२.१ शास इत्था महाँ अस्यमित्रघातो अद्भुतः।
न यस्य हन्यते सखा न जीयते कदा चन।।१।।

---

३ कग का. खर्गलायुर्वपतुरीरपा अग्रमि . . .। * प्रत्वरी . . .;
ग वा. * पत्वरिरीवो; गघ ज. . . रिवोवरीः * *।।उ. . . . यथा।।

४ का. अवच्यु तौतुभ्येतेतेदेवाश्वतराविव। प्रस्तोमसुर्वरीणां खषयाना मस्त्वा . . .।
कौ. शशयाना-; श्वसयाना- इति पाठौ। प्रथमपादे अवाच्यो, अवाच्यौ, तैनुद्योतै, तोनुद्योते इति।
ख उ. . . . तरामि(म. → वि)व।

५ क का. * . . . मयोषं; वा. * पंचमयुखं;
ग का. * स्यवंस्था प्रियंदवासि ततौतिर z१z
म. * ऽस्य *;
घ ज. . . वासीतौरिव ।।ऋ५।।८७।।

द्र. घ गृहीतः पाठः 'उतौरिव' इति दुःसम्पादः। कौ. उतोदिर, उतौदिर, उतोदिरा, उतोदि, उतोदे इति पञ्च पाठाः। ओतोरिव इति शोधो ध्येयः।

२.८८.१ कख का. * * महं अस्यामिच्चखाघातो *;
क वा. शासयित्था महां *; म, ज. * * महां *;
ख म . . . ऽद्भुतः।
ग वा. * * हंन्यते *;

इदं ते त्वचं भिनद्मि यातुधान स्वाहे-
दं ते प्राणान् नि तृणद्मि भूम्याम्।।१०।।

इदं ते परूंषि भिनद्मि यातुधान स्वाहे-
दं ते मज्ज्ञो* नि तृणद्मि भूम्याम्।।११।।

२.८५

नर्दमोद लबुन्तक जिष्णो ह्यपराजितः।
अमुं भ्रूणान्यर्पय स्वयं पाशं न्यायति।।१।।

असुरैतु सहक्रतुरात्मा प्राणो अथो बलम्।
स नो दधातु भद्रयाग्निर्विश्वाद्वसुमान् स्वस्तये।।२।।

क-ग पै.७.१५.१क-गदक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यतः।
पश्चादनु व्याधात् पातु पुरस्तात् पातु दक्षिणा।।३।।

शतमापो दिव्या मित्रस्य च दक्षिणाः।
धाता सविताद्रुद्रस्ते नो मुञ्चन्त्वंहसः।।४।।

---

१० का. . . . प्राणं *; म, ज. . . . प्राणा *;

११ का. * * परूँषि . . . मज्ञो नि तराणेनद्दि * Z३Z
ख उ. . . मज्ञो . . . ।।ऋ ११।।८४।।

२.८५.१ का. नन्दमोदलमन्तक जिष्णु . . . जित * भ्रुणान्यर्पय * पाशान्यायती;
ग वा. * भ्रूणांन्यर्पय;
घ वा, म. * पाश → शं *।। ज. .. पाश *।।
द्र. क तु. नर्दबुद तै. सं. ३.३.१०.१।

२ का. . . रातुमा * * * * * * भद्रया अग्निर्विश्वाद्वासुमा *;
क वा. . . . सहुक्रतु -;
घ वा, ज. . . . सुमान *।। म. . . . र्विश्वावसु . . .।

३ गघ का. पश्चादनंव्यधात् * सर्वस्याभवत्हेत्या;

४ ख का. . . . दक्षिणः। वा. सित्रस्य. . .।
ग का. . . तारुद्रस्;

शतं पाशा वरुणस्य ब्रह्मणस्पतेरु शतम्।
मर्तात् पाशान्नो वि ष्य शतात् पाशेभ्यो
वयं त्वाम्।।५।।

इति द्वितीयकाण्डे सप्तदशोऽनुवाकः

## २.८६

प्राचीं दिशमास्थामग्निर्मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।१।।

दक्षिणां दिशमास्थामिन्द्रो मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।२।।

प्रतीचीं दिशमास्थां वरुणो मावत्वो-
जसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीकाः।।३।।

---

५ का. * पाशातु * . . . तेश्चते मान्तन्पाशां नो विश्य . . . न्तां z४z
क ज. शत * *;
ग वा. . . विश्व;
घ वा. . , वयं → यन्त्वां ।।ऋ५।।८५।।अ१७।।

२.८६ सामान्याः - २-५ का. बलाय इत्यत ऊह्यम्।
उ. -माव- इत्यत ऊह्यम्।

१ का. . . . र्मावत्वोजमे . . . सं अनमित्वा . . . प्रतीका;
म, ज . . . र्मावत्वौजसे * . . . । . . . घृतःप्रतीकाः।।

वातं ते प्राणः सिषक्तु यातुधान स्वाहा। ।२। ।
सूर्यं ते चक्षुः सिषक्तु यातुधान स्वाहा। ।३। ।
अन्तरिक्षं ते श्रोत्रं सिषक्तु यातुधान स्वाहा। ।४। ।
परमां ते परावतं मनः सिषक्तु यातुधान स्वाहा। ।५। ।

२.८३

अपस्ते रसः सिषक्तु यातुधान स्वाहा। ।१। ।
ओषधीस्ते लोमानि सिसञ्चन्तु यातुधान स्वाहा। ।२। ।
पृथिवीं ते शरीरं सिषक्तु यातुधान स्वाहा। ।३। ।
समुद्रं ते वाक् सिषक्तु यातुधान स्वाहा। ।४। ।
निर्ऋत्यास्त्वासनि जुहोमि यातुधान स्वाहा। ।५। ।

२.८४

इदं ते शिरो भिनद्मि यातुधान स्वाहे-
दं ते मस्तिष्कं नि तृणद्मि भूम्याम्। ।१। ।

इदं ते हनू भिनद्मि यातुधान स्वाहे-
दं ते जिह्वा नि तृणद्मि भूम्याम्। ।२। ।

---

२ म. . . . प्राण *। ३ म. . . चक्षु *। ।

२.८३. उ. पूर्वकाण्डिकावदनुस्वारस्य बहुलं नकारादेशः। ४र्थमन्त्रं यावद् यातुधानस्वाहेत्यूह्यम्। सर्वत्र शिषक्तु इति। २ वा. . . शिसिंचन्तु। ।
का. २ यातुधानस्वाहेत्यूह्यम्। २ . . . सिषजन्तु; ३ नास्ति। ४* देवास् * * * Z२Z ५. नास्ति।

२.८४ सामान्याः - उ. सर्वत्र 'इदन्ते' इति। २क-१०क म, ज, का. आदौ इदं इत्यूह्यम्। तथा 'तृणद्मि भूम्यामित्यपि। वा. ४, ५, ६, ८, १० 'तृणद्मि भूम्यामित्यूह्यम्। का. 'भिनद्मि' इत्यत्र बहुलं 'भिनद्दि'।

१ ख का. . . नि तरणनद्दि *;

२ का. ते हनो . . .; म, ज. ते हनु . . .। ।

इदं ते ग्रीवा भिनद्मि यातुधान स्वाहे-
दं ते स्कन्धा नि तृणद्मि भूम्याम्।।३।।

इदं ते अंसौ भिनद्मि यातुधान स्वाहे-
दं ते बाहू नि तृणद्मि भूम्याम्।।४।।

इदं ते हृदयं भिनद्मि यातुधान स्वाहे-
दं ते क्लोमानं नि तृणद्मि भूम्याम्।।५।।

इदं ते पृष्ठी भिनद्मि यातुधान स्वाहे-
दं ते पर्शू नि तृणद्मि भूम्याम्।।६।।

इदं ते श्रोणी भिनद्मि यातुधान स्वाहे-
दं ते वस्त्रं नि तृणद्मि भूम्याम्।।७।।

इदं त ऊरू भिनद्मि यातुधान स्वाहे-
दं ते जङ्घे नि तृणद्मि भूम्याम्।।८।।

इदं ते कुलूफौ भिनद्मि यातुधान स्वाहे-
दं ते पादौ नि तृणद्मि भूम्याम्।।९।।

---

३ का. . . . भिनद्दि . . ; वा. . . स्कन्धां * * *।।
४ का. * सौ. . .;
५ ग का. . . . लोमा *; द्र. = का. ६ग
६ क का. * पृष्ठे . . .; = का. ७क
६ ग का. * परिषूर्णि; = को. ५ग
७ क का. * * भिनद्दि . . .; = का ६क
७ ग का. * वस्ता *;
८ म, ज. ते उरु . . . जंघे *।। वा. ते * . . . जंघे *।।
का. . जङ्घे भिनद्दि यातुधानस्वाहेदं;
९ का. तेगुल्फौ . . .;

तव चित्ते तव व्रते तवैवाधस्पदं चरान्।
देवो योतितरो मणिस्तेनाति तर दुःश्यसः।।५।।

२.६०

आ ते मनश्चक्षुष्यमा ते हृदय्यं ददे।
पदोष्टे पद्यमा ददे यथा तिष्ठासि मे वशे।।१।।

शौ.६.६.१ पै.२.३३.२क,ख द्रः　वाञ्छ मे पादौ तन्वं वाञ्छाक्ष्यौ वाञ्छ सकृथ्यौ।
अक्ष्यौ वृषण्यन्त्याः केशा ओष्ठौ मां ते कामेन शुष्यताम्।।२।।

शौ.६.६.२　मयि त्वा दोषणिश्लिषं कृणोमि हृदयश्लिषम्।
शौ.१.३४.२ग पै.२.७७.१गघ　यथा मम क्रतावसो ममासश्चेदसीदपि।।३।।

शौ.६.६.३　यासां नाभिरारेहणं हृदि संवननं कृतम्।
गावो घृतस्य मातरोऽमूं सं वानयन्तु मे।।४।।

---

५ खग का. . . . चरां। * योन्यतरो . . . दुष्वमा z३z

२.६०.१ कख का. * * . . . क्षुश्चआमा * हृदयं *;
क वा. * * मनचक्षुष्य - ; ख ज. . . य्यन्दते → दे।
ग उ. पदोष्ठे . . .; घ का * * * वशेवशे;

२ का. * से * तन्वां वाच्छाक्षूर्वांच्छसक्ष्न्यू
अक्षो . . . आष्यतां;
ख म, ज. . . शकृथ्यौ। वा. . . शसकृथ्यौ।
ग वा. * वृषन्यन्त्याः * ; घ उ. . . . मान्ते. . .।।

३ का. मै * दूषणिमृगां णोमि हृदयस्पृगं ममेदप . . . श्चेदसश्चेदसीदपि;
ख वा. * हृदयंश्लिषं।।

४ का. क, घ सा. अ.।
क म. * . . . हणं; घ वा, ज. ऽनास्ति।

पै.२.३५.५ कख महां त्वा द्यावापृथिवी महां देवी सरस्वती।
महां त्वेन्द्रश्चाग्निश्चाहोरात्रे नि यच्छताम्।।५।।

पै.२.४२ द्रः २.६१

तूलि मूल्यर्जुनि। पुनर्वो यन्तु यातवः
पुनर्जूतिः किमीदिनीः।
यस्य स्थ तमत्त यो वः प्राहैत्त-
मत्त स्वा मांसान्यत्त।।१।।

अच्छवो जिघत्सवः पुनर्वो यन्तु यातवः
पुनर्जूतिः किमीदिनीः।
यस्य स्थ तमत्त यो वः प्राहैत्त-
मत्त स्वा मांसान्यत्त।।२।।

अविष्यवस्पास्यवः पुनर्वो यन्तु यातवः
पुनर्जूतिः किमीदिनीः।
यस्य स्थ तमत्त यो वः प्राहैत्त-
मत्त स्वा मांसान्यत्त।।३।।

---

५ गघ वा . . . गिश्चहोरात्रे * यछतां।। . . .
ज. . . . यछतां ।।ऋ ५।।अ १८।।६०।।

२.६१.१ का. (तू→) भूलिर्मूल्यर्जुनी . . . यन्तियादवः . . . किमीदिनी *
* दमत्त * व प्रहीत्तमुत्त मसंसान्यत्तः;
ज. ग पु इत्यस्योपरि घ य इत्यस्योपरि च द्वौ दण्डौ।
घ वा. * स्थितः →'तमोत;
म, ज. * स्थितमत;
ङ उ. * * प्राहैतमतु (वा. मुत);

२ क का. * जिघच्छवः; वा, ज. अच्छ्यवो. . .।।
म. अंछ्यवो *।। वा. * जिघछवः।।

द्र. २-४ का, उ. खपादत ऊह्यम्।

३ का. हविष्यवष्पाश्यवः;

स्फातिहारी रसहारीः पुनर्वो यन्तु यातवः
पुनर्जूतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्त-
मत्त स्वा मांसान्यत्त । ।४ । ।

वातजूते मनोजवः पुनर्वो यन्तु यातवः
पुनर्जूतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्त-
मत्त स्वा मांसान्यत्त । ।५ । ।

द्वितीयकाण्डेऽष्टादशोऽनुवाकः

। ।* । । इत्यथर्ववेदे पैप्पलादसंहितायां पञ्चर्चो नाम द्वितीयः काण्डः । ।* । ।

---

४　　का. * रमहारी;

५ क　वा वातयुते मनोज → यवः;

ख-च　का. . . यन्ति यादवः . . . दिनी . . . दमत्त * व प्राहीत्तमुत्त मांसान्यत्तः zz
ओँ तमुत्तस्मामांसान्यत्तः zz५zअनुवा १८z
z इति अथर्वणिपिप्पलादशाखायां द्वितीयष्काण्डस् समाप्तः z z

ग　वा. पुनर्जुतिः * ।

घङच　उ. * स्थितमत * * प्राहैतमतु (वा.त) * मांसान्यत्त । । (वा. . . न्यत् । ।)
काण्डान्ते वा. ऋ५ । ।६१ । ।६१ । ।इतिपञ्चर्च्चकाण्डः समाप्तः । ।
श्रीलक्ष्मनृसिंहरक्ष्याकर अधमकु । ।श्री । ।
म१, ज. । ।ऋ५ । ।६१ । ।अ १८ । । इति पञ्चर्च्चकाण्डः समाप्तः । ।
म२. ६१ । ।ऋ५ । ।इत्ये पञ्चर्च्चकाण्डे अष्टादशो अनुवाकः । ।अ१८ । । पञ्चर्च्चकाण्डः समाप्तः । ।

# तृतीयः काण्डः

## ३.१

शौ. ३.४.१-७ आ त्वा गन् राष्ट्रं सह वर्चसोदिहि
प्राङ् विशां पतिरेकराट् त्वं वि राज।
सर्वास्त्वा राजन् प्रदिशो ह्वयन्तू-
पसद्यो नमस्यो भवेह।।१।।

त्वां विशो वृणतां राज्याय
त्वामिमाः प्रदिशः पञ्च देवीः।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्वा-
तो वसूनि वि भजास्युग्रः।।२।।

---

काण्डारम्भे का. ओँ नमो गणाधिपतये zz ओँ . . .
वा. श्री।। श्रीगणेशायनमः।। ओँ . . . .
म. ओँ . . .
ज. श्रीगणेशरक्षाकरिवे अरक्षीतदयानिधिकि। पातु मां दशरथात्मजः।। ओँ

३.१.१. कख का. सा. अ.।
क वा. * * गन् → गन . . .; ज. . . . गन *; . . .;
ख वा. * विशां → ङ् . . . .।
ग उ. . . . . ह्वयन्तु -;
२ का. क-ग सा. अ.। ग ज. वष्मन् . . . .;
घ का. -तो * विभजाम्यग्राः;
उ. - तो वसुनि . . .।।

+अच्छ त्वा यन्तु हविनः सजाता
अग्निर्दूतो अजिरः सन्तुरातिः।
जायाः पुत्राः सुमनसो भवन्तु
बहुं बलिं प्रति पश्यासा उग्रः।।३।।

अश्विना त्वाग्रे मित्रावरुणोभा
विश्वे देवा मरुतस्त्वा ह्वयन्तु।
पै.३.३३.५ ग सजातानां मध्यमेष्ठेयमस्याः
स्वे क्षेत्रे सवितेव वि राज।।४।।

आ प्र द्रव परमस्याः परावतः
शिवे ते द्यावापृथिवी अभूताम्।
तदयं राजा वरुणस्तथाह
स त्वायमह्वत् स इहेदमेहि।।५।।

इन्द्रेन्द्रं मनुष्यः परेहि
सं यज्ञियास्त्वा वरुणेन संविदानः।
स त्वायमह्वत् स्वे सधस्थे
स देवान् यक्षत् स उ कल्पयाद्विशः।।६।।

---

३ का. अश्छित्वायत्तु भुवनस्यजाताग्निर्दूतो वजरसेदधाति . . . .* पश्यामउग्रा zz
क उ. अछ . . . .; घ म१. * विलं . . . .।। म२. * विलं → वलिं . . . .।।

द्र. ख < सं तराति ?

४ क का. अश्ना . . .; ख ज. . . . द्वयन्तु।
गघ का. * . . . . . ष्टेहमस्या * * सविते * *।

५ क,ग का. सा. अ.।
ख का. . . . बभूतां। घ का. . . ह्वत्स्वेनमेहि।

६ कख का. . . . इन्द्रोइदंमनुष्यप्रेहि * हियज्ञियास्त्वा * *;
ख उ. . . . . सम्विदानः।
घ का. . . . सौकल्पयाद्दिशः। उ. * देवां . . .।।
वा, ज . . . . याद्विषः।

पथ्या रेवतीर्बहुधा विरूपाः
सर्वाः सङ्गत्य वरिवस्ते अक्रन्।
तास्त्वा सर्वाः संविदाना ह्वयन्तु
दशमीमुग्रः सुमना वशेह।।७।।

शौ.७.६४.१ द्रः यदजिरेण हविषाव त्वा गमयामसि।
ऋ.१०.१७३.६गघ अत्रात इन्द्रः केवलीर्विशो बलिहृतस्करत्।।८।।

३.२

शौ.३.७.१-३ हरिणस्य ⁺रघुष्यदोऽधि शीर्षणि भेषजम्।
सुक्षेत्रियं विषाणयाद् विषूचीनमनीनशत्।।१।।

अनु त्वा हरिणो वृषा पद्भिश्चतुर्भिरक्रमीत्।
विषाणे वि ष्य गुष्पितं यत् किञ्च क्षेत्रियं हृदि।।२।।

अदो यदवरोचते चतुष्पक्षमिव ⁺च्छदिः।
तेन ते सर्वं क्षेत्रियमङ्गेभ्यो नाशयामसि।।३।।

---

७ का. गघ सा. अ.। ग उ. . . सम्विदाना *; घ वा. . . . वसेह।।
८ कख का. यदिजरेणहविषाद * *। म२. . . . हविषावं * *।
क वा. यदिजिरेण . . . .;
गघ म. . . . . केव्रळीर्विशोवळि (म२. वळिं) . . . ।। १।।ऋ।।
घ ज. . . . हृतस्कत्।। ऋ ८।।१।।
३.२.१ क का. * रहुष्यदो; उ. * रघुस्यदो;
घ का. विषुचीमननीनशत्।
२ ग का. सा. अ.। वा. * * ष्य → ष्या? गुष्पि → ष्पुतं;
घ का. यदिकिञ्चित् * *;
३ ख का. . . . श्छति। वा. . . . त्सदिः। म, ज. . . . . छदिः।
घ वा. . . . नाशयमसि।।

शौ.२.८.१　उदगातां भगवती विचृतौ नाम तारके।
वि क्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम्।।४।।

शौ.३.७.६　*यद्वासुतेः *क्रियमाणायाः क्षेत्रियं त्वा व्यानशे।
वेदाहं तस्य भेषजं क्षेत्रियं नाशयामि ते।।५।।

शौ.३.७.७　अपवासे नक्षत्राणामपवास उतोषसाम्।
अपास्मत् सर्वमामयदप क्षेत्रियमक्रमीत्।।६।।

शौ.३.७.५　आप इद्वा उ भेषजीरापो अमीवचातनीः।
आपो विश्वस्य भेषजीस्तास्त्वा मुञ्चन्तु क्षेत्रियात्।।७।।

३.३

शौ.३.६.१　पुमान् पुंसः परिजातोऽश्वत्थः खदिरादधि।
स हन्तु शत्रूनं मामकान् यांश्चाहं द्वेष्मि ये च माम्।।१।।

शौ.३.६.२　तानश्वत्थ निः शृणीहि शत्रून् वैबाध दोधतः।
इन्द्रेण वृत्रघ्ना मेद्यग्निना वरुणेन च।।२।।

---

द्र.४　　का. ग 'वि' इत्यतः ५क - याः इति यावन्नष्टः।
क　ज. 'देगातांरगवती' = लेखकप्रमादः।
घ　म. -मधुमं . . . .।।

५　क　उ. . . . सुते . . . णाया; ख वा. क्षेत्रिय * *। का. सा. अ.।
ग　का. . . . . तस्मिन् *;

६　कग　का. . . . त्राणा अपास्तततोषसां अपस्सत् . . .;
गघ　उ. . . . . सर्वमामपदप . . . .।।

७　ख　म, ज. . . . . ऽ मीवचा . . .।।

३.३.१　क　ज. * * परीजातो;
ग　का. * हत्तु . . .; उ. . . . मामकां;

२　　का. . . . निष्णीहि * मयिबाधतोधत।
* * मेमयादग्निना * *;
ख　उ. * * तो( ← दो, ज; → दो, म.)धतः।

यथाश्वत्थ निःशृणासि पूर्वान् जातानुतापरान्।
एवा पृतन्यतस्त्वमभि तिष्ठ सहस्व च।।३।।

शौ.३.६.३कख यथाश्वत्थ [1]विभिनत्स्यन्तर्महत्यर्णवे।
शौ.३.६.६गघ एवा मे शत्रोश्चित्तानि विष्वग् भिन्धि सहस्व च।।४।।

शौ.३.६.४ यः सहमानश्चरसि सासहान इवर्षभः।
तेनाश्वत्थ त्वया वयं सपत्नान् सहिषीमहि।।५।।

शौ.३.६.५ सिनात्वेनान् निर्ऋतिर्मृत्योः पाशैरमोक्यैः।
अश्वत्थ शत्रून् मामकान् यांश्चाहं द्वेष्मि ये च
मास्।।६।।

शौ.३.६.७ अधराञ्चः* प्र प्लवन्तां छिन्ना नौरिव वन्धनात्।
न निर्बाधप्रणुत्तानां पुनरस्ति निवर्तनम्।।७।।

शौ.३.६.८ प्रैणान्नुदामि मनसा प्र चित्तेन प्र ब्रह्मणा।
प्रैणान् वृक्षस्य शाखयाश्वत्थस्य नुदामसि।।८।।

---

३ का. . . . . निष्णासि पूर्वां . . .* पृदन्यत . . . * ता।
ख वा, ज. पूर्वां . . .।

४ का. . . . विभिनश्छंतहत्यहत्यर्णवे * * शत्रोचित्तानि
* भिधिमहस्वता z
कख उ. . . . . विभिन्नस्य . . .।

५ क वा. * . . . . नंश्चरसि; ख का. . . . नैवऋषभा;
ज. * . . . . ऋषभः। क, घ का. सा. अ.।

६ ख ग का. . . . . पाशैरविमोक्यैरश्वत्थ . . .; अन्ये सा. अ.।
ग उ. * * मामकां;

७ क-ग का. अधरांश्च * प्लवतांश्छिन्ना . . . नां * नुर्बाधप्रणुत्तानं;
क उ. अधराञ्च * *; अघोषादिसंयुक्तवर्णात् पूर्वं विसर्गलोपः क्वचित्
क्वचिदत्र दृश्यते।

८ ख-घ का. * शृत्येनव्राह्मणा . . . शाखाया अश्वत्थस्य * z३z
क,ग उ. प्रैणां . . .;

३.४

तै.५.६.१.२-४ यददः संप्रयतीरहावनदता हते।
मै.२.१३.१
काठ.३९.२ तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः।।१।।
शौ.३.१३.१-६

यत् प्रेषिता वरुणेनाच्छीभं समवल्गत।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु ष्ठन।।२।।

अपकामं स्यन्दमाना अवीवरत वो हिकम्।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हिकम्।।३।।

एको वो देव उपातिष्ठत् स्यन्दमाना उपेत्य।
उदानिषुर्महीरिति तस्मादुदकमुच्यध्वे।।४।।

आपो देवीर्घृतमिदाप आहु-
रग्नीषोमौ बिभ्रत्याप इत्ताः।
तीव्रो रसो मधुपृचामरङ्गम
आ मा प्राणेन सह वर्चसा गन्।।५।।

---

३.४.१ क-ग का. सा. अ.। घ. उ. * पो * *।।
२ का. सा. अ.।
ख वा. - नाछीभं . . .।
३ क-ग का. सा. अ.।
घ का. तस्मारनाम * *; उ. . . . द्वार्ण्णाम * *।।
४ का. * न * * सिंधमानाउपेन्यः . . . मुच्यते।
ग वा. . . . र्म्मही . .;
५ का. . . . मितापाहु . . . इत्या . . . पृशा (→मृचा) मरङ्गमा * * सा * गृहं → गाम्।
ख उ. रग्नीषोमो . . .।
घ म, ज. आमान् . . .।।

आदित् पश्याम्युत वा शृणो-
म्या मा घोषो +गच्छति वाङ्मासाम्।
मेने भेजानो अमृतस्य तर्हि
हिरण्यवर्णा अतृपं यदापः।।६।।

३.५

शौ.३.२.१-६ पै.३.६.१ अग्निर्नो दूतः प्रत्येतु शत्रून्
प्रतिदहन्नभिशस्तिमरातिम्।
स चित्तानि मोहयतु परेषां
निहस्तांश्च कृणवज्जातवेदाः।।१।।

अयमग्निरमूमुहद् यानि चित्तानि वो हृदि।
वि वो धमात्योकसः+ प्र वो धमाति सर्वतः।।२।।

इन्द्र चित्तानि मोहयार्वाङाकूत्या अधि।
पै.३.६.५गघ अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय।।३।।

---

६ कख का. सा. अ.। वा . शृणोमामा * . . .।
ज. . . . श्रुणोम्या . . .।
ग म. * भेयानो * *;
गघ का. * * मृतस्य . . . वर्णस्यमंयदावा z४z

३.५.१ क का. . . . प्रत्येतशतृन्;
ख वा, ज. . . . हंनभि . . .।
गघ का. * चित्तां मोहितु * निहस्ताश्च . . . वेदः;
घ वा. . . . . णकृवज्ञातवेदाः।। म. . . . कृणुव . . .।। ज.
कृणुव . . .।।
२ क का. सा. अ.। गघ का. * * धमात्वोकसः * बो
धमातु सर्वता; ग उ. * * धमानात्योकसः;
३ कख का. सा. अ.।

व्येषामाकूतय *इत्ताथो चित्तानि मुह्यत* ।
अथो यदद्यैषां हृदि तदेषां परि निर्जहि ।।४।।

ऋ.१०.१०३.१२ अमीषां चित्तानि प्रतिमोहयन्ती
गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकै-
र्ग्राह्यामित्रांस्तमसा विध्य शत्रून् ।।५।।

माध्य.१७.४७ असौ या सेना मरुतः परेषा-
*मस्मानभ्यैत्योजसा स्पर्धमाना ।
तां गुहत तमसापव्रतेन
यथैषामन्यो अन्यं न जानात् ।।६।।

इति तृतीयकाण्डे प्रथमोऽनुवाकः

३.६

शौ.३.१.१-६ अग्निर्नो विद्वान् प्रत्येतु शत्रून्
प्रतिदहन्नभिशस्तिमरातिम् ।
स सेनां मोहयतु परेषां
निर्हस्तांश्च कृणवज्जातवेदाः ।।१।।

---

४ कख का. विषामाकूतुयथातो * मुह्यता ।
उ. . . . इत्ताथो * मुह्यतः ।
गघ का. सा. अ. । ग वा. * यदद्येषां *;

५ क का. सा. अ. ।
ख उ. . . . न्यप्यवे * । का. . . . णाङ्गन्यप्वे * ।
घ का. सा. अ. । वा, ज. न्ग्राह्या . . . ।।

६ का. क सा. अ. । ख-घ मस्मानभेद्योजसा * * * तपसा . . .
अथैषा . . . व्यजानाम् zअ५z
ख उ. मस्मादभ्यै . . . । ग वा. * * तम → पसा . . .;
घ वा. . . . . . जानान् ।।५।।ऋ६।।
म. . . . .ऽन्यं * जानान् ।।५।।ऋ।।

३.६.१ ग का. सा. अ. । ख ३.५.१ख द्र. ।
घ उ. . . . कृ(कु) णुवज्जा . . . ।।
म. निह(?)स्तांश्च . . . ।।

यूयमुग्रा मरुत ईदृशे स्था-
भि प्रेत मृड़त सहध्वम्।
अमीमृड़न् वसवो नाथितेभ्यो
+ऽग्निर्ह्येषां विद्वान् प्रत्येतु शत्रून्।।२।।

अमित्रसेनां मघवन्नस्माञ्छत्रूयतामभि।
युवं तानिन्द्र वृत्रहन्नग्निश्च दहतं प्रति।।३।।

ऋ.३.३०.६ प्रसूत इन्द्रः प्रवता हरिभ्यां
प्र ते वज्रः प्रमृणन्नेतु शत्रून्।
जहि प्रतीचो +अनूचः पराचो
विश्वं हि रिष्टं कृणुहि सत्यमेषाम्।।४।।

सेनामोहनं कृणविन्द्रामित्रेभ्यस्त्वम्।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय।।५।।

---

२ का. यूर्यमुग्रा * * . . . प्रते मृळत * अमीमृळ * * अग्निर्येषां * * शतृन्;
ख वा. . . . मृडतः *। ग उ. * पशवो *;.
घ उ. ऽग्नि (वा.अग्नि) ह्येषां . . .।।
द्र. का. शत्रू-इत्यस्य स्थले प्रायशः शत्तृ / शत्तृ इति। अतस्तत्र दर्शयिष्यते।

३ का. * मघवान्यस्मान्। शत्तृयतामभि तं त्वामिन्द्र . . . नग्निश्च * *।
क उ. अमित्रसेनान् . . .;
कख ज. . . . मघवंनस्माच्छत्रू . . .।
वा, म. . . . मघवन्न(→वंन्य, वा.)स्माच्छ (वा. छ; म२. द्य.) . . .।
गघ उ. युवन् . . .; वा. ज. . . . वृंत्रहंनग्नि . . .।।

४ ख का. . . . प्रमृणत्याहि . . .।।
वा, ज. . . . प्रमृणंनेहि *।
गघ का. * * नूचः * * विष्टं . . .।
वा, ज. * * अनुचः. . .।। म. . . . ऽनुचः . . .।।

५ कख का. . . . कृण्वइन्द्रा . . . स्त्वां; गघ सा. अ.।

इन्द्रः सेनां मोहयतु मरुतो घ्नन्त्वोजसा।
चक्षूंष्यग्निरा दत्तां पुनरेतु पराजिताम्।।६।।

३.७

शौ.३.९.६ एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु।
तेषाम्तु सर्वेषामिदमस्तु विष्कन्धदूषणम्।।१।।

पै.२.६४.३कख द्र. कर्षफस्य विषफस्य द्यौष्पिता पृथिवी माता।
शौ.३.९.१-५ यताभिचक्र देवास्तथापि कृणुता पुनः।।२।।

अश्लेष्माणोऽधारयन् तथा तन्मनुना कृतम्।
कृणोमि वध्रि विष्कन्धं मुष्काबर्हो गवामिव।।३।।

सूत्रे पिशङ्गे खृगलं यवाबध्नन्ति वेधसः।
श्रवस्यं शुष्मं काबवं वध्रि कृण्वन्तु बन्धुरः।।४।।

येना श्रवस्यो चरथ देवा इवासुरमायया।
शुनां कपिरिव दूषणो बन्धुरा काबवस्य च।।५।।

---

६ कख का. सा. अ.। वा, ज. * घ्नंत्वोजसा।
गघ का. चक्षुँष्य . . . पराजितः z9z
उ. . . . . धत्तां . . .।। ऋ६।।६।।

३.७.१ ग का. तेषां च . . .; अन्ये सा. अ.। वा. तेषां * . . .;

२ क का. कर्षभस्य विषभस्य;
म. कर्शफस्य *; शौ. कुर्शफस्य;
खग का. सा. अ.।

३ क का. अश्लेषमाणो . . .; उ. . . . धारयं;
ग का. सा. अ.। वा. कृणोसि * *;

४ कख का. सा. अ.। वा, ज. . . . वध्नंति *।
ग का. स्रवस्यं शुष्म *;

५ का. * स्रवस्यो चरत * यवासुरमाय। . . . दूषणं . . . काभवस्य *।
ग उ. * कविरिव *;

दुष्ट्यै हि त्वा भनूत्स्यामि दूषयित्वा काबवम्।
उदाशवो रथा इव शपथेभिः सरिष्यथ।।६।।

३.८

शौ.१६.५६.१-६ यमस्य लोकादध्या बभूविथ
प्रमदा मर्तान् प्र युनक्षुधीरः।
एकाकिना सरथं यासि विद्वान्
स्वप्न मिमानो असुरस्य योनौ।।१।।

बम्बस्त्वाग्रे विश्ववयावपश्यत्
पुरा रात्र्या जनितोरेके अह्नि।
ततः स्वप्नेदमध्या बभूविथ
विष्वङ्रूपमपगूहमानः।।२।।

---

६ का. जुष्टीत्वा कांश्छाभि जोषयित्वाभवं उतरामवो * यव पथे-
भिस्सरिष्यत z२z
क उ. . . . . भंत्स्यामि; घ वा. . . . स → मरिष्यथ।।७।।ऋ६।।
३.८.१ का. . .बभूयथ * मन्तां * युन्नक्ष . . एकाजिना . . . असुरस्स *;
ख म. * * * युनूक्षु . . .।
ख < युनक् सु *? पाठः सन्दिग्धः। शौ. युनक्षि।
ग ज. . . . . विधान्; घ उ. . . मिवानो * *।।
२ क का. बंभ . . . वथावपश्यन्;
म. . . . म → वयाऽवपश्यत्; ज. . . . ऽवपश्यत्;
पाठः सन्दिग्धः। < विश्ववयाः अव पश्यत्? सन्धिरार्षः? वकार-
प्रश्लेषो वा?
ख उ. . . . . रेको अह्नि। का. . . . रेकेह्नि;
गघ का. * स्वप्नेनमध्या चभूयथ → था भिषङ्गरूपमपि . . .;
घ वा. विष्वङ्गरूपमप . . .।। म. विश्वङ्रू . . .।।
ज. विश्व → ष्वङ्गरूपमव → प . . .।।
पाठः सन्दिग्धः। शौ. मूलकोशेषु भिषग्भ्यरूप . . .।।
विष्वग्गोरूपमपेत्यादिशोधः दुर्गामोहनपादानाम्। शौ. १६.४६.८
विश्वं गोरूपमित्यादिपाठः तेनैवात्र उक्तः। < विष्वङ् + उ +
अरूपमित्यादि अपि चिन्त्यम्।

बृहन् ग्रावासुरेभ्योऽधि देवा-
नुपाववर्त महिमानमिच्छन्।
तस्मै स्वप्नाय दधुराधिपत्यं
त्रयस्त्रिंशासः स्वरानशानाः।।३।।

नैतां विदुः पितरो नोत देवा
यैषा जल्पिश्चरत्यन्तरेदम्।
ऋ.८.४७.१५ ग तु.पै.२.३७.२ग त्रिते स्वप्नमदधुराप्त्ये नर
आदित्यासो वरुणेनानुशिष्टाः।।४।।

व्यस्य क्रूरमभि यन्तु दुष्कृतो-
स्वप्नेन सुकृतः पुण्यमायुः।
स्वर्मदसि परमेण वन्धुना
तप्यमानस्य मनसोधि जज्ञिषे।।५।।

---

३ कख का. वृहं . . . . भ्योभि . . . पावबन्तु . . . मृच्छं
क उ. * ग्रावाअसु . . . .; वा, ज. ऽनास्ति।
ख वा. . . . . मानृमिच्छन्। ज. . . . मिछन्।
गघ वा. * * द → जधु . . . त्रयस्त्रींशासः . . . .।। का. सा. अ.।

४ ख-घ का. येषां जल्प्यश्चरन्त्यन्त . . . .
* . . . मरिदिदृहाप्रते नरा * . . . सिष्ठा;
ख वा, ज. जैषा . . . .; ग उ. तृते . . . . धुरात्यो; ज. नर → दन?
शौ. मूलकोशेषु . . . त्यंतरेतं। तृते . . . अरुणेनानु . . .।।

५ क का. . . . . मभिजंतदुष्कृणे; वा. . . . यन्तु → न्ति . . .;
खग का. सा. अ.।
घ उ. . . . यज्ञिषे।।

विद्म ते सर्वाः परिजाः पुरस्ताद्
विद्म स्वप्न यो अधिपा इहो ते।
यशस्विनो नो यशसेह पाह्या-
राद्* द्विषेभिरप याहि दूरम्।।६।।

३.६

अम्बाः सुमुखाः सृजत पद्वत् सृजत सत्यज्ञेयम्।
सृजाम्यहं दूतानस्मै विषाय हन्तवे।
शौ.१०.४.३घ, ४घ द्र. वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।१।।

इन्द्रमहमिह हुवे सोमपा-
मुभयाविनमस्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।२।।

वरुणमहमिह हुव उग्रं
राजन्यैः सहास्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।३।।

---

६ क-ग का. . . . . परस्ताद् * * * धिपा ह्यो * . . . यशसोहि . . .;
क वा. . . . परिजा (→या): *; म, ज. . . . परियाः *;
ख वा. . . . इहो →हे *;
गघ का, उ. . . . पाह्याराद्विषे . . .।। . . .
३.६.१ का. अम्वात्मपुषात्सृत * * सत्ययज्ञियेयं सृजामि। हण्डूतानस्मै . .।
क वा, म. * * सृजत्; ख म. पद्यत् * *। ज. पद्यत * *।
ग वा. . . . दूतान → मस्मै . . .;
२ का. . . . . मियं * . . . . पा उभया . . . . स्मै।
का, उ. विषायेत्यत ऊह्यम्। एवमापञ्चमम्।
३ का. . . . . महामियं हुव। उग्रो राजन्यो मामहि।
क उ. . . . . हुवे *;

अदितिमहमिह हुवे सूरपुत्रां
कनीनिकामस्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।४।।

बृहस्पतिमहमिह हुवे यो देवानां
पुरोहितोऽस्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।५।।

आणाश्चाणाश्चण्डामर्का अस्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम्।।६।।

ऋ.१.१९१.१३क-ग नवानां नवतीनां विषस्य रोपुषीणाम्।
सर्वासामग्रभं नाम वीतापेतारसं विषम्।।७।।

### ३.१०

मृत्युरेको यम एकः शर्व एकः शरुर्भवः।
तै.३.३.८.२घ ते नः कृण्वन्तु भेषजं देवसेनाभ्यस्परि।।१।।

पुनर्नो यमः पितृभिर्ददातु
पुनर्मित्रावरुणा वातो अग्निः।
अघमारो अघशंसः पुनर्दात्
पुनर्नो देवी निर्ऋतिर्ददातु।।२।।

---

४ क का. . . . मियं * शूरपुत्रं; वा. . . . सुरपुत्रां;
५ का. . . . मियं *। * * * अस्मै z
६ का. . . . र्कानस्मै . . .। . . . विषामहे . . . .;
ख ज. ऽस्मै . . .।
७ क,घ का. सा. अ.।
ख उ. * रोयुषीणां।
३.१०.१ ख का. सर्वेषुशरुरुद्भव।
२ का. . . . * ग्निः अघमानो . . . शँसष् . . . र्दधातु
ख म. . . . ऽग्निः।
घ वा. . . . निऋऋति . . . .।।

पै.१.६५.४ द्र. या देवैः प्रहितेषुः पता-
त्तपसे वा महसे वावसृष्टा+।
सोमस्त्वामस्मद् यावयतु विद्वान्
पितरो वा देवहूता नृचक्षसः।।३।।

शौ.६.२६.३ख. सहस्राक्षो अमर्त्यः पुरुरूप इहावतु।
सख्ये त* उग्र मा रिषं+ सहगुः सहपूरुषः।।४।।

यस्ते मन्युः सहस्राक्ष विषेण परिषिच्यते।
तेन त्वमस्मभ्यं मृड शिवो नः शम्भुरा चर।।५।।

मा ते मन्यौ सहस्राक्ष भामे भून्मामकं जगत्।
शौ.६.२६.३गघ यो नो द्वेष्टि तं गच्छ यं द्विष्मस्तं जहि।।६।।

इति तृतीयकाण्डे द्वितीयोऽनुवाकः

---

३ क-ग का. * देवीष् * पताश् . . . सृष्टस् . . . विद्यान्;
खग उ. . . . . वावशिष्टा। . . . स्मह्यावयतु *;
घ वा, ज. * * देवहुता *।।

४ का. * मर्त्याः * * प्रख्येदुग्रमहार्षं * . . . पौरुषाः;
ग उ * तु * * रिषन्; तु. सख्ये त इन्द्र वाजिनो मा भेम ऋ १.११.२;
१.६४.१ अग्ने सख्ये मा रिषामा वयं तव;

५ घ का. . . . शस्तुरा *;

६ कख का. . . . मन्यु * भामेतूर्मा . . . .। ग उ. . . . गछ;
काण्डिकान्ते का. zz ओँ यन्द्विष्मस्तज्जहि z५z अनु २zz
उ. अनुवाकादिसङ्केताः। ततो मङ्गलचिह्नानि।

## ३.११

शौ.३.२६.१-६ ये स्थास्यां प्राच्यां दिशि हेतयो नाम देवा-
स्तेषां वो अग्निरिषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।१।।

ये स्थास्यां दक्षिणायां दिश्यविष्यवो नाम देवा-
स्तेषां व आप इषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।२।।

ये स्थास्यां प्रतीच्यां दिशि विराजो नाम देवा-
स्तेषां वः काम इषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।३।।

---

३.११ काण्डिकारम्भे का. अथरक्षामन्त्रं zz zz ओं . . . .;

१ का. रक्ष ये . . . देवाः तेषां . . . मृळत तो * ब्रूत . . . .z

द्र. एवमग्रेऽपि का. 'रक्ष . . . मृळत. .' इति। का. मृडात इति बैरेट्। स प्रामादिकः पाठः।

ग वा, ज. -स्तेषा(ज.पा)म्वो . . .। म. ऽग्निरि . . .।

घ वाः . . . वृत; ज. . . . . अधि *;

२ क,घ का. १ द्र.। क-ग का. . . . दिश्यविश्यवो . . . वोप *।

क वा. . . . दिशिवि . . .; ज. . . . दिशि → श्यविष्य . . .।

द्र. क म, ज. अस्यामिति मन्त्र आरभ्यते।

घङ उ. नास्ति। एवं पञ्चममन्त्रं यावत्।

ग वा, ज. सर्वत्र तेषाम्व इति।

३ १,२ द्र.।

ये स्थास्यामुदीच्यां दिशि प्रविध्यन्तो नाम देवा-
स्तेषां वो वात इषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।४।।

ये स्थास्यां ध्रुवायां दिशि विलिम्पा नाम देवा-
स्तेषां वोऽन्नमिषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।५।।

ये स्थास्यामूर्ध्वायां दिश्यविष्यन्तो नाम देवा-
स्तेषां वो वर्षमिषवः।
ते नो मृड़त ते नोऽधि ब्रूत
तेभ्यो नमस्तेभ्यः स्वाहा।।६।।

३.१२

शौ.३.२१.१-६ यो अप्स्वन्तर्यो वृत्रे अन्तर्यः पुरुषे यो अश्मनि।
य आविवेशौषधीर्यो वनस्पतीं-
स्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।१।।

---

४ १,२ द्र.।
का. रक्ष ये . . दीच्या . . . प्रविद्ध्यन्तो . . . स्तेषां वात . . .;

५ १,२ द्र.। का. . . . ध्रुवायं . . .; वा, म. . . . धृवायां . . .।

६ का. रक्ष य . . . z १ अपिद्रः।
कख उ. . . . दिशिविश्वन्तो . . .; वा. . . . . वृत;
काण्डिकान्ते का. रक्षोहणंवाजेनमाजिगन्मिमित्रं प्रतिष्ठमुपयामिशर्म।
शेषाणो अग्निष्कृतुभिस्समिमृद्धास्सनो दिवस्सरिषा पातु नक्तः प्रत्यग्ने
हरं इति जपेत् सर्वम् zz इतिरक्षामन्त्रम् zz

३.१२.१ खघ का. . . . . स्मनि। योविवेशओषधीर्यो * * ग्निभ्यो . . .;
कख वा. . . . . अश्वनि। म. * ऽप्स्वन्त . . .* ऽश्मनि।
घ म. . . . . ऽग्निभ्यो . . .।

यः सोमे अन्तर्य उ गोष्वन्त-
र्य आविष्टो वयसि यो मृगेषु।
य आविवेश द्विपदो यश्चतुष्पद-
स्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।२।।

य इन्द्रेण सरथं संबभूव
वैश्वानर उत विश्वदाव्यः।
यं जोहवीमि पृतनासु +सासहिं
तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।३।।

यो देवो विश्वाद् यमु काममाहु-
र्यं दातारं प्रतिगृह्णन्तमाहुः।
यो धीरः शक्रः परिभूरदाभ्य-
स्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।४।।

यं त्वा होतारं मनसाभि संविदु-
स्त्रयोदश भौवनाः पञ्च मानवाः।
वर्चोधसे यशसे सूनृतावते+
तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।५।।

---

२ कख का. येस्... र्यो गोष्वन्तर्योविष्टो * * *
क वा. * सोमे → मो ....; म. * * ऽन्तर्य ...;
घ का, उ. स्तेभ्यः इत्यत ऊह्यम्। एवं षष्ठं मन्त्रं यावत्।
३ का. ऐन्द्रण ... दव्यः इ * * सासह्यं *z
ग म, ज. * * पृतनाशु *।। उ. ... षासहिं।।
४ क उ.* * विश्वाह्यमु ...; का. ... द्यम ...;
खग का. सा. अ.।
५ ख वा. ... भौम → वनाः * *।
म. ... भौव → मनाः * *। का. सा. अ.।
ग उ. .... सुनृतावते; का. सूनृतवते;

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे।
वैश्वानरस्य ज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो
हुतमस्त्वेतत्।।६।।

दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसंचरन्ति।
ये दिक्ष्वन्तर्य उ वाते अन्त-
स्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।७।।

बृहस्पतिं वरुणं मित्रमग्निं
हिरण्यपाणिं सवितारमिन्द्रम्।
विश्वान् देवानङ्गिरसो हवामहे
इमं क्रव्यादं शमयन्त्वग्निम्।।८।।

शान्तो अग्निः क्रव्यादथो पुरुषरेषणः।
अथो यो विश्वदाव्यस्तं क्रव्यादमशीशमम्[+]।।९।।

---

६ कख का. सा. अ.।
ग का. वैश्वानरज्ये . . . .z
द्र. शौ. वैश्वानरज्ये . . .।।
७ का. * पृथिवीमन्तरिक्षं . . . सञ्चरन्ति य दक्षन्तर्यो . . .;
गघ म. . . . ऽन्त . . . ऽग्निभ्यो . . .।।
८ का. * * मित्रअग्न्यां . . . पाण्यं . . . रसं * इन्द्रं . . .;
क उ. * वरुण . . .; ग वा. * देवान्नङ्गि . . .;
९ क म. * ऽग्निः . . .; ख का, वा. . . . रेषिणः।
घ का. . . . . दयमषीषमम् z२z
वा, म. . . . शीशमन् ।।ऋ९।।१२।।
ज. . . . शीसमन् ।।ऋ९।।१२।।

## ३.१३

शौ.३.५.१-५	आयमगन् पर्णमणि-
बली बलेन प्रमृणं सपत्नान्।
ओजो देवानां पय ओषधीनां
मयि राष्ट्रं जिन्वत्वप्रयुच्छन्।।१।।

मयि राष्ट्रं पर्णमणे मयि धारया श्रियम्।
अहं राष्ट्रस्याभीवर्गे युजा भूयासमुत्तरः।।२।।

यं निदधुर्वनस्पतौ +वाजं देवाः प्रियं निधिम्।
तं म इन्द्रः सहायुषा मणिं दधातु भर्तवे।।३।।

सोमस्य पर्णः सह उग्रमाग-
न्निन्द्रेण दत्तो वरुणेन सख्या।
तमहं बिभर्मि बहु रोचमानो
दीर्घायुत्वाय शतशारदाय।।४।।

---

३.१३.१ क,ग का. सा. अ।
ख का. . . सपत्रान्।
घ का. मेयि * जिन्वन्पप्रयच्छं;
म. . . . प्रयच्छन्।।

२ ख-घ का. महि धारय राष्ट्रंअहो . . . यजा . . . मुत्तरा।
घ म. युञ्जा → जा . . .।।

३ कख का. * निदिधि . . . वाजिं . . .;
ख उ. वाचं . . .। ज. . . . प्रियन्निधिं।
ग उ. तन्म . . .;
घ का. ममणिं ददातु *। वा. * दधा → दातु *।।

४ कख का. * * * . . . मिन्द्रेण * * सख्यः;
ज. * * * . . . गंनिन्द्रेण . . .।
घ वा. दीर्घायत्वाय . . .।।

आ मा रुक्षत् पर्णमणिर्मह्या अरिष्टतातये।
यथाहमुत्तरोसानि मानुष्या अधि सम्पदः।।५।।

शौ.७.६७.१ पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च।
पुनरग्नयो धिष्ण्यासो* यथास्थाम कल्पयन्तामिहैव।।६।।

शौ.३.५.६ द्रः ये तक्षाणो रथकाराः कर्मारा ये मनीषिणः।
सर्वांस्तान् पर्ण रन्धयोपस्तिं कृणु मे जनम्।।७।।

x उपस्तिरस्तु वैश्य उत शूद्र उतार्यः।
सर्वांस्तान् पर्ण रन्धयोपस्तिं कृणु मे जनम्।।८।।

३.१४

शौ.३.२३.१-६ येन वेहद्बभूविथ नाशयामसि तद्वयम्।
इदं तदन्यत्र त्वदप दूरे नि दध्मसि।।१।।

आ ते गर्भो योनिमेतु पुमान् वाण इवेषुधिम्।
आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः।।२।।

---

५ कख का. सा. अ.। म . आत्मा * . . .। वा, ज. . . . र्मज्या *।
घ का. मनुष्या * संशतः;

६ कखघ का.सा.अ.।
ग का. पुनग्न्योधृष्ण्यासो; उ. . . . . धृष्णियासो;

७ का. यत् * . . . . कारष् * * मनीषिणाः . . . स्त्वान् . . . मेदिनां;
ख वा, ज. * जे *।

८ गघ का. . . . स्त्वान् . . . मेदिनं z३z मन्त्रः पैप्पलादमात्रलभ्यः।

३.१४.१ का. * वेहदध्मसि।
ग वा, ज. * तदंन्यत्र . . .; घ वा. . . . दुरे * *।।

२ क का. यात्ते * . . . .; ख-घ का. नास्ति।
ख ज. पुमान . . . .।

पुमांसं पुत्रं जनय तं पुमाननु जायताम्।
भवासि पुत्राणां माता जातानां जनयासि च।।३।।

यानि भद्राणि बीजान्यृषभा जनयन्ति।
तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव।।४।।

कृणोमि ते प्राजापत्यमा गर्भो योनिमेतु ते।
विन्दस्व पुत्रं नारि* यस्तुभ्यं *शमसच्छमु
तस्मै त्वं भवा।।५।।

यासां पिता पर्जन्यो भूमिर्माता बभूव।
तास्त्वा पुत्रविद्याय देवीः प्रावन्त्वोषधीः।।६।।

x यस्ते योनिमुदिङ्गयादृषभो रेतसा सह।
स त आ सिञ्चतु प्रजां दीर्घायुं शतशारदाम्।।७।।

३.१५

यां त्वा वातोवरयदार्द्रनाभा महर्षभः।
तस्यास्ते विश्वधायसो विषदूषणमुद्रे।।१।।

---

३ कख का. सा. अ.। घ का. * जनयासि → मि *।
वा. ख-घ * पुमान्नु *। . . . जनयाशि *।।

४ ख का. . . . . जनयति।

५ ग-ङ का. * * नार्यतुभ्यं समसख्यम * * भव।
उ. * * . . . नारी . . . समु (म.म) सत्समु . . .।।

६ ख वा. * * पर्यन्यो;
ग वा. * पुत्रविद्याया; म. * पुत्रंविद्याय;

७ का. . . . दिंगयावृषभो * *। * ता . . . . दीर्घायोश् * z४z
ग वा, ज. . . . . . सिञ्चन्तु *;
मन्त्रः पैप्पलादमात्रलभ्यः।

३.१५.१ कख का. . . . . वरयरारिद्रनाभा *।
म, ज. . . . दाद्रनाभा *।
ग वा. . . . विश्य → ष्व . . .;

यां त्वा वराहो अखनदेकस्मिन्नधि पुष्करे।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे।।२।।

यां त्वादितिरवपद् बीजवापमधि पुष्करे।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे।।३।।

पै.६.७.५ यस्याः कुलायं सलिले अन्तर्महत्यर्णवे।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे।।४।।

उत्ते भर उत्तमाया अधमायास्त उद्धरे।
उन्मध्यमान्मध्यमे तद्विषदूषणमुद्धरे।।५।।

अग्रभं समग्रभमुभावन्तौ समग्रभम्।
दिवश्च पृथिव्याश्च विषदूषणमुद्धरे।।६।।

**इति तृतीयकाण्डे तृतीयोऽनुवाकः**

---

२ का. यास्त्वा * षनदेक ...।।
म. * * * ऽखनदे ...।।
का, उ. गघ ऊह्यम्। एवं तृतीयेऽपि।

३ क वा. .... रपव(→प)द्;
म, ज. .... रपपद्;

४ ख म. ऽन्तर्म ...।

५ का. .... * दुत्तमाया .... स्तूद्भरे
अनुमध्यामध्यमेतव .... णमग्रभं;
ग ज. -ध्य- इति नष्टम्।
४घ, ५घ म. उद्धरे इति ऊह्यम्।

६ क का. 'अग्रभं' इति पूर्वमन्त्रे।
ग का. * पृथिव्या → वीश्च;

## ३.१६

पैद्वोसि पृतनायुः स्वाहा। ।१।।
सोममहिंसीः सोमहिंसितोसि स्वाहा। ।२।।
ब्राह्मणमहिंसीर्ब्रह्महिंसितोसि स्वाहा। ।३।।
नाभूदहिर्भ्रूणमारदहिरद्रिमरसावधीत्।
विषस्य ब्रह्मणामासीत्ततो जीवन्न मोक्षसे। ।४।।

उद्योहिः समुद्यो हि निर्धीतो अरसः कृतः।
विषस्य ब्रह्मणामासीत्ततो जीवन्न मोक्षसे। ।५।।

पुनर्ददामि ते विषं पूर्वपद्यमिदारिथ।
मां ददश्वान् मन्यसे मया दष्टो न मोक्षसे। ।६।।

## ३.१७

एकशतं भेषजानि तेषां मातास्योषधे।
समुद्रमव गच्छसि पृथिव्यामधि निष्ठिता। ।१।।

---

३.१६.१, का. . . . . पृतनायु . . सोमहिंसीस् . . .।
३ का. व्रह्मण . . .।
४ कख का. . . . . णमान्महिरग्निमरसावधी।
वा. . . . भृंणमा . . . .। म. . . . हिभ्रूण . . .।
घ उ. . . . जीवंन *।।
५ कख का. उद्योहि * * निर्वीतो रसष् *;
क वा. . . . हिं; ख म. निर्द्धीतोऽ * *।।
ज. निर्द्धी → दीतो * *।।
४ गघ, ५ गघ मन्त्रार्थः पाठश्च चिन्त्यः। < ब्रह्म नामासीत्? एवं दुर्गामोहनपादैर्मतम्।
६ कग का. . . र्ददातिमे * . . . मुदाहृत। . . . सन्यसे
वा. * ददस्वान् *;
३.१७.१ गघ का. . . . मिव . . . निष्ठितः; ग वा. . . . . गच्छसि → ति;

शौ.४.६.१ख तस्यां वेदाधि भेषजं दशशीर्षो दशजिह्वः।
यस्ते प्रथम आददे शं श्वावन्त ओषधे
यमदाह्वीरयुग् भिषक्।।२।।

पुनश्चक्षुः पुनः प्राणं पुनरायुर्न आगमत्।
निष्ट्वाकरं निष्कृत्या निष्ट्वा निष्कृत्याकरम्।।३।।

शौ.६.९६.२; ७.११२.२ मुञ्चामि त्वा शपथ्यादथो वरुण्यादुत।
अथो यमस्य पड्वीशाद्विश्वस्माद् देवकिल्बिषात्।।४।।

शौ.६.८.२२ सं ते शीर्ष्णः कपालानि हृदयस्य च यो विदुः।
उद्यन् सूर्य आदित्यो अङ्गद्योतमनीनशत्।।५।।

शौ.६.२४.१क-ख हिमवतः प्र स्रवथ सिन्धौ समह सङ्गमः।
ता आपः सर्वाः सङ्गत्य चक्षुः प्राणञ्च धत्त नः।।६।।

---

२ क का. यस्यां वेदादि . . .; म. * वेदा → देवाधि . . .;
ज. * वेदाधि → दि . . .;
ख वा. . . . . जिह्वाः।
ग-ङ का. तेप्रथमादधे संश्रावंत्योषधे यमराह्वीरयद् *।
ग म. यस्ते → त्ते * *; द्र. < घ संस्रावं ते *?

३ क वा. पुनःश्चक्षुः . . .;
ख का. . . . . युन्नागमत्; वा. . . . आगमत।
घ का. * निकृत्याकरं;

४ क वा. * * शपथ्य-;
ख-घ का. . .वारुणादुत। * * पद्विशाद्वि → ड्विशाद्विश्व . . दुष्कृतात्;
गघ वा. * * पड्वीषाविश्यस्मादेव . . . षात।।
ज. . . . पड्वीषा . . .।।

५ क का. शं . . .; वा. शन्ते . . . .; म, ज. सन्ते . . .;
ख का. . . . ये *;
गघ का. उद्यं सूर्यादित्यो . . . नीशत्।
ग वा. उदन . . .; घ म, ज. ऽङ्गद्यो . . .।।

६ क-ग का. * * स्रवतस्सिन्धू समाह * तापस्सर्वस् *;
क म, ज. हिमवत . . .; ग वा. * * सर्वा *;
घ उ. . . . न।।ऋ६।।१७।।

३.१८

शौ.३.२२.१ हस्तिवर्चसं *प्रथतां बृहद् यशो
अदित्या यत्तन्वः संबभूव।
तत् सर्वे सवितुर्मह्यमेतद्
विश्वे देवासो अदितिः सजोषाः।।१।।

शौ.३.२२.२ मित्रश्च वरुणश्चेन्द्रो रुद्रश्च वेधतु।
देवासो विश्वधायसस्तेन *माञ्जन्तु वर्चसा।।२।।

शौ.३.२२.४कख यत्ते वर्चो जातवेदो बृहद्भवत्याहुते।
शौ.३.२२.३गघ. तेन मामद्य वर्चसा अग्ने वर्चस्विनं कृधि।।३।।

शौ.३.२२.३क-ख येन हस्ती वर्चसा संबभूव
येन राजा मनुष्येष्वन्तः।
शौ.११.१.३७क येन देवा ज्योतिषा द्यामुदायन्
तेन माग्ने वर्चसा सं सृजेह।।४।।

शौ.३.२२.४ ग-च यावद्वर्चः सूर्यस्यासुरस्य च हस्तिनः।
तावन्मे अश्विना वर्चः कृणुतं पुष्करस्रजा।।५।।

---

३.१८.१ क-ग का. * पृथतां वृहद्दिषु * यतन्वस् * . . . र्मह्यमेतु;
क उ. * पृथतां . . .;
ख उ. आदित्या . . .; म. . . .यतन्वः
गघ उ. . . . समितुर्म . . . सयोषाः।।

२ ख-घ का. . . . तेजतु . . . सस्ते मांदन्तु *। ख म१ . . . वेधतुं।
घ उ. . . . मांयन्तु *।।
द्र. ख चेततुः शौ. मूलकोषः।

३ ख का. . . . . त्याहुतं; शौ. आहुतेः। सायण. आहुते।
गघ का. * मामभ्य वर्चसाग्रे * *। ज. . . . वर्चसाग्रे * *।।
ग उ. * माम (म. → न) ह्य . . .;

४ कख का. सा. अ.। ग का. . . . भ्यामुदायं; वा,म. . . . मुदायं;

५ घ का. . . . स्रजः।

शौ.३.२२.५ यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते।
तावत् समैत्विन्द्रियं मयि तद्धस्तिवर्चसम्।।६।।

## ३.१६

शौ.३.१६.१; मै.२.७.७; काठ.१६.७; माध्य.११.८१; तै.४.१.१०.३
संशितं म इदं ब्रह्म संशितं वीर्यं मम।
संशितं क्षत्रं मे जिष्णु येषामस्मि पुरोहितः।।१।।

शौ.३.१६.२ समहमेषां राष्ट्रं श्यामि समोजो वीर्यं बलम्।
वृश्चामि शत्रूणां बाहू सं श्यामि' स्वानहम्।।२।।

शौ.३.१६.४ तेक्ष्णीयांसः पर्शोरग्नेस्तीक्ष्णतरा उत।
इन्द्रस्य वज्रात्तेक्ष्णीयांसो येषामस्मि पुरोहितः।।३।।

शौ.३.१६.३ अधस्पद्यन्तामधरे भवन्तु
ये न इन्द्रं मघवानं पृतन्यान्।
क्षणामि ब्रह्मणामित्रानुन्नयामि स्वानहम्।।४।।

---

३.१६.१ क का. * मयीदं *; उ. * मयिदं *;
घ उ. येषा . . . .;

२ क का. . . . . . राष्ट्रंप *; उ. . . . स्यामि;
ग उ. वृश्चामः (वा. मं) * *; का. . . बहू;
घ का. समश्वामश्वानहं।
उ. * स्यामि . . .।।

३ का. तीक्ष्णीयांसष्फर्षो . . . . राढुत। . . . * वज्रस्तीक्षणीयंसो एषा . . .।
ग वा, ज. * वज्रान्ते(?)क्ष्णी . . .;

४ का. . . . . भवन्त्वेन * * . . . वानां . . . न्यां . . . त्रानन्वा( → न्ध्वा)यामश्वानहं;
ग उ. क्ष्णामि (म$_2$. क्ष्णीमि) व्रह्मणामित्वानु . . .।।
द्र. उ. क्ष्णामि। तृतीयमन्त्रस्य -क्ष्णी- इत्यस्य प्रभावः।

शौ.३.१९.५ एषामहमायुधा सं +श्या-
म्येषां राष्ट्रं सुवीरं वर्धयामि।
एषां क्षत्रमजरमस्तु जिष्णू-
ग्रमेषां चित्तं विश्वेवन्तु देवाः।।५।।

अभि प्रेत जयत प्रसूताः
सं वः श्यामि नर आयुधानि।
शौ.३.१९.७ ग-घ तीक्ष्णेषवोबलधन्वनो हतो-
ग्रायुधा *अबलानुग्रबाहवः।।६।।

## ३.२०

शौ.३.१२.१-५ इहैव ध्रुवां नि मिनोमि शालां
क्षेमे तिष्ठाति घृतमुक्षमाणा।
तां त्वा शाले सर्ववीराः सुवीरा
अरिष्टवीरा अभि सञ्चरेम।।१।।

इहैव ध्रुवा प्रति तिष्ठ शाले
अश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्यु-
च्छ्रयस्व महते सौभगाय।।२।।

---

५ का. येषामामायुधा * श्यास्येषां . . . वर्धयस्व येषां . . . जिष्णुउग्रमेषां * वहुधा विश्वरूपा;
द्र. 'राष्ट्रं . . . उग्रमेषां' इति द्विः पठितम्।
कख उ. . . . * स्याम्ये(ज. → ये)षां . . .।
ग वा. . . . . जिष्णु-; म, ज. जिष्णु → ष्णू-;

६ कख का. * प्रयत * प्रसूता * श्यामि निरायुधानि।
क वा. * * जयतः *; ख उ. सम्वः * (म. स्यामि). . .;
गघ का. सा. अ.। उ, का. व(ब)लानु . . .।। इति सर्वत्र।
३.२०.१ क,गघ का. सा. अ.।
क वा. * ध्रुवां * मिनोवि *;
ख उ. . . . माणां। का. * तिष्ठामि . . . .।
घ म१. अ → मरिष्टवीरा * . . .।।

२ क का. . . . . * प्र * *; . . .
कख उ. * ध्रुवां . . . अश्ववती . . . सुनृता . . .।
गघ का. . . . . त्युच्छ्रययस्व . . .; उ. . . . . त्युछ्रयस्व . . .।।

धरुण्यसि शाले बृहच्छन्दाः पूतिधान्या।
आ त्वा वत्सो मीमयदा* कुमार
आ धेनवः सायमा स्यन्दमानाः+।।३।।

इमां शालां सविता वायुरग्नि-
स्त्वष्टा होता नि मिनोतु प्रजानन्।
उक्षन्तूध्ना मरुतो घृतेन
भगो नो राजा नि कृषिं तनोतु।।४।।

मानस्य पत्नी शरणा स्योना
देवी देवेभिर्निमितास्यग्रे।
तृणं वसाना सुमना असस्त्वं
रयिं नो धेहि सुभगे सुवीरम्।।५।।

शौ.३.१२.७ आ त्वा कुमारस्तरुण आ वत्सो जगता सह।
आ त्वा परिश्रुतः कुम्भ आ दध्नः कलशयत्।।६।।

इति तृतीयकाण्डे चतुर्थोऽनुवाकः

---

३ कख का. . . . . गृहच्छन्दा सूतधान्या;
वा. धरुन्यसि . . .; उ. . . . पूतिधान्याः।
गघ का. . . . मयिमेदा कुमारा धेनवस्यायमा स्यन्धमाना;
उ. . . . मि(ज. → वि)मयदा * * * . . . मात्स्यन्द . . .।।

४ का. . . . * * स्रोतु प्रजानां उक्षंतूना * *।
सोमो . . . कृष *; ख वा.·. . . मिनोतुः *;

५ क का. सास्स पत्निश्चरणा *;
खग का. सा. अ.।
घ का. * * धि * *। उ. रयिन्नो . . .।।

६ क का. . . . स्तरण; ग का, ज. . . . परिशृतष्(ः) *;
घ का. . . . . कलशश्चया z५z अनु ४z
वा. . . . दध्न . . .।।२०।।ऋ६।।अ४।।

## ३.२१

तै.ब्रा.२.४.७.७-६ इममिन्द्र वर्धय क्षत्रियं म
शौ.४.२२.१ इमं विशामेकवृषं कृणु त्वम्।
निरमित्रानक्ष्णुह्यस्य सर्वां-
स्तान् +रन्धयास्मा अहमुत्तरेषु+।।१।।

शौ.४.२२.३ अयमस्तु धनपतिर्धनाना-
मयं विशां विश्पतिरस्तु राजा।
अस्मिन्निन्द महि वर्चांसि धेह्य-
वर्चसं कृणुहि शत्रुमस्य।।२।।

शौ.४.२२.२ एमं भज ग्रामे अश्वेषु गोषु
निष्टं भज योऽमित्रो अस्य।
वर्ष्मतु क्षत्राणामयमस्तु राजे-
न्द्र शत्रूं रन्धय सर्वमस्मै।।३।।

---

३.२१.१ क-ग का. सा. अ.।
कख ज. * * * मैमं . . .। वा. * * * मयिमं . . .।
ग वा. . . . त्रान → न्नक्ष्णु . . .;
घ का. स्तारधयस्माहमु . . .। वा. स्तानरन्धयास्मा (नूह →) नअहमु . . .।। म. . . . यास्मान अह . . .।।
ज. . . . . यास्मानह . . .।।
२ का. सा. अ.।
ग वा. . . . महि → इ * . . .,
३ कख का. सा. अ.।
ख वा. निष्ठंभयजोमि . . .। म. . . . . ऽस्य। का, ज. ऽनास्ति।
घ का. . . . शत्रूरंधय. . . .।

शौ.४.२२.४ अस्मै द्यावापृथिवी भूरि +वामं
सं दुहातां घर्मदुघे इव धेनुं।
अयं राजा प्रिय इन्द्रस्य भूयात्
प्रियो गवामोषधीनामुतापाम्।।४।।

शौ.४.२२.५ युनज्मि त उत्तरावन्तमिन्द्रं
येन जयन्ति न पराजयन्ते।
यस्त्वा करदेकवृषं जनाना-
मुत +राजन्नुत्तमं मानवानाम्।।५।।

शौ.४.२२.६ क-ग उत्तरस्त्वमधरे सन्त्वन्ये
ये के च राजन् प्रतिशत्रवस्ते।
एकवृष इन्द्रसखा जिगीवां
शौ.७.७३.१० घ छत्रूयतामभि तिष्ठा महांसि।।६।।

३.२२

विषाणास्याङ्गिरसी देवजाः प्रतिचक्षणी।
शौ.६.१००.३ग; दिवस्पृथिव्याः संभूता सहस्राक्षीहैधि नः।।१।।

---

४ कख का. . . . . भूर्वासू * दुहितां घर्मदुहेव *।
क उ. * * * भामं; ख ज. * * * व *।
ग का. सा. अ.।

५ क का. सा. अ.। वा. * * उत्तराव → मन्त . . .;
ख का. * जयन्ते।
घ का. . . . . राजनुत्त . . .। उ. -मुत्तराजंनुत्त . . .।।

६ का. . . . . . मन्त्वन्ये ; उ. . . . रस्तुम . . .; ज. . . . संत्वन्ये;
ख-घ का. . . . . प्रदिशत्रस्थे। एकवृषा * * शत्रूयता . . . z9z
ख वा. . . . . प्रिति . . .। ज. प्रदि → तिशस्त्रवस्ते।

३.२२.१ का. . . . . रसि देवजा प्रतिचक्षिणी
. . . संभूतस् . . . क्षीधि *;
ख वा. * प्रतिचक्षणि → णी।।

सहस्राक्षी या तु गृभाति पश्यास्योषधे।
सदान्वाघ्नी रक्षोघ्नी भवेह प्रतिचक्षणी।।२।।

ये हरन्त्यासुतेयं पयस्फातिं चौषधे।
शौ.१९.३५.३ग; तांस्त्वं सहस्रचक्षो गृभाय कृतवीर्ये।।३।।

य आतुरं रन्धयन्तेऽर्भन्तं च विहृतम्।
तांस्त्वं सहस्रचक्षो गृभाय कृतवीर्ये।।४।।

यथाश्वा चतुरक्षो रात्रिंनक्तातिपश्यति।
शौ.४.२०.५ग-घद्रः एवा सहस्रचक्षो त्वं प्रति पश्यास्यायतः।।५।।

गोभिरश्वैर्वसुभिरपक्रीतास्योषधे।
श्यावस्याश्वस्य' चक्षुषा प्रति पश्य किमीदिनः।।६।।

---

२ का. . . . स्राक्षियाद् * पश्याम्योषधे
. . . न्वाघ्नी * * . . . चक्षिणी।
ख वा. ग्रुभाति . . .। घ वा . * . . . चक्षिणि → णी।।
३ कख का. . . . न्यामुतेयं * च ओषधे।
गघ का. = २ गघ।
४ का. यातुनो रंधयन्तेरुक्मंतं * विहुतं . . . दक्षो . . .;
ग वा. तास्त्वं . . .;
द्र.ख < रिष्यन्तं * *? 'अरुष्मन्तं * विहुतम्' इति Hoffmann, 1992, 750
५ का. . . . . . नक्तात्पश्यति . . . यत।
६ ख का. . . षधी; उ. रथक्रीता . . .।
ग का. श्वावस्याश्वश्य *;
उ. श्यावस्या(ज. वःस्या → श्या)श्च *;

## ३.२३

सं सचध्वं सं पिबध्वमन्नं वो मधुमत् सह।
व्रतं वः सर्वं सध्र्यक् समानं चेतो अस्तु वः।।१।।

सं जानीध्वमिन्द्रश्चेत्ता वोऽस्त्व-
यं वोऽग्निर्नि हरः शमयाति।
यद्वैरहत्यमुत भीममासी-
द्विश्वे देवा अप तत्[1] प्लावयन्तु।।२।।

शं वः स्यास्तु बृहस्पतिः
शं द्यावापृथिवी उभे।
शमन्तरिक्षमुत वो मरुत्वान्
शं वः स्यास्त्वदितिर्देवपुत्रा।।३।।

काठ.७.१४
तै.४.४.११.१
मै.१.६.२
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः।
कल्पन्तामग्नयः सर्वे ऽस्मै श्रैष्ठ्याय सव्रताः*।।४।।

---

३.२३ १ क का. * शुदध्वं * पिपध्व- ; वा, ज. * * * पिपध्व-;
ख ज. मन्नम्वो * *;
ग वा. व्रतम्वः * सध्र्यक् (→ धयिक्); ज. . . . सध्रियक्;
का. . . . . सध्रिक्;
घ का. * * स्तु *; म, ज. . . ऽस्तु *।।

२ गघ का. यद्वैरहत्यमु भीम . . . . . . देवा उत्प्राव . . .;
घ वा. . . . अप → उप तप्लाव . . .।। म, ज. . . * तप्लावयन्तु।

३ का. सं वश्यास्तु * सं * * ·
. . . मरुत्वां सं वश्यस्त्वदि . . .;
क,घ वा. शम्वः . . .; क ज. * * श्यास्तु *;
घ म. * * श्यास्त्व . . . पुत्राः।। ज. * वश्यास्त्व . . .।।
द्र. क पाठः सन्दिग्धः। स्योऽस्तु इति दुर्गामोहनपादाः।

४ ख का. . . . ओषधी।
घ का. अस्मै श्रेष्ठाय सर्वदा; उ. * * (वा. श्रेष्ठ्याय) सव्रता।।

काठ.७.१२ सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः।
संसृष्टा वस्तन्वः सन्तु संसृष्टः प्राणो अस्तु वः।।५।।

सं वः पशूनां हृदयं सृजामि
सं पुत्राणामुत या दुहितरो वः।
सं वो जायानां मनसा मनांसि
सं पतीनामुत चक्षुः सृजामि।।६।।

## ३.२४

शौ.३.२७.१-६ प्राची दिगग्निरधिपति-
रसितो रक्षितादित्या इषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।१।।

---

५ ख उ. संसृष्टिं . . . ।

६ द्र. वा. सर्वत्र सम् इति।
ख वा, ज. . . . जा * *;
घ का. * पतीनांमुतचक्षुषस् * z३z

३.२४.१ का. अथ रक्षामन्त्रम् ओँ प्राची . . .।
ख का. . . . रक्षता . . .; द्र. एवमुत्तरत्रापि।
घङ का. सा. अ.।
घ म, वा. . . . अस्तु।
उ. वा. * अस्मां . . .; म, ज. * ऽस्मां . . .;
च उ. स्तम्वो . . . .।।

दक्षिणा दिगिन्द्रोऽधिपति-
स्तिरश्चिराजी रक्षिता वसव इषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।२।।

प्रतीची दिग् वरुणोऽधिपतिः
[+]पृदाकू रक्षिता मित्र इषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।३।।

उदीची दिक् सोमोऽधिपतिः
स्वजो रक्षिता वात इषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।४।।

---

द्र. २-५ तेभ्योनम इत्यादिकमूह्यम्।

२ ख का. सा. अ.।

३ क का. सा. अ.।

ख का. प्रजाकूरक्षता * *;
वा, ज. प्रदाकू . . .; म. प्रुदाकू * . . . .; म२ . . . मित *।।

ध्रुवा दिग् विष्णुरधिपतिः
कल्माषग्रीवो रक्षिता वीरुध इषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।५।।

ऊर्ध्वा दिग् बृहस्पतिरधिपति-
श्वित्रो रक्षिताशनिरिषवः।
तेभ्यो नमोऽधिपतिभ्यो नमो
रक्षितृभ्यो नम इषुभ्यो नमो वोऽस्तु।
योऽस्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।६।।

## ३.२५

शौ.४.११.१ अनड्वान् दाधार पृथिवीं द्यामुतामू-
मनड्वान् दाधारोर्वन्तरिक्षम्।
अनड्वान् दाधार प्रदिशः षडुर्वी-
रनड्वानिदं विश्वं भुवनमा विवेश।।१।।

---

५ ख का. सा. अ.।

६ ख का. शत्रोरक्षता . . .; वा. . . . . शनिर्ष( → रिर्ष)वः।

ग-च का. सा. अ.।

घ वा, ज. . . . . अस्तु।

उ. वा. * अस्मां . . .; म, ज. * ऽस्मां . . .;

च उ. स्तम्वो . . .।।

३.२५.१,२ द्र. का, उ. अनड्वां इति सर्वत्र व्यञ्जनात् पूर्वम्।

क का. . . . . पृथिवी . . . तासू- ; उ. . . . मुतामु (म१ → मू)-;

द्र. का. अन्ये सा. अ.।

शौ.४.११.४ अनड्वान् दुहे सुकृतस्य लोक
ऐनं प्यायेत* पवमानः पुरस्तात्।
पर्जन्यो धारा मरुत ऊधो अस्य
यज्ञः पयो दक्षिणा दोहो अस्य।।२।।

शौ.४.११.२ अनड्वानिन्द्रः स पशुभ्यो वि चष्टे
त्रयांछक्रोप मिमीते अध्वनः।
स भूतं भविष्यद्भुवनं दुहानः
सर्वा देवानां बिभ्रच्चरति व्रतानि।।३।।

शौ.४.११.५ यस्य नेशे यज्ञपतिर्न यज्ञो
नास्य +दातेशे न प्रतिग्रहीता।
यो विश्वभृद्विश्वकर्मा
घर्मं नो ब्रूत यतमश्चतुष्पात्।।४।।

शौ.४.११.३ इन्द्र एष मनुष्येष्वन्त-
र्घर्मस्तप्तश्चरति शोशुचानः।

---

२ का. . . . . लोकं एनं पाहेत् * * * * मरुतोधोस्य . . . द्रहोस्य।
ख उ. . . . . प्यायेति * * । ग, घ, म, ज. . . . ऽस्य।।
द्र. प्यायेत इति दुर्गामोहनपादकृतः शोधः। शौ. प्याययति इति।

३ का. . . . न्द्रस्य * * * त्वयांयशक्रो अ * * सं . . . बिभ्रश्च . ..;
ख वा, म$_2$ तयां * . । म$_1$. त → त्रयां . . । ज. तयां च्छक्रो . . ।
म, ज. . . . ऽध्वनः।

४ क,घ का. सा. अ.।
खग का. * दातेशय * प्रतिगृहीता * विश्वदृग् . . .;
ख उ. * जातेशे * * ।
घ वा. घर्मन्नो . . .।। म$_2$. श्वामिं . . . . .।।

५ क म. इ( → ए?) न्द्र . . .;
ख का. . . . स्तपतश्चरतिसंशिशानः ;
वा. . . . शोषुचानः।

सुप्रजा असत् स उद्धारे न सर्षद्
यो नाश्नीयादनडुहो विजानन्।।५।।

शो.४.११.६　येन देवाः स्वरारुरुहु-
र्हित्वा शरीरममृतस्य धाम।
तेन गेष्म सुकृतस्य लोकं
घर्मस्य व्रतेन यशसा तपस्यया+।।६।।

शौ.४.११.११　द्वादशैता रात्रीर्व्रत्या आहुः प्रजापतेः।
तत्रापि ब्रह्मणो व्रतं तत्राप्यनडुहो बलम्।।७।।

x　यास्त आहुः प्रजापतेर्व्रत्या रात्रीर्द्वादश।
तत्रापि ब्रह्म यो वेद तद्वा *अनडुहो बलम्।।८।।

---

ग　का. सुप्रदासस्स * ण सरिषद्; वा, ज. . . . ण *; घ का . सा. अ.।
गघ　उ. . . . सर्षह्यो . . .।।
घ　म१. . . . . दनुडुहो * ।।
६　क　का. सा. अ.।
घ　का. . . . . तपस्व्या; वा. . . . . तपश्ययात्।।
म. . . . . तपस्ययात्।। ज. . . . तपश्ययात् → ϐ?
७　का. * रार्वत्याहुष्; अतः र्पाततम्।
क　उ. द्वादश इता . . .;
ख　वा. व्रत्या * * । ज. दूव्रत्या * * ।
घ　म. . .. वळं।। एवमुत्तरत्रापि।
८　का. [नास्ति] प्रजापतेर्वर्त्या . . द्वादश तद्वापि . . . तद्वानुडुहौ *;
क　म२ यास्ताआहुः . . . .;
कख　वा, ज. . . . तेद्वत्या . . . द्वादश।
ग　म. . . . * णो * ; ज. . . . णो → योवेत;
घ　उ. तद्वा(म, ज. ऽ)नडुहो * ।।

शौ.४.११.१२ दुहे वा *अनड्वान् सायं दुहे प्रातर्दुहे दिवा।
दोहा ये अस्य संयन्ति तान् विद्मानुपदस्वतः।।९।।

शौ.४.११.९ यो वेदानडुहो दोहान् सप्तानुपदस्वतः।
प्रजां च लोकं चाप्नोति तथा सप्तर्षयो विदुः।।१०।।

शौ.४.११.८ मध्यमेतदनडुहो यत्रैष वह आहितः।
एतावदस्य प्राचीनं यावान् प्रत्यङ् समाहितः।।११।।

शौ.४.११.१० पद्भिः सेदिमवक्रामन्निरां जङ्घाभिरुत्खिदन्।
श्रमेणानड्वान् कीलालं कीनाशश्चाभि गच्छतः।।१२।।

x इन्द्र एष मनुष्येष्वनड्वानित्युच्यते।
शफासो अस्य मा*रिषन् सर्वा याश्चास्य
कुष्ठिकाः।।१३।।

---

९ क का, वा. * * नड्वान * ; म. . . . ऽनड्वान्; ज. * * नड्वान्;
ग का. सा. अ.।
घ. उ. . . . विद्वा . . ।। का. . . . स्यतः;

१० कख का. सा. अ.। ग उ. प्रजाञ्च . . .;
घ वा. सप्तऋ → र्षयो * ।। ज. * सप्तऋषयो * ।।

११ ख,घ का. सा. अ.। ख वा. . . . वआहितः।

१२ कख का. * सेधिममक्रामंनिरांजंघाभिरुक्षिद ;
क वा.; ज. * सेदिवमक्रामं ; म$_1$. * सेदिवम(→ मव)क्रामं;
म$_2$ * सेदिमवमक्रामं
ख उ. - निरांजंघाभिरुत्खिदं। गघ का. सा. अ.।
घ उ. कीनास(का. श)श्चा . . .।।

१३ क का. इ * . . .;
गघ का. शफसोभ्यपार्षं * . . . कुष्ठिनः;
उ. * * (म, ज. ऽस्य)मार्षं * यास्यास्य * ।।
वा. . . कुष्ठि → ष्ठिकाः।।

४ इन्द्रो बलेनासि परमेष्ठी
व्रतेन येन गौस्तेन वैश्वदेवः।
यो अस्मान् द्वेष्टि यं वयं द्विष्म-
स्तस्य प्राणान् सं बृहत्तस्य प्राणान् वि वृह। ।१४। ।

इति तृतीयकाण्डे पञ्चमोऽनुवाकः

३.२६

शौ.७.६०.१ द्रः वा ३.४१ग-घ
गृहानैमि[+] मनसा मोदमान
ऊर्जं बिभ्रद् वसुमनिः सुमेधाः।
अघोरेण चक्षुषा मित्रियेण
गृहाणां पश्यन्* पय उत्तरामि। ।१। ।

शौ.७.६०.२;
इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः।
पूर्णा वामस्य तिष्ठन्तस्ते नो जानन्तु जानतः। ।२। ।

---

१४ का. * वलेनास्य * व्रतेनैन . . . देयाः * स्मान् . . . चवय . . प्राणानस वहेस्तस्य * * वर्हः z५z अ५z
ग उ. (वा. * अस्मान् →) * ऽस्मां * ;
घ वा. . . . प्राणान * * ;

३.२६.१ का. गृहानेमि * . . मानोजं * वसुमतिस् सुमेताघोरेण . . .पश्यं * * ।
क उ. गृहानैव . . .; ग उ. . . . मित्र्येण (म२. मित्रेण);
घ उ. * पश्यं . . .। ।

द्र. ख वसुवनिः इति शौ. काठ. हि.गृ। वः सुमनाः इति माध्य. आप. लाट्या, शांगृ; वः सुवनिः, वसुमनाः इत्यपि आप. श्रौ.। अस्माकं पाठः सन्दिग्धः।
घ वय इत्यन्यत्र।

२ ख ज. ऊर्ज (+:) स्वन्तः पयःस्वन्तः।
का. * वमस्य . . .;

यानि ते मरुतश्चक्रुर्यानि सप्तर्षयो विदुः।
विश्व आदित्या यां विदुः सा भूमिर्विषदूषणी।।६।।

६.८

सहस्व यातुधानान् सहस्व यातुधान्यः।
सहस्व सर्वा रक्षांसि सहमानास्योषधे।।१।।

सहमाने सहस्वति सहन्त्यहमुत्तरे।
उताहमस्मि सासहिः सासहे वः सदान्वाः।।२।।

या सहमाना चरसि सासहान इवर्षभः।
सदान्वाघ्नी रक्षोघ्नी सा त्वमुग्रास्योषधे।।३।।

खेले है लम्बनस्तनि नश्येतः प्रामुतः पत।
घ पै.५.६.४घ  न त्वामवव्यचदिहोखेव शृङ्गवच्छिरः।।४।।

असुवाने बहुपुत्रे अनन्तर्वे महोदरि।
यथास्मत्त्वरे+ त्वं शर्करा वप्सती चर।।५।।

---

६ कख उ. * * मरुतश्चकृर्यानि * *।
ग का. विश्वादित्या * *;
६.८.१ का. * यातुधानां * यातुधान्याः;
२ का. संहत्याहमुत्तरा। . . . सासहि। सहसेव सधान्वा।
३ का. * सहसान चरति सासहानैव वृषभः;
४ का. * हलंमनस्तनि नश्चेभष्पुरामुतष्पथा * त्वाममव्यतदिहो अक्षेवु . . . .;
कख मा. * * लंवनस्तनि नस्येतः . . . . .।
ग उ. . . . . शृङ्गवत् सिरः।।
द्र. ४ग < अविव्यचत् ?
५ का. अमुवाने * अनंत्रर्व्ये (?) *। पथस्सत्सत्तरे * * * तर।
घ मा. * वप्सति *।।

घ.पै.५.६.४घ, ये (ऽ)रायाश्चरथ पाकस्येच्छन्त+ आसुतिम्।
ऋ.१०.१५५.२घ तानग्ने कृष्णवर्तने तीक्ष्णशृङ्गो दृशन्निहि।।६।।

ऋ.१०.१५५.३ अदो यद् दारु प्लवते सिन्धोर्मध्ये अपूरुषम्।
तदा रभस्व दुर्हणो तेन याहि परस्तरम्।।७।।

यस्या जनित्रमिष्टर्गा अदृष्टाः कृमयः पुलुषयः।
तस्यै बलासपत्न्यै नमस्कृणोमि कुक्ष्यै।।८।।

शर्वपुत्रे भवपत्नि यातुभ्रात्रि सदान्वे।
+तस्याद्धि पुत्रान् भ्रातृंश्च यत्र त्वापनयामसि।।९।।

६.९

तै.ब्रा.२.४.७.१ वृषायमंशुर्वृषभाय गृह्यते
वृषायमुग्रो नृचक्षसे।
दिव्यो नर्यो ऽचिक्रदन्
महन्नामर्षभस्य यत् ककुत्।।१।।

---

६ का. * रायाश्चरति पाकस्येश्छंत्वाशुचिं . . . . कृष्णवर्त्मि *
दृशंनिहि।
घ उ. * दृशन्नहि ।।
द्र. < तीक्ष्णशृङ्ग उत् ऋषन् ?
७ ग का. उचारभस्य * ;
८ का. अस्या जनिष्टमिष्टर्गा अरिष्टाष्क्रिमयष्पुरुषाय
* बलासपत्नी नमः कृणोमि कुष्ठी;
द्र. ख < पुरीष्याः?
९ का. सर्वपुत्रे भवपत्नि यादुच्चात्तस् *
तस्याधि * भ्रातृंश्च * त्वाविनयामसि z३z
ग मा. तस्याद्रि . . . .; म. तस्याद्दि . . .;
६.९.१ का. . . . . . मूचुर्वृषभाय *;
ख मा. . . . . . मु (→ मू) ग्रो *;
गघ का. * निर्यो अचिक्रदं नहं नाम ऋषभस्य * * ।

२ विषुवान् विष्णो भव त्वं यो नृपतिर्मम।
अथो इन्द्र इव देवेभ्यो वि ब्रवीतु जनेभ्यः।।२।।

मनुष्येभ्यो वि ब्रवीतु सजूरिन्द्रेण मेदिना।
अग्निश्च तुभ्यं साहन्त्यो राष्ट्रं वैश्वानरो दधत्।।३।।

६ यस्यायं भाग ऋषभ इन्द्राय परिणीयते।
स हन्तु शत्रूनायतो ऽथो हन्तु परायतः।।४।।

स हन्ता शत्रोर्भवतु हन्ता भवतु दोधताम्।
गघ ७कख विशामह प्रणीरयदग्रमुद्भिन्दतामसत्।।५।।

३ आयुष्मन्तं वर्चस्वन्तं अथो अधिपतिं विशाम्।
अस्याः पृथिव्याश्चेत्तारमिममिन्द्रर्षभं कृणु।।६।।

४ याः सुशृङ्गः सुककुदः कल्याणो बर्हिरासदत्।
कार्षीवणप्रजानेन ऋषभेण यजामहे।।७।।

---

२ क का. * वृष्ण्यो (मु. वृष्णो) *;
मा. * विष्णोर्भव;
गघ का. * इन्द्रेव * * विप्रवीतु * ;
मा. * * * * * व्रवितु * ।।

३ का. मनुषेभ्यो धि व्रवीतु . . . . .।
. . . तुभ्यां सहंत्यो * * *।
कख मा. * * व्रवितु सजुरिन्द्रेण *।

४ का. यस्मायं भागमृषभमिन्द्राय *।
* हंतु . . . . . अथो हंतु *;

५ का. * हंता शत्रून्भवतु अहंता * *
विषासहः . . . . दग्रमधुभिर्दतावसत्।

६ ख मा. * धिपतिं *। म. * ऽधिपतिं *।
गघ का. * . . . . श्चेतुनेमिममिन्द्र वृषभं *।।
मा. . . . . . . मिममिन्द्र ऋषभं *।।

७ क का. अस्यशृङ्ग सुषङ्पदः; मु. अस्यशृङ्ग सुषट्पदः;

ऋषभेण यजमाना अक्रूरेणेव सर्पिषा।
मृधश्च सर्वा इन्द्रेण पृतनाश्च सहामहे।।८।।

यं तुभ्यं भागमृषभं देवाः केवल्यं ददुः।
तेन वृत्राणि जघ्नं शत्रूंश्च जह्याहवे।।९।।

जहि शत्रून् वि मृधो नुदस्व
कृष्याः सम्भूतो असि वीर्यावान्।
ग शौ.९.५.२क इन्द्राय भागं परि त्वा नयाम
उरुर्नो लोको अपृतन्यो अस्तु।।१०।।

क शौ.१३.१.२८ ख घृतवृद्ध घृताहुत सहस्रशृङ्ग सुष्टुत।
ग ऋ.१.१२.५क घृताहवन दीदिहि।।११।।

तै.ब्रा.१२ यो घृतेनावघारित उग्रो जैत्राय तिष्ठसि।
स नः सङ्कसु पारय पृतनासाह्येषु च।।१२।।

---

८ ख-घ का. क्रौरेणैव *। ...... सामहे।
९ ख मा. देवा * *। का. * कैवल्यं * ।
गघ का. * * जोहनश् .....। म. * * जंघन ....।।
मा. * * जंघनं शतृंश्च ....।।
१० का. * सत्रून् प्रन् प्रति रंधयस्व कृध्यात् * सि *।
* * * * नयामोरुंनो * * स्तु।
ग म. ...... नयामि;
११ का. * * * मघ्रुतः। * दीहि;
१२ क-ग का. * .... भिघारितमुग्रो * * * * संकुसु पारया।
ग मा. * * संकसु *;
घ उ. पृतनासाज्येषु *।।

६.१०

कर्की सुभाग ऋषभस्य पत्नी
प्रजाकामा वशिनी वाशिता गौः।
तां सहस्रमेकमुखा ददाति
गर्भं दधानामृतुना चरन्तीम्।।१।।

गर्भं दधाना पय इद् दुहाना
अग्निहोत्रं वैश्वदेवी दुहाना।
गौर्णो मा हिंसीद् वरुणस्य पत्नी।।२।।

कर्क्या योनिं संमनसो ऽभि गावः
प्रजां धितूसन्तो वृषणश्चरन्ति।
सा न ऐत्वदितिर्विश्वरूपा-
भि क्रन्दन्ति भुवनान्येनाम्।।३।।

प्रजापतिनेषितामृत्वियावतीमैनां प्रजाया ऋषभाः श्रयन्ते।
वृषण्यन्तीं वृषणः सप्तनाम्नीं हिंकृण्वन्तो
अभि नुवन्तु वाशिताम्।।४।।

---

१ क का. कवीस् * * पत्नीष्
ख मा. * * वासिता *।
घ का. * . . . नामिथुना चरन्ती z

२ का. * * पैदुहानाग्निहोत्रं * *। दौ र्ग * हिंसीर् * पत्नीं;
म. गौर्णो . . . . .।। मा. . . . . . पत्नि।।

३ का. * यानिं स . . . .। प्रजामि (→दि) श्छन्तो धिषणश्चरन्ती;
ख मु. प्रजादमिश्छ . . . . .;
गघ का. मा नेत्वदिति विश्वारूपा (मु. नूपा) . . . . न्यूनां।
ग मा. * * ऐत्वदितिविश्वरूपा;

४ का. . . . वतीनहीनां * ऋषभा * वृषण्यन्ती . . . . नुदन्ति *;
घ उ. * * * वासितां।।

सा प्रत्युदर्शुषसा सुपर्णा शुक्रं वसाना वरुणस्य निर्णिजः।
वैश्वदेवीं स्वधामाभरन्तीं प्रजां वाता
पुष्यतु गोपतिष्ठे।।५।।

सत्यं स्थावर्यृषभाय तिष्ठसि प्रतीची सोमं प्रति सूर्यमग्निम्।
अहिंसन्ती वाशितेमामुपेहि पशून् वाता
पुष्यतु गोपतिष्ठे।।६।।

वशी वाता भवतु वाशितायां
अग्नेर्भागमुस्रियां यो ददाति।
प्रियं धाम हृदयं सोम्यं मधु
वाजिनीं त्वा वाजिनो वाजयन्तु।।७।।

यो *वाशितायां गव्यन्तरग्नि–
र्यदस्यां नृम्णं महिमा बभूव।
नमस्तस्मै प्रतिगृह्णन् कृणोमि
स्योना मे अस्तु तन्वे सुशेवा।।८।।

---

५ का. * प्रत्युसनिस्सुषदा सुवर्णाश् * * वरुणश्च निम्रुदः वैश्वदेवी सुधयामारभन्ते। * * * *।
द्र. क < * प्रत्यदर्शि उषसा *; घ < * * * गोपतिष् टे।।
६ क का. स्वयं स्थावर्यवृषभाया तिष्ठिति
ग उ. * वासिते . . . . .;
७ का. * दा * वाशितायामग्नेर्भा . . . .* *। * * * सौम्यं * * * * *z
क मा. वसी * * वासितायाः; म. * * * वासितायाः;
ख उ. . . . . . गमुश्रियां * *।
८ का. * वाशितायं गव्यन्तदग्नि . . . . नृम्णां महिना *z . . . स्तेस्तु प्रतिगृह्णं गृणोमि * * स्तु * सुशेवी;
क उ. * वासितायां
घ मा. * * * तनमे सुसेवा।।
म. * * * तनवे *।।

एयमगन् वाशिता तां प्रतीमः
पुंसां व्रातेन सह पुष्ट्या गौः।
ऊर्जं दधाना घृतमिद् दुहाना
सहस्रभोगाय मे अस्तु दात्रे।।९।।

**इति षष्ठकाण्डे द्वितीयोऽनुवाकः**

६.११

पै.५.२.२ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्
शौ.५.६.१ वि षीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः
सतश्च योनिमसतश्च वि वः।।१।।

शौ.४.७.७, अनाप्ता ये वः प्रथमा यानि कर्माणि चक्रिरे।
५.६.२ वीरान् नो अत्र मा *दभन् तद्व एतत् पुरो दधे।।२।।

ऋ.९.७३.६ प्रत्नान् मानात् परि ये संबभूवुः श्लोकवन्तः
सौमनसस्य वन्तवः।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां
न तरन्ति दुष्कृतः।।३।।

---

९ का. येमगं * * . . . . . . * * सा * नागौः * * . . . दुहानां
सहस्रपोषाइमेस्तु * zzz अनु २z
क उ. . . . . . . वासिता * . . . . . .;
खग मा. पुंसा * * * * । उर्यं . . . .;

१ का. व्रह्मा जज्ञानमित्येका;
उ. व्रह्म यज्ञानमित्येका।।

२ का. * य व * * * चक्रिरे। वीरा * * * दभं तद्वेतत् * *।
ग उ. * * * * दभं;

३ का. प्रत्रात् . . . . . .* सोमनस्य वंतवः। * बदिरमस्तन्तस्य *
* * *;

ऋ.९.७३.४ सहस्रधारमभि ते समस्वरन्
शौ.५.६.३ दिवो नाके मधुजिह्वा असश्चतः।
तस्य स्पशो न नि मिषन्ति भूर्णयः
पदेपदे पाशिनः सन्तु सेतवे।।४।।

ऋ.९.११०.१ पर्यू षु प्र धन्वा वाजसातये परि वृत्राणि सक्षणिः।
शौ.५.६.४ दिवस्तदर्णवाँ अन्वीयसे सनिस्रसो नामासि
त्रयोदशो मासः।।५।।

तु.शौ.५.६.५क इन्द्रस्य गृहोऽसीन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि।
इत्यादि। व्येतेनावैतेनापैतेनारात्सीरसौ स्वाहा।।६।।

द्र.शौ.५.६.५,६,७,८ तिग्मायुधौ तिग्महेती सुशेवा-
वग्नीषोमाविह सु मृड़तं नः।
मुमुक्तमस्मान् गृभीतादवद्याज्
जुषेथां यज्ञममृतमस्मासु धत्तं स्वाहा।।७।।

---

४ का. . . . . . . समस्मरं * * * अशस्यतः। * सरशो * * * *
*। पाशिनस्संतु *।
क मा. . . . . . रमभी * . . . . .;
ग मा. * स्यसो * * षन्ति *;

५ क का. पर्युष * धन्व वाञ्जसातये; मा. . . . . वायसातये;
गघ का. दिवस्तुदर्णवान्नीयसे सहस्रशो . . . . * *।
घ म. सनिश्रसो . . . . .।।

६ का. . . . . . . शर्मासि इन्द्रस्य वर्मासि। इन्द्रस्य वैरूथमसि।
वीतेनावैतेनामैतेनरातूस्त्रीददसौ *।
मा. * गृहोसी इन्द्रस्य शर्मासी इन्द्रस्य . . . वरुथमसि। . . .।।

७ खग का. ग्नीषोमाविह * मृळतं * समुक्तमस्माद् गृभीथा। दवद्याजू;
ख मा. वग्नीसोमाविह * * *।
का. मृळतं; Edgerton मृडातं; रघुवीर-मृधतं!

९ चक्षुषो हेते मनसो हेते ब्रह्मणो हेते मेन्या मेनिरसि।
अमेनयस्ते सन्तु यो ऽस्मानभ्यघायन्ति स्वाहा।।८।।

१० योऽस्मान् चक्षुषा मनसा यश्च वाचा-
कृत्या चित्त्या ब्रह्मणाघायुरभिदासात्।
त्वमग्ने त्वं मेन्यामेनिं कृणु स्वाहा।।९।।

शौ.५.६.८कख उदायुरुत् कृतमुद् बलमुन्मनीषो-
रिन्द्रियं नृम्णमस्मासु धत्तं स्वाहा।।१०।।

६.१२

शौ.५.६.८ ग-ङ आयुष्कृदायुष्मती स्वधावन्तौ
गोपा मे स्थो गोपायतं मा।
आत्मसदौ मे स्थ तन्वे सुशेवौ
मा मा हिंसिष्टं स्वाहा।।१।।

द्र. शौ. ५.६.
११,१२,१३,१४ इन्द्रस्य गृहोऽसीन्द्रस्य शर्मासीन्द्रस्य
वर्मासीन्द्रस्य वरूथमसि।
तत्त्वा प्र विशामि सर्वाङ्गः सर्वात्मा
सर्वगुः सर्वपूरुषः+ सह +यन्मेऽस्ति तेन।।२।।

---

८ गघ का. अनेनयस्ते * * . . . . नभ्यभायन्तु *z
ग मा. अमनयस्ते . . . .;
९ कघ का. * स्मां . . . . . दित्या (उ. चित्या) . . . . . रिभदासा;
१० का. . . . . . कृतबद्बलमंननीषोयदिन्द्रं . . . . धेहि *।
द्र. < उन्मनीषा उदिन्द्रियं?
६.१२.१ का. . . ष्कृतायुष्मती स्वधावन्तो * * * गोपायतन्वा। आत्मसधू
* स्तन्वे सुशेनौ। . . . . zz
गघ उ. * * * तनवे * * * हिंशिष्टं *।।
द्र. का. अयं मन्त्रः ११शसूक्तस्य अन्तिमः।
२ का. * * सिन्द्रस्य शर्मासि इन्द्रस्य वर्मासि इन्दस्य मर्हतमसि।
तत्वा * * * सर्वां * * सर्वपौरुषः सम्ये स्तुतेन; उ. . . तत्वा . . .।
घ उ. * सर्वपुरुषः * जन्मे * *।।

शौ.५.९.७ अस्तृतो नामाहमयमस्मि
स आत्मानं परि दधे द्यावापृथिवीभ्याम्।
गोपीथाय प्र हूयसे।।३।।

अस्तृतो नाम प्राजापत्यो देवो मासस्त्रयोदशः।
सर्वगुः सर्वपूरुषः +प्रागां देवपुरा अहम्।।४।।

अन्तः प्रागां देवपुरा सहग्रामः स्वस्तये।
संवत्सरस्य मध्यतः सर्वैः सोदर्यैः सह।।५।।

प्राहमगां देवपुरा य एवास्मि स एव सन्।
यो मा कश्चाभिदासति स प्रजापतिमृच्छतु+।।६।।

काठ.३७.१५, अस्मासि प्रति स्म सः पाहि रिषः पाहि द्विषः।
तु.तै.५.७.३.१ख पाहि दैव्या अभिशस्त्या+ स मैव तन्वं पाहि।।७।।

---

३ का. . . . . . . नामाहमयामस्ति मात्मानं * * * गोपीयाय * *।
ख उ. * * * ददे;

४ का. * नामा प्राजापत्यो देवपुरायं; द्र. मन्त्रपाठो नष्टः।
ग मा. * * प्रागा * *।। म. . . . प्रागान् * *।।

५ का. * प्रहागां देवपुरात् * * z * सप्यतस् * सहोदरी सह z ओं सर्वैस् सहोदरी सह;
कख मा. * प्रागा * * *। म. * प्रागान् * सहग्राम *।
घ मा. * सोदजैः सह।। श्रीः।।
म. मन्त्रान्ते छेदचिह्नम्।

६ का. प्रहणगां देवापुरा येवास्मि मेव नं * * . . .। * . . . पतिमिवगच्छति।
क मा. प्राहमगा *; म. प्राहमगान् *;
घ उ. * प्रजापतिमृछतु।।

७ का. अस्मासु * * शष् . . . देव्या भिशस्त्यात् * मीय * *।
ख-घ उ. * ऋषः (मा. ऋष) * *। * * अभिशस्तिया * . . . . तनवं *।।
द्र. घ < म इह * *।।

तु.शी.५.१०.१ योऽस्मान् प्राच्या दिशोऽघायुरभिदासात्।
एतत् स *ऋच्छादश्मवर्म नोऽस्तु।।८।।

२ योऽस्मान् दक्षिणाया दिशो (ऽघायुरभि.....)।।९।।

३ योऽस्मान् प्रतीच्या दिशो [ऽघायुरभि....]।।१०।।

६.१३

तु.शी.५.१०.४ [यो] ऽस्मानुदीच्या दिशो [ऽघायुर्.....]।।१।।

५ योऽस्मान् ध्रुवाया दिशो [ऽघायुर्.....]।।२।।

६ योऽस्मानूर्ध्वाया दिशोऽघायुरभिदासात्।
एतत् स *ऋच्छादश्मवर्म नोऽस्तु।।३।।

प्राच्यै दिशे स्वाहा।।४।।
दक्षिणायै दिशे स्वाहा।।५।।
प्रतीच्यै दिशे स्वाहा।।६।।

---

८ का. * स्मन् * * घायुरभिदासा। * * दित्सादश्मवर्म णो स्तु;
ग उ. * * ऋत्सादश्मवर्म * *।।

९ का. अस्मां * *;

१० का. अस्मान् * * z२z

६.१३.१ सर्वत्र अस्मानिति, २ का. अस्मां इति, म अस्मानिति आरभ्यते।

३ ग का. z तत् * रित्सादश्मावर्म णो *।
उ. * * ऋत्सादश्मवर्म * *।।

४ का. प्रच्यै * *।

६ का. प्रतीचै * *।

उदीच्यै दिशे स्वाहा। ।७। ।

ध्रुवायै दिशे स्वाहा। ।८। ।

ऊर्ध्वायै दिशे स्वाहा। ।९। ।

शौ.५.९.१. दिवे स्वाहा। ।१०। ।

३ अन्तरिक्षाय स्वाहा। ।११। ।

२ पृथिव्यै स्वाहा। ।१२। ।

६ पृथिव्यै स्वाहा। ।१३। ।

४ अन्तरिक्षाय स्वाहा। ।१४। ।

५ दिवे स्वाहा। ।१५। ।

६.१४

महाकण्ठं करीषजमूबध्यादमनाहुतिम्* ।
ओष्ठः कोकमुखश्च यस्तानितो नाशयामसि। ।१। ।

अरामदन्तमवदलं प्रहालमहिनासिकम्।
उपवर्त्तं बलाहकं खेलं गर्दभनादिनं
गृध्रं हस्त्यायनं तान् [इतो नाशयामसि]। ।२। ।

---

प्र. का. १२-१४ न सन्ति। म. १३ नास्ति।

१५ का. देवे * z३z इति रक्षोघ्नसूक्तम् zz

६.१४.१ का. * करीषाजमबद्ध्यादमनाहुतं। * कोखमुखश्च यस्तायितो *;

कख. उ. * . . . . तमुवध्याद . . . .।

प्र. ख म. अंशतो नष्टम्।

२ का. रामदन्तसोदनं प्रहारम . . . उपवृत्त्रं * खेनं *। गृद्धं * त्या।

ङ. उ. गरुध्रं * *। ।

प्र. क < अवदनम्?

+प्रमृश्यादिनमभ्यमं भीमहस्तं मरीमृशम्।
त्रस्ताक्षं मृद्वङ्गुलिं नखोग्रं दन्तवीर्यं
तान् [इतो नाशयामसि]।।३।।

पर्यन्यमभिपापदं जिगीषमाणं रूपकम्।
अथो शलल्यं शेवलं तान् [इतो नाशयामसि]।।४।।

तण्डमग्रे तुण्डिकमर्लिशमुत वत्सपम्।
दामग्रन्थिं सनिस्रसमरण्येयं चार्म्येयं
तान् [इतो नाशयामसि]।।५।।

इदं यज्ञानुकेशवं रक्षश्चरत्यासुरं
वहिः प्रयुतमिच्छति+।
अंसून् पांस्यूंश्च केश्यानरायान् +छ्वकिष्कितस्
तानितो नाशयामसि।।६।।

---

३　का. प्रमृष्यादिनसत्यमं। * सरीसृपं (→ मरीमृशं) भ्रस्ताक्षं * * दंशवीर्यं तां;
क　मा. प्रमुष्यादिन . . . . .; म. प्रमुश्यादित . . .;
द्र.　क तुल. शौ. ५.६.६. या गर्भान् प्रमृशन्ति . . . .;
४　का. पर्यन्दमिभिपापदं जिगीष्माणो *। * * शेवल तां।
क　मा. पर्यन्यमभिपादं;
५　का. . . . . . . तुण्डिकदल्यंश उत *। दासग्रन्थ्यं . . . . समुद्रण्येदं चारुस्यन् तां।
गघ　मा. * सनिश्रसमर . . . . .;
६　का. इदि यज्ञानकेशवं . . . रत्याहुतं बर्हिः प्रेदमिश्छति। अस्यौ नपास्योश्च गेज्ञानुरायां शुकिह्यनस्तायितो *।
ङ उ. . . . छकिष्कितस्;

यः कुमारान् जनस्यात्ति तरुणान् दास आसुरः।
रायः केश्यघलो यो जनान् हन्त्यती च
तमितो नाशयामसि।।७।।

हिराक्षो नाम गेह्योरायानामसूर्तहा।
तमितो नाशयामसि।।८।।

वितूलं भस्वमाखिदं वनक्रोशं च रोरुहम्।
आमादं प्रयुतैषणं *पर्युन्दानं परिद्रवं
वृकस्य न्यंच गङ्गणं* तानितो नाशयामसि।।९।।

६.१५

यश्च भूमा या च स्फातिर्योर्जा यो रसश्च ते।
हरामि शक्र तां अहं त्वया प्रत्तां शचीपते।।१।।

क्षेत्रात्क्षेत्रादा हरामि स्फार्तिं सर्वाञ्छचीपते।
त्वयाहं वृत्रहन् प्रत्तमा हरामि गृहाँ उप।।२।।

---

७ का. यष्कुमारां जरस्यामि तृणां दासासुर
* केश्याकिलन योह्वनानहंत्वंक्ति च ....।

८ कख का. हीराङ्गो ** रायनामसून्तह।
द्र. का. (Edg., रघु) .... मसूनुह! का. (मुम्ब) ... मसून्तह।

९ क का. नितूलं भक्ष ...; मा. वितुलं भस्म ...;
ग-च का. * प्रयतीषिणं पर्यंदानं ** नृच गंग्राणं तायितो * z४z
गघ मा. अमादं * पर्युंदानं * ; म. ** पर्युंदानं *;
उ. मा. * यंच गंगणं; म. ** कङ्गणं;

६.१५.१ का. .. भौमा ** स्फातिययोर्ज * रसस्य *। हवामि ** हन्तय
**;

२ का. ख-घ स्फांती सर्वां श ...। तयाहं वृत्रहं पतुमा *। **;
ख मा. सर्वाश्छचीपते। म. 'पते' इति कीटदष्टम्।

यस्ते सीताभगः क्षेत्रे या +राद्धिर्यश्च सीयते।
अथो या निष्ठायते क्षेत्रे तां त आदिषि ब्रह्मणा।।३।।

यत् खले यन्मयारे यद् गोष्ठे यश्च शेवधौ।
अथो यत् कुम्भ्यां शये तस्य ते रसमा ददे।।४।।

ऊर्जा या ते निरुप्तस्योर्जा यावहतस्य ते।
ऊर्जां+ ते पिष्यमाणस्योर्जां पिष्टात् त आ ददे।।५।।

[ऊर्जा या] ते निरुप्तस्योर्जा यावहतस्य ते।
ऊर्जां+ ते पच्यमानस्योर्जां पक्वात् त [आ ददे]।।६।।

ऊर्जा या ते प्रणध्वस्योर्जा या मथितस्य ते।
ऊर्जां ते दुह्यमानस्योर्जां दुग्धात् त आ ददे।।७।।

---

३ का. . . सीताभगा * आराधिर्यश्च शीयते। ** निष्ठाते * इत्वाहार्षि *।
ख उ. * राद्धिर्यश्च *।
४ का. ** नमयादे ** यश्च *। अथोत् कुस्त्यांसे ** . . . दधे।
५ क मा. उर्जा . . . . .,
का. *** नृपतस्योर्जा . . . .* उर्जं * पश्यमानस्योर्जं पिष्ठात्तादधे।
ग मा. उर्जां . . . .; म. ऊर्जान् . . . .;
६ का. . . . . नृपतस्योर्जा वाता अस्य *। ऊर्जं * पिह्यमानस्योर्जां पक्वा ते;
ग मा. उर्जान् * . . . .; म. ऊर्जान् * . . . .;
७ का. *** प्रणुग्धस्योजा * मधितस्य *।
ऊर्जा * . . . . स्योर्जं दूग्धान् तादद।
क-ग मा. उर्जा जा . . . . उर्जान् * . . . .;
म. भूयशः कीटदष्टम्। द्र. क < प्रणद्धस्य ?

आ ते ददे गवामूर्जामूर्जामविभ्य आ ददे।
अजाभ्य ऊर्जामादायात एकशफा ददे।।८।।

ऊर्जा या ते पुरुषेषूर्जा वित्ते च वेद्ये।
+ऊर्जां ते सर्वेषामहं गृहाणां ब्रह्मणा ददे।।९।।

९.१६

(ऋ. १.१८७; काठ. ४०.८)

पितुं नु स्तोषं महो धर्माणम् तविषीम्।
यस्य त्रितो व्योजसा वृत्रं +विपर्वमर्दयत्।।१।।

स्वादो पितो मधो पितो वयं त्वा विवृमहे।
अस्माकमविता भव।।२।।

उप नः पितवा गहि शिवः शिवाभिरूतिभिः।
मयोभूरद्विषेण्यः सखा सुशेव एधि नः।।३।।

तव त्ये पितो रसा रजांस्यनु विष्ठिताः।
दिवि वाता इव श्रिताः।।४।।

---

८ का. * * तदे . . मूर्जमूर्जामवित्या दधे।
अजाध ऊर्जोमा . . . एकशपा दधे;
गघ मा. * उर्जामादायातयेक . . . . .।।

९ का. * * * पुरुषूर्जा चित्ते * *।
ऊर्जा * . . . . . z५z
ग मा. उर्जान् * सर्वेषाम्यहं;

१ का. * न * * * तविषी। . . . . विपर्यमर्दयत्।
क उ. पितुन् * * *;
घ उ. * पिपर्वमर्दयत्।।

२ ख का. * * विवृझ्हे। मा. * * विवुमहे।।

३ क का. उत्त नष्पितुवा *;

४ ख मा. . . . . विष्ट्ठिताः।

तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो।
प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते।।५।।

त्वे पितो महानां देवानां मनो हितम्।
अकारि चारु केतुना तवाहिमवसावधीत्।।६।।

यददः पितो अजगन् विवस्व पर्वतानाम्।
अत्रा चिन्नो मधो पितो ऽरं भक्षाय गम्याः।।७।।

यत्ते सोम गवाशिरो यवाशिरो भजामहे।
वातापे पीव इद् भव।।८।।

यदपामोषधीनां परिंशमारिशामहे।
वातापे पीव इद् भव।।९।।

करम्भ ओषधे भव पीवो वृक्क उदारथिः
वातापे पीव इद् भव।।१०।।

तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम।
अस्मभ्यं त्वा सधमादं देवेभ्यस्त्वा सधमादम्।।११।।

---

५ का. * * * ददतः * स्वातिष्ठ * *। * * * तुव्यग्रीवा . . . .।
गघ म. * * रसानान्तुविग्रीवायुवेरते।।
मा. * * * * युवेरते।।
६ क का. यत्ते * *;
७ गघ का. * . . . . मधु * * * गम्यां। म$_2$ कीटदष्ट्यन्यक्षराणि।
८ क का. . . . . . . . गआशिरो;
ख उ. जवाशिरो *।
९ ख का. बलिंसमा . . .।
ग उ. नास्ति।
११ क का. तन् . . . .;
कख मा. * * * पितोभिर्गावो * * *।
ग का. अस्माभ्यं * सदमादं . . . . . सदमादं z६z

६.१७

(१-६ ऋ. १.१६. १--६)

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे।
मरुद्भिरग्न आ गहि।।१।।
न हि देवो न मर्त्यो महस्तव क्रतुं परः।
मरुद्भिरग्न आ गहि।।२।।

ये महो रजसो विदुर्विश्वे देवासो अद्रुहः।
[मरुद्भिर् .......]।।३।।

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः।
[मरुद्भिर् .........]।।४।।

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा।
[मरुद्भिर् .........]।।५।।

ये नाकस्याधि रोचने दिवि देवास आसते।
[मरुद्भि ......] ।।६।।

य ईङ्खयन्ति पर्वतान् तिरः समुद्रमोजसा।
[मरुद्भि .......]।।७।।

---

२ ख का. ...... * पुराः;
३ क का. यमोह .....;
ख उ. ...... अदृहः।
४ ख का. * रिषादसः; मा. * रिसादसः।
५ का. * * . . मानृतरनादृष्टास *।
६ का. * ...... देवास्सहासते।
७ क का. अयं क्षयन्ति पर्वतां;
म. * इङ्खयन्ति *

आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमर्णवम्।
[मरुद्भि . . . . . . .]।।८।।

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु।
[मरुद्भि . . . . . . . . .]।।९।।

आ यन्तु मरुतो गणै स्तुता दधतु नो रयिम्।
[मरुद्भिरग्न आ गहि]।।१०।।

ऋ.१.१४.२ द्र. आ त्वा कण्वा अहूषत' गृणन्ति विप्र ते धियः।
मरुद्भिरग्न आ गहि।।११।।

इति षष्ठकाण्डे तृतीयोऽनुवाकः

६.१८

शौ.७.३३.१ सं मा सिञ्चन्तु मरुतः सं पूषा सं बृहस्पतिः।
सं मायमग्निः सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।१।।

सं मा सिञ्चन्त्वादित्याः सं मा सिञ्चन्त्वग्नयः।
इन्द्रः समस्मान् सिञ्चतु [प्रजया च ....कृणोतु मे]।।२।।

---

८ क मा. ** तन्वंति;
कख म. *** रश्मिभिः स्तिरः . . . . .।
९ क का. ** पूर्वपीतय;
१० क मा. * यन्त **;
११ कख का. *** हूषत गृणंतु ***;
उ. *** अभूषत ****। मा. कन्वा ;
६.१८.१ ग का. * . . . . . सिंचतु; मा. * . . . . सिञ्चन्तु;
द्र. उ. सर्वत्र 'सं' इत्यस्य स्थाने 'सम्' इति।
२ क उ. 'सं मा' इत्यूह्यम्।
ग का. * . . . . . सिंचतु

[सं मा] सिञ्चन्त्वरुषाः समर्का ऋषयश्च ये।
पूषा सम् [अस्मान् सिञ्चतु .....कृणोतु मे]।।३।।

[सं मा] सिञ्चन्तु गन्धर्वाप्सरसः
सं मा सिञ्चन्तु देवताः।
भगः सम् [अस्मान् ......मे]।।४।।

[सं मा] सिञ्चन्तु पृथिवीः सं मा सिञ्चन्तु या दिवः।
अन्तरिक्षं सम् [अस्मान्............मे]।।५।।

[सं मा] सिञ्चन्तु प्रदिशः सं मा सिञ्चन्तु या दिशः।
आशा सम् [अस्मान् ...........मे]।।६।।

[सं मा] सिञ्चन्तु नद्यः सं मा सिञ्चन्तु सिन्धवः।
समुद्रः सम् [अस्मान्...........मे]।।७।।

[सं मा] सिञ्चन्तु कृषयः सं मा सिञ्चन्त्वोषधीः।
सोमः सम् [अस्मान्.............. मे]।।८।।

सं मा सिञ्चन्तु या आपः सं मा सिञ्चन्तु वृष्टयः।
सरस्वती समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।९।।

---

३ क का. सिञ्चन्तनुषा
४ क का. सिञ्चतु *;
५ कख का. सिञ्चतु पृथिवी * * * * दिव्।
७ क का. * नभ्यः * * * * समुद्रास् *।
द्र. का. अष्टमोऽयं मन्त्रः।
८ ख मा. * * सिञ्चन्त्योषधीः।
ग का. संमास्सं;
द्र. सप्तमोऽयं मन्त्रः
९ कघ का. * मास् सिञ्चन्त्वापस् * * * * सत्यं . . नसिञ्चतु * * * *
द्र. का. ६.१९.६ग

## ६.१६

सं भगो वर्चसा माग्ने सं विष्णुः पुष्ट्या सिचत्।
क्षत्रं समस्मान् सिञ्चतु
प्रजया च धनेन चायुष्मन्तं कृणोतु मा।।१।।

सं विराड् वर्चसा माग्ने सं देष्ट्री पुष्ट्या सिचत्।
इडा समस्मान् सिञ्चतु
प्रजया च [धनेन चायुष्मन्तं कृणोतु मा]।।२।।

सं धाता वर्चसा माग्ने सं सिक्तिः पुष्ट्या सिचत्।
सं देवो अस्मानर्यमा
प्रजया च धनेन चा[युष्मन्तं .......... मा]।।३।।

समंशो वर्चसा माग्ने सं वायुः पुष्ट्या सिचत्।
वातः समस्मान् सिञ्चतु
प्रजया च धनेन चा[युष्मन्तं .......... मा]।।४।।

सं सभा वर्चसा माग्ने सं सुरा पुष्ट्या सिचत्।
सूर्या सम् [अस्मान् ......... कृणोतु मा]।।५।।

सं सविता वर्चसा माग्ने सं सूर्यः पुष्ट्या सिचत्।
चन्द्रः सम् [अस्मान्............ कृणोतु मा]।।६।।

---

६.१६.१　का. * भर्गो . . . सृजत् क्षेत्रं . . . सिंचतु * * * च। आयुष्मन्तं * मां;

२ख,३ख　का. * * * सृजत्;

३ग　* * स्मानर्यमा;

४ ख　का. * * * सृजत्;

५ ख　का. * सरा * सृजत्।

६ खग　का. * * * सृजत्। चन्द्र (मु.चन्द्रः) सं।

सं पशवो वर्चसा माग्ने सं यज्ञः पुष्ट्या सिचत्।
दक्षिणा सम् [अस्मान्...........मा]। ।७। ।

सं मा सिञ्चतु द्रविणं सं मा सिञ्चत्विन्द्रियम्।
तेजः सम् [अस्मान्.........मा]। ।८। ।

सं मा सिञ्चन्तु वर्चांसि सं मा सिञ्चन्तु भूतयः।
सत्यं समस्मान् सिञ्चतु
प्रजया च धनेन चायुष्मन्तं कृणोतु मा। ।६। ।

६.२०

(शौ. १६.४७)

आ रात्रि पार्थिवं रजः पितुरप्रायुधामभिः।
दिवः सदांसि बृहती वि तिष्ठस
आ त्वेषं वर्तते तमः। ।१। ।

न यस्याः पारं ददृशे न योयुवद्
विश्वमस्यां नि विशते यदेजति।
अरिष्टासस्त उर्वि तमस्वति
रात्रि पारमशीमहि भद्रे पारमशीमहि। ।२। ।

---

७ कख का. * * * ग्ने * * * सृजत्।
८ क का. सा * * *; म. सम् * * *; मा. * * सिञ्चन्तु *;
ख का. * सा * *; म. सम् * * *;
६ ग-ङ का. सरस्वती . . . . . धनेन च। आयुष्मन्तं * * Z२Z
कख म२. सम्मा * * सम्मा . . . .।
द्र. पै.१८.६ग = का. १६.६ग;
का. १८.६ग = पै. १६.६ग
६.२०.१ ख-घ का. पितरष्प्रायु . . . .* सुधांसि * व * * त्वेशं * *;
खग मा. पितुरःप्रायु . . . .* संदासि * * *;
२ का. . . . योयवद् यस्यसस्यां * मिषतेरेजति। अरिष्टशस्यच उदुर्व तिसस्यच . . . ;
घ उ. रात्री . . . . .;
ङ मा. नास्ति।

ये ते रात्रि नृचक्षसो द्रष्टारो नवतिर्नव।
अशीतिः सन्त्यष्टावुतो ते सप्त सप्ततिः।।३।।

षष्टिश्च षट् च रेवति पञ्चाशत् पञ्च सुम्नयि।
चत्वारश्चत्वारिंशच्च त्रयस्त्रिंशच्च वाजिनि।।४।।

द्वा च विंशतिश्च ते रात्र्येकादशावमाः।
तेभिर्नोऽद्य पायुभिर्नु पाहि दुहितर्दिवः।।५।।

रक्षा मा कृण्वो अघशंस ईशत
मा नो दुःशंस ईशत।।६।।

मा नो अद्य गवां स्तेनो मावीनां वृक ईशत।
माश्वानां भद्रे तस्करो मा नृणां यातुधान्यः।।७।।

परमेभिः पथिभि स्तेनो धावतु तस्करः।
परेण दत्वती रज्जुः परेणाघायुरर्षतु।।८।।

---

३ का. एते रात्रे * दृष्टारो . . तिर्नवः * संत्वाष्टा उतो * * *;
४ कख का. षष्ट्युश्च षडु च रेवत्यंचाशत्यंच न शंनिहि
मा. षष्टि च * * * पञ्चास * *।
ख म. * * सुम्न (→म्नि) यि।
घ का. . . . . . वादिनि z
५ ख का. रात्री एकादशावमा;
घ का. नृ * दुहितंर्दिवः; मु. नृ * दुहितर्न्दिवः।
द्र. घ तु. सायण; वै. तु. शौ., ह्विट्नी।
६ का. * * किर्णो * * * * दुश्चंस *।
द्र. ६क उ. ७.११.७ गघ तु.। पाठः सन्दिग्धः।
७ क-ग का. * * द्य * * मावैनां वृकैषतः साश्वानां * *;
८ ख-घ का. * दावतु * * * * परेणायुरक्षतु;
ग उ. * दव्यती *;
द्र. ग उ. दव्यती इति 'दद्वती' इत्यस्यैव लेखने प्रमादादुद्भूतमिति प्रतीयते। इदमप्यपाणिनीयम्। तु. पा. १.४.१९

अन्धं रात्रि तिष्ठधूममशीर्षाणमहिं कृणु।
हनू वृकस्य जम्भया स्तेनं द्रुपदे जहि।।६।।

त्वयि रात्रि वसामसि स्वपिष्यामसि जागृहि।
गोभ्यो नः शर्म +यच्छाश्वेभ्यः पुरुषेभ्यः।।१०।।

६.२१
(शौ.१६.४८)

अथो यानि च वस्महे यानि चान्तः +परीणहि।
तानि ते परि दद्मसि।।१।।

रात्रि मातरुषसे नः परि धेहि।
उषा नो अह्ने परि ददात्वहस्तुभ्यं विभावरि।।२।।

यत् किञ्चेदं पतयति यत् किञ्चेदं सरीसृपम्।
यत् किञ्च पद्वदासन्वत्+ तस्मात् त्वं
रात्रि पाहि नः।।३।।

---

६ का. अन्धो * तिष्टधूममशीर्षाणिमहिं *। हनो * * द्वैनं नृपते *।
ग मा. * वृक *;
ग उ. * दृपदे *।।

१० का. तै * विशामसि सपुष्यामसि जागृवि * * * यश्छादश्वेभ्यष् *
z३z
गघ उ. * * * यछाश्वेभ्यः *।।२०।।ऋ।।
मा. अ ४।। इत्यधिकम्।

६.२१.१ का. * * त मस्सहे * . . . . परेणिहि * ये * दध्मसि।
ख उ. * . . परिणहि।
ग मा. * * * दध्मसि।।

२ का. * . . . . . ना * * जुषा * अह्ना . . . .;
द्र. ख '. . . देहि' इति शोधो ध्येयः।

३ का. यदि . . . पतेयदि किंदेदं * यदि . . पद्वदासुन्वन् . . . ना।
ग उ. * . . . . पद्वतासंवत्; घ का,उ. तस्मा * . . .।।

सा पश्चात् पाहि सा पुरः सोत्तरादधरादुत।
गोपाय नो विभावरि स्तोतारस्त इह स्मसि।।४।।

ये रात्रिमनुतिष्ठन्ति ये च भूतेषु जाग्रति।
पशून् ये सर्वान् रक्षति ते न आत्मसु जाग्रतु
ते नः पशुषु जाग्रतु।।५।।

वेद वै रात्रि ते नाम घृताची नाम वा असि।
तां त्वा भरद्वाजो वेद सा नो वित्ते (ऽ)धि जागृहि।।६।।

६.२२

(१-६ = शौ.४.३४.१-८द्र.)

ब्रह्मास्य शिरो बृहदस्य पृष्ठं
वामदेव्यमुदरमोदनस्य।
छन्दांसि पक्षौ मुखमस्य सत्यं
विष्टारी यज्ञस्तपसो (ऽ)धि जातः।।१।।

अनस्थाः शुद्धाः पवनेन पूताः
शुचयः शुचीनपि यन्ति लोकान्।
विष्टारिणमोदनं ये पचन्ति
नैषां शिश्नं प्र दहति जातवेदाः।।२।।

---

४ का. * * साहि माधुरस्सत्तराद . . . . । * * * . . . स्ससि।

५ ख-ङ का. * * * जाग्रभि। * * * रक्षन्तु * नात्वमसि * * * पशुभिर् *;
ग मा. पशून * * *;

६ ख का. नामि वासि।
घ का. * * * धि जागृवि z४z

६.२२.१ क का. ब्रह्मासि * वृहदस्य *;
घ का. विष्टा * * धि जाता। मा. * * स्तमसो * *।।

२ क का. अनस्ताश् * * पूतश्;
घ का. नैहिषां सिष्णं * दहाज् *;

नैषां शिश्नं प्र दहति जातवेदाः
स्वर्गे लोके बहु स्त्रैणमेषाम्।
नैनान् यमः परि मुष्णाति रेतः।।३।।

आस्ते यम उप याति देवान्
सं गन्धर्वैर्मदति सोम्यैः।
विष्टारिणमोदनं ये पचन्ति
[+]नैनानवर्तिः सचते कुतश्चन।।४।।

रथी ह भूत्वा रथयान ईयते
पक्षी ह भूत्वापि दिवं समेति।
एष यज्ञो विततो वहिष्ठो
विष्टारी पक्वो दिवमा ससाद।।५।।

चतुरः कुम्भांश्चतुर्धा ददाति
क्षीरेण पूर्णानुदकेन दध्ना।
एतास्त्वा कुल्या उप यन्तु विश्वतः
स्वर्गे लोके स्वधया पिन्वमानाः।।६।।

---

३ का. नैहिषां सिष्णां * * * * लोक * स्त्रीणिमेषां * यसः * * रेता z

४ कख का. यास्ते * * * * * . . वैंरसदिति स्यौम्यैः;
घ का. नैननिवन्ति सजते . . . .।
मा. नैनामवर्तिः * कृतश्चन।
म. नैनामवर्xxxx।

५ का. * य भूत्वा रथयानीयते * य भूत्वाप्य * शमयति। * * * * विष्टार * . . . समाद;

६ का. चतुष्कृ (→ कु) म्भ्यांच . . * * प्रजा उदकेन *। . . . . * * यन्ति विश्वहा * * * पिन्वमाना। (मु. चतुष्कृस्त्यां . . . .)। द्र.ग तु.७ग
कख मा. * कुम्भ्यंश्च . . * * पूर्णानूदकेन *।

घृतह्रदा मधुकुलाः सूरोदकाः
क्षीरेण पूर्णा उदकेन दध्ना।
एतास्त्वा कुल्या उप यन्तु विश्वहाः
स्वर्गे लोके स्वधया मादयन्तीः।।७।।

पुण्डरीकं कुमुदं सं तनोति
विशं शालूकं शफको मुलाली।
स्वर्गे लोके स्वधया पिन्वमाना
उप मा तिष्ठन्तु पुष्करिणीः समक्ताः।।८।।

यमोदनं पचामि श्रद्दधानो
विष्टारिणं लोकजितं स्वर्गम्।
स मेमां क्षेष्ट सदमस्यमानो
विश्वरूपा कामदुघा धेनुरस्तु मे।।९।।

वृषभं सन्तं सह +सूनृतया
स्वर्गे लोकेऽमृतं दुहानम्।
ये मे पुत्राः पितरश्च सन्ति
ते त्वा विष्टारिन्नुप सर्वे सदेयुः।।१०।।

---

७ क का. * मधुकुल्या स्वरोदका; मा. घृतहृदा * *;
गघ का. . . . . नुल्या * यन्ति विश्वतस् * * * मादयन्ती।
द्र. ७ग तुल. ६ग।
८ का. * कुमिदं * * * शालूखं शपखो *। * * स्वघय * * * तिष्ठन्ति * समक्त।
गघ मा. * लोलोके * * * * * * समंक्ताः।।
९ का. . . . . पचसिमि श्रद्धधानो * लोकजितियं स्वर्ग्यं * में माक्षेष्टसद मिष्यमाणो विश्वरुपा * . . . .। उ. . . . क्षेष्ठ . .।
घ उ. * कामधुघा . . . . *।।
१० क का. * * * सौनृतया; उ * * * सुनृतया;
ख-घ का. * * * दुहाने। * * * . . . . . सति * * विष्टारिदुप * *;
ग म. * * * पितरश्चस(→ र)न्ति;
द्र. मा. १०घ "उप" इत्यतः १२घ * * विष्टारिन्न् इत्यवधिको भागो नास्ति।

य इमां यज्ञानभिविष्टितान्
यस्येमे लोकाः स्वधया समक्ताः।
ये मे पौत्रा उत ये पितामहा-
स्तेभ्यो विष्टारिन्नमृतानि धुक्ष्व।।११।।

यदि पृथिवीं यद्यन्तरिक्षं
यदि दिवं देवता वा जगन्थ।
ये मे प्रपौत्राः प्रपितामहाश्च
ते त्वा विष्टारिन्ननु प्र ज्ञेषुरत्र।।१२।।

स्वर्गे लोके अप्सरस एनं
जाया भूत्वोप शेरते।
विष्टारिणमोदनं ये पचन्त्यस्मिँल्
लोके दक्षिणया परिष्कृतम्।।१३।।

६.२३

निर्णुदैनां प्र णुदैनां स्वां निपतनादधि।
विभ्रंशमस्यै कृण्मो वि गृहैर्भ्रंशतामसौ।।१।।

---

११ कख का. * इमानि . . . . भिविष्ठतानि . . . . . स्वस्वधया *
ख म. . . . . . * * सामक्ताः।
घ का. * * विष्ठारं नमृतानि * z

१२ क का. यत् पृथिवीयं . . . .;
ग का. * * * । . . . . . तेभ्यो . . . . . ज्ञेषुतत्र;

१३ क उ. * * प्सरस *;
ग का. . . . . . . न्त्यस्मिन्;
म. . . . . . पचंत्यस्मिल्;
मा. . . . . . . पचन्त्यस्मि;
घ का. * दक्षिणायाष् * ;

६.२३.१ का. निम्रुदैनां स्वान्यपतनादधि बिभ्रंशमस्ये कृण्वो * गृही . . . मसु;
ख मा. विभ्रंसमस्यै *;
घ उ. * * भ्रंसतामसौ।।

अपाञ्चं पतिमा कुर्वधराची स्त्रियं नय।
अतीमां दश पर्वतानतीमा नाव्या दश।।२।।

अधराचीमवाचीमथो कुशलां दिशम्।
विभ्रंशमस्यै कृण्मस्तेनैनां प्र दहामसि।।३।।

आज निरज बिलं बिलादरण्यमा कुर्व-
रण्यादरणं जनम्।
मृगाँ अनु प्र पातय वातस्यैनां शिखां कुरु।।४।।

वाताग्रे अस्या हृदयं मनो रेष्मणि दध्मसि।
विभ्रंशमस्यै कृण्मो विद्धंसमासकुन्दुमे।।५।।

सर्वमनु परि प्लवतामन्तरा द्यावापृथिवी उभे।
यथानवधृता चराद् वृशतूलमिवोपरि।।६।।

अशमस्यै वातो वात्वशं तपतु सूर्यः।
अथो यदन्नमश्नाति तदस्यै विषवत्तरम्।।७।।

पै.२.५८.३　सिंहस्ते अस्तु चक्षुषे [व्याघ्रः परिष्वञ्जने।
अग्निर्वामिस्त्वन्तरा यथा वां न सहासति]।।८।।

---

२ कख　का. अपांचं प्रतिमा कुर्व्यधराचीयं * *।
गघ　उ. . . . . . . . . . . पर्वतानतीमानाद्वादश।।

३　का. . . . चीमपाचीमतो कुलशलां भिषं बिभ्रंशमस्यै कृण्वस्तेनैनं * तिमामसि।
ख　उ. . . . कुशलान् *।

४ कख　का. . . . निरुज * बिलादर्ण्यामा . .;
घङ　का. मृगां * * * वातस्यैना * *।
घ　मा. मृगां * * *; म. मृगाङ् * * *;

५　का. * यस्सा * * रेष्वनु *। बिभ्रंशमस्यै कृण्वो . . . समासकुण्डसे।
ग　मा. विभ्रंसमस्यै *;

६ क　का. शर्वमनु . . . .;
गघ　का. यथानवध्रिदान्तराद् विशतूलमिवोपरि।
द्र.　६गघ　< यथा ऽनवधुता* चराद् *बुसतूलमिवोपरि?

७ ख　का. . . . तदति *;
घ　का. ततस्सी विषुवत्तरं।

८　का. सिंहस्तेस्तु चक्षुष इत्येका।
उ. सिंहस्ते अस्तु चक्षुष इत्येका।

एष वामग्निरन्तरा स विष्वञ्चौ व्यस्यतु ।
यथा वां न सहासत्युत्तरस्मिंश्चनायुषि । ।९ । ।

उत् पातय शिमिदावति प्र पातय शिमिदावति ।
इमौ व्यस्य दम्पती पक्वं मांसमिवाशिना । ।१० । ।

मेयमस्मिन् पतौ रंस्त मोस्मिंछयने स्वे ।
जहातु वचनं स्वमहिर्जीर्णामिव त्वचम् । ।११ । ।

यथा मृताश्च जीवाश्चास्मिल्लोके+ व्योकसः ।
एवेमौ दम्पती स्तामस्मिल्लोके व्योकसौ । ।१२ । ।

इति षष्ठकाण्डे चतुर्थोऽनुवाकः ।

इति षष्ठो नवर्चकाण्डः समाप्तः ।

---

९ का. * वामग्निमन्तरा । * विष्वंचौ * * * * सामन्त्युत्तरस्त्योश्चनायुषी ।
१० क का. * * शि (→ सि) मिदावति । मा. * * सिमिदावति;
ख का. नास्ति ।
गघ का. * . . . . दम्पतीष् * . . . . . वाशिनां;
द्र. घ < मांसमिवासिना?
११ का. मेहमस्मिन् * * मोस्स्यो शयने * । जहति वसनोश्चमहिर्जी .;
१२ का. * . . . जीवांश्चास्मिंन् लोके * एवेसौ * स्तामस्मिंन् लोके * z
ग उ. . . . . स्मिल्लोके * ।
घ उ. . . . . स्मिल्लोके * । ।
काण्डिकान्ते का. पिताष्पितरौ तुष्टार्मातार्मातामहास्तेनब्रह्मणास्तेनछन्दसास्स्वर्गोलोकास्स्वर्गस्यलो कर्गमयते य इवं वेद z अनु ५ zz इति श्राद्धब्रह्मणम् zz ओं अस्मिंन्लोकेव्योकसौ zz इत्यथर्वणि पैप्पलादशाखायां षष्ठकाण्डः zz
मा. । ।२३ । ।ऋ । । नवर्च्चकाण्डः । । । ।
म. २३ । ।ऋ । ।अ ४ । । नवर्च्चकाण्डः । । । ।

# सप्तमः काण्डः

## ७.१
## (शौ.५.१४)

शौ.१ सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन् नसा।
दिप्सौषधे त्वं दिप्सन्तं प्रति कृत्याकृतो दह।।१।।

२ प्रति दह यातुधानान् प्रति कृत्याकृतो दह।
अथो यो अस्मान्' दिप्सति तमु त्वं जह्योषधे।।२।।

८ अग्ने पृतनाषाट् पृतनाः सहस्व।
प्रतिकृत्यां कृत्याकृते प्रतिहरणेन हरामसि।।३।।

१२ इष्वा ऋजीयः पततु द्यावापृथिवी तत् सुतत्।
तत् तं मृग इव विध्यतु कृत्या कृत्याकृतं कृता।।४।।

---

काण्डारम्भे का. अथसप्तमः ओँ नमोनारायणाय z ओँ नमोज्वालाभगवत्यैः ओँ नमस्तिलोतमायैः zz ओँ

१ कख का. * त्वांनविन्दत् ......
मा. * त्वान्वविन्द * त्वाखनं *।
म. .... त्वाखनं *।
ग का. दिप्सोषगे * *; .....।
घ मा. * * दहि।

२ कख का. नास्ति।
गघ का. * * स्मान् ......।
मा. * * अस्मां .....।
म. * * ऽस्मां .....।

३ ख का. पृतना *;
घ मा. * ह्मसि।।

४ कख का. याष्क्वा हीय पततु * * *। उत् * मृगम् * विद्धत् कृत्ये * *।

द्रः. शौ.१०.१.५ अघमस्त्वघकृते शपथाः शपथीव्ने।
प्रत्यक् प्रतिप्रवर्तय यश्चकार तमृच्छतु⁺।।५।।

पै.२.३८.३ यस्त्वा कृत्ये [प्रतिघाय विद्वाँ अविदुषो गृहम्।
पुनस्त्वा तस्मा आ दध्मो यथा कृत्याकृतं हनत्]।।६।।

४ पुनः कृत्यां कृत्याकृते हस्तगृह्य परा णय।
समक्षमस्मा आ दध्मो यथा कृत्याकृतं हनत्।।७।।

१० पुत्र इव पितरं गच्छ⁺ स्वज इवाभिष्ठितो दश।
तन्तुरिवावव्ययन्नीहि कृत्ये कृत्याकृतं कृता।।८।।

११ उदेणीव वारिण्यभिस्कन्दं मृगीव।
कृत्या कर्तारमृच्छतु⁺।।९।।

---

५ कख का. * * * * शपथिञ्चिने।
म. अघ(← य)म् . . . . . .।
गघ का. प्रत्यन् प्रतिप्रहिण्वासि . . . . तमश्छतु।
मा. * * शश्चकार तमृछतु।
म. * * . . . . . तमृछतु।
६ का. यस्त्वा कृत्येत्येका।
मा. यस्त्वा कृत्या इत्येका।।
म. यस्त्वा कृत्य इत्येका।।
पै.२.३८.३ द्रः।

७ कख का. * * कृत्यांकृते प्रतिहरणं न हरामसि . . . .
गघ का. . . . मस्मिन्ना * * * हनः।
म. * * * * * हिनत्।

८ कख का. * * * गश्छ स्वदैवाभिछतो *।
उ. * * * गछ;
गघ का. * इवाव्ययंनिदि * * कृताः।
म. * इवाव्ययंनीहि * * *।

९ कख का. उदेनैय वारुण्य भिक्रन्दं मृगैव।
ग का. * . . . . मृश्छतु।
उ. * . . . . मृछतु।

३ रिश्यस्येव परीशासं' परिमाय परि त्वचः।
दुहर्दि चक्षुषे कृत्यां ग्रीवासु प्रति मुञ्चतु।।१०।।

द्रः ७ या कृत्ये देवकृता या वा मनुष्यजा असि।
तां त्वा प्रति प्र हिण्मसि प्रतीचीनेन ब्रह्मणा।।११।।

६ यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने।
तामु तस्मै नयामस्यश्वमिवाश्वामिधान्या।।१२।।

## ७.२
## (शौ.५.२३)

ओत्ते मे द्यावापृथिवी ओत्ता देवी सरस्वती।
ओत्तौ म इन्द्रश्चाग्निश्च क्रिमिं जम्भयतामिमम्।।१।।

अस्येन्द्र कुमारस्य क्रिमिं धनपते जहि।
हता विश्वा अरातयो ऽनेन वचसा मम।।२।।

योऽक्षौ परिसर्पति यो नासे परिसर्पति।
दतां यो मध्यं गच्छति' तं क्रिमिं जम्भयामसि।।३।।

---

१० कख का. हृष्यस्यैव परीषासं * * त्वच।
क उ. * परिशासं;
गघ का. द्रुहार्दे चष्कृषे * * प्र मुञ्चत।
ग मा. दुहार्दे * *;
११ ख-घ का. * * * सि * * प्रत्यङ् * * प्रतीचीनयन * *।
१२ कख का. यद * दि वास्मानकृत्यां * *।
* * * नयामस्स्याश्वम् . . z१z
१. कख का. ओषते * * ओकता * *।
गघ का. ओकतो . . . . कृर्मिं * ।
२ कख का. यस्येन्द्र * कृमिं *।
ख उ. क्रिमिन् * *।
गघ का. * * रातयो ग्रेण * मिमा।
३ कख का. योक्षी * ये नासी *।
मा. योक्षी . . . . . . .।
गघ का. नतां * * गश्छमि * कृर्मिं *।
उ. * * * गछति . . . . . .।।

विरूपौ द्वौ सरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ।
बभ्रुश्च बभ्रुकर्णश्च गृध्राः कोकाश्च ते हताः।।४।।

ये क्रिमयः शितिकक्षा ये कृष्णाः शितिबाहवः।
ये के च विश्वरूपास्तान् क्रिमीन् जम्भयामसि।।५।।

पै.२.१४.२कख यो द्विशीर्षा चतुरक्षः क्रिमिः शारङ्गो अर्जुनः।
शौ.२.३२.२गघ शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः+।।६।।

शौ.६ उदसौ सूर्यो अगाद् विश्वदृष्टो अदृष्टहा।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन्।।७।।

७ येवाषासः कस्कषासो ध्वृक्षणासः शिपविलवः।
दृष्टश्च हन्यतां कृमिरदृष्टश्चोत हन्यताम्।।८।।

---

४ कख का. * * सुरूपौ * कृष्यौ द्वौ * *।
मा. * * सरोपौ * * * * दौ।
घ का. गृध्रष् . . . . . . . ।
५ कख का. * * सितवक्षा * * सित . . . ।
घ का. * क्रिमीञ् * ।
६ कख का. * द्विशीर्षश् * * चर्ङ्गो * ।
मा. * द्विषीर्षा * * . . . . . ऽर्जुनः।
गघ का. . . . रप * यश्छिरः।
मा. पृष्ठी . . . * * यत् श्चिरः।
म. * पृष्ठी . . . * * यत् शिरः।
७ कख का. तदसौ * * * अदृंहा।
म. . . . ऽगाद् * * ।
गघ का. दृष्टांस्य घ्निनदृष्टं च * * प्रमृणं *;
८ कख का. यवायवाखासष्कष्किश्यामो धुक्षासश्चपरिवृक्णवः;
मा. * * ध्वृनासः * ।

८ हतो येवाषो हतः शिपविर्हतो गङ्गणिर्वां उत।
हता विश्वा अरातय उग्रेण वचसा मम।।९।।

१३ सर्वेषां च क्रिमीणां सर्वासां च क्रिमीणां।
भिनद्म्यश्विना शिरो दहाम्यग्निना मुखम्।।१०।।

७.३

तिग्मेभिरग्ने अर्चिभिः शुक्रेण देव शोचिषा।
आमादो नि वह त्वमन्यमासनि कृण्वताम्।।१।।

शोचिषाग्ने अर्चिषा च निर्दहेतो अघायतः[+]।
सख्यमावं कृण्महे त्वं घामाद उपशंभुवम्।।२।।

निरामादो नयामसि निष्क्रव्यादो गृहेभ्यः।
सस्यादो नाम ये देव ते अग्ने मा दभन् त्वाम्।।३।।

---

९ कख का. हितो यवाखो हतश्चपविर् हतो षङ्गणर्वां *।
मा. * येवासो * शिपविहतःशिपविर् * गङ्गनिवाङ् त।
म. . . . . . . . गङ्गनिवांङ् *।
गघ का. * * रातय अनेन * *।
घ मा. * वसा *।।
१० क मा. * * क्रिमिणां
गघ का. . . . . . . म्यश्मिना . . . Z२Z
मा. भिनद्मश्विना * ददाम्य . . . . . *।।२।।
ग म. छि (→ भि) नद्मूयश्विना *;
७.३.१ क का. . . . . . . रग्निर् *;
उ. . . . . . . ऽर्च्चिभिः;
घ का. . . . . . . . . . मासुनि *।
२ कख का. * * * अघायवः।
उ. * ऽर्च्चिषा . . . . ऽघायतः।
गघ का. . . . . . . मासं * * चमामादुपशम्भुवं।
३ कख का. * ननयामसि . . निष्क्रव्याघो *।
गघ का. सम्यादो * * * * * * रभन्तां।

आमादश्च क्रव्यादश्च सस्यादश्चोभयान् सह।
प्रजां ये चक्रिरे भागं तानितो निर्णयामसि।।४।।

य आमेष्वरमन्त न पक्वमुपदादिषु।
ते यन्तु सर्वे संभूयान्यत्रेतो ऽघायवः।।५।।

य एनस्वी दुष्कृतकृत् किल्बिषकृत् साध्यः।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः।।६।।

अव रेणुमव रजो नेनिजे हस्त्यं मलम्।
धाता नो भद्रया नेषत् स नो गोपायतु प्रजाम्।।७।।

कृण्वेऽहं रोदसी वर्म स्याम सवितुः सवे।
माता नो भद्रया भूमिर्द्यौश्चास्मान् पात्वंहसः।।८।।

यदसुराणामहन्यस्मान् पापा उपेथन।
देवानां पयश्च दैव्यमापः शुन्धन्तु मामिमाः।।९।।

---

४ का. . . . क्रव्याद सश्चादस्योभयां *। * * * * तामितोनिर्नयामसि।

५ का. यामेष्वरमंत म पक्वमुतदादृषु। * * * ससम्भूया . . . . .।

६ कख का. येनसी दुष्कृतकृत किल्विषकृत साध्य।
ख मा. * * दुष्कृतंकृत्;
गघ का. . . . . स्त्वान् * * यन्तु * *;
ग मा. . . . . . स्तान * *;

७ कख का. * रेणसर्व * नेनजं हस्तिं बलं।
ख मा. नेनिये हस्तियं *।

८ क का, मा. * हं * *; . . . . .
गघ का, मा. * * * भूमिद्यौश्चा . . . . ।।
द्र. म. कीटदष्टम्।

९ कख का. . . . तमेधिनः।
मा. . . . . . महंन्य . . . ।
गघ का. * पश्य दैव्यमापश् * मामिमां।

ऋ.२.३३.१　आ ते पितर्मरुतां सुम्नमेमि
मा नः सूर्यस्य संदृशो युवथाः।
अभि नो वीरोऽर्वतीः क्षमेत
प्र जयामहै रुद्र प्रजया।।१०।।

यो वृद्धं हन्ति यो गर्भे अन्त-
र्यो जातं जनितव्यं च पूरुषम्।
तस्मा ऋध्यासं हविषाहमद्य
स नः प्रजां जरदष्टिं कृणोतु।।११।।

७.४

(शौ.१९.१३)

इन्द्रस्य बाहू स्थविरौ वृषाणौ
चित्रा इमा वृषभौ पारयिष्णू।
तौ *योक्ष्ये प्रथमौ योग आगते
याभ्यां जितमसुराणां स्वर्यत्।।१।।

---

१०　कख　का. या * पितुर्म . . . * * * युवथा।
मा. * * पितर . . . . .।
गघ　का. * * * र्वति क्षमेततूप्र जायामहि * *;
घ　मा. * * * र्वतीः;
११　का. यो गर्भे अन्तर्यो वृध्रे। * यजू * * * पौरुषं * हृयासं . . .
मध्य . . . zz३zz
७.४.१.　कख　का. इधसू * * *। * यमा * *।
मा. * * * * * * * पारयिष्णु।
म. * * * * * यमा * पारयिष्णु।
गघ　का. त योक्षे प्रथम योगा गते * चतमसुराणा *।
मा. * योक्षियें * * * जाभ्यां . . . .।।
म. * योक्षिये . . . . . . . . . . . . . . . . . .।।

आशुः शिशानो वृषभो न भीमो
घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनो ऽनिमिष एकवीरः
शतं सेना जयतु साकमिन्द्रः।।२।।

संक्रन्दनेनानिमिषेण जिष्णुना-
योध्येन दुश्च्यवनेन धृष्णुना।
तदिन्द्रेण जयत तत् सहध्वं
युधो नर इषुहस्तेन वृष्णा।।३।।

स इषुहस्तैः स निषङ्गिभिर्वशी
संस्रष्टा युध इन्द्रो गणेन।
संसृष्टजित् सोमपा बाहुश-
र्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्तात्।।४।।

---

२ कख का. . . . क्षोभनश्च . . . .;
उ. आसुः . . . . . . ।
गघ का. सङ्क्रन्दनो * * * * अजयत् . . . . .;
मा. सक्रन्दनो . . . . . ।।
३ कख का. सङ्क्रन्दनेना . . . . ।
ख मा. * दुश्चवनेन धिष्णुना।
म. * * धिष्णुना।
घ का. * * * वृष्ण्या;
४ कख का. * * * नकंक्रिभिर् . . संसृष्य अधि * * । * * बाहोशदू (← शछू) * . . . . रस्ता। औं ऊर्ध्वधन्या प्रतिहिताभिरस्या;
मा. मन्त्रान्ते श्रीः इति। म. मन्त्रान्ते काण्डिकाभागलक्षणम्।

बलविज्ञायः स्थविरः प्रवीरः
सहस्वान् वाजी सहमान उग्रः।
अभिवीरो +अभिषत्वा सहोजिज्
जैत्रायेन्द्र रथमा तिष्ठ गोविदम्।।५।।

इमं वीरमनु हर्षध्वमुग्र-
मिन्द्रं सत्वानो अनु सं रभध्वम्।
ग्रामजितं गोजितं वज्रबाहुं
जयन्तमज्मः प्रमृणन्तमोजसा।।६।।

अभि गोत्राणि सहसा गाहमानो
ऽदाय उग्रः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाडयोध्यो
ऽस्माकं सेना अवतु प्र युत्सु।।७।।

---

५ कख का. * * * * * सहसान *।
मा. वलविज्ञाय . . . . . .।
गघ का. * अभिस्सत्वा * जैत्रायै आ रथमा * कोविदं।
उ. * ऽभिषत्वा सोधिजिज् . . . . . . .।
६ क का. * . . . . . हर्षाध्व -; ख उ. * * ऽनु * *।
घ का. . . . . . मज्मा . . . . .।
मा. . . . . . . प्रमृणंतमोजसा।।
७ ख का. मदायुरुग्राश्चतमत्सुरिन्द्रः।
गघ का. दुश्श्यवनष् . . स्साकं . . . . .।
मा. दुश्चवनः * * * * * यत्सु।
म. . . . . . . अस्माकं * * * यत्सु।

बृहस्पते परि दीया रथेन
रक्षोहामित्राँ अपबाधमानः।
प्रभञ्जञ्छत्रून प्रमृणन्नमित्रा-
नस्माकमेध्यावता तनूनाम्।।८।।

इन्द्र आसां नेता बृहस्पति-
र्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां
जयन्तीनां मरुतो यन्तु मध्ये।।९।।

इन्द्रस्य वृष्णो वरुणस्य राज्ञ
आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां
घोषो देवानां जयतामुदस्थात्।।१०।।

अस्माकमिन्द्रः समृतेषु ध्वजे-
ष्वस्माकं य इषवस्ता जयन्तु।
अस्माकं वीरा उत्तरे भव-
न्त्वस्मान् देवासोऽवता हवेषु।।११।।

---

८ कख का. बृहस्पती * * * . . . अपबाधमानाः।
उ. * * * * रक्षोहामित्रानप . . . ।
गघ का. प्रभञ्जं शतृन् (मु. शत्रून्) प्रमृगंनमित्रानस्माकंमेध्येविता *।
मा. प्रभञ्जं . . . . प्रमृणंन . . .।।
म. * प्रमृणंन . . . .।।

९ कख का. * एषां नयता * दक्षिणो * * * *;
ग म. . . . . . मभिभुञ्जतीनां;
घ मा. * * जन्तु *।।

१० क का. * * मरुतस्य *;
ख मा. * * श्रद्ध *।
घ का. * * जयतांमुदस्ताम्;

११ ख-घ का. . . . . या * * *। * वीर * भवत्वस्मां * वता * z४z

७.५

वैश्वानरादरोचत जातो हिरण्ययो मणिः।
तमाभरद्बृहस्पतिः कश्यपो वीर्याय कम्।।१।।

बृहस्पतिस्तमकृणोन् मणिं वैश्वानरं सहः।
सप्तर्षयो बलाय कं सं दधुष्ट्वा वयोधसः।।२।।

विश्वे देवास्त इन्द्रियं सप्तर्षयश्च सं दधुः।
जातो हिरण्ययो मणिरग्नेर्वैश्वानरादधि।।३।।

अश्वत्थो जातः प्रथमो ऽग्रेः प्रियतमा तनूः।
वैश्वानरस्य सृष्ट्या कृत्यादूषिः कृतो मणिः।।४।।

कृत्यादूषिं त्वाविदं कृत्यादूषिं भरामि त्वा।
कृत्यादूषिं कृणोमि त्वा कृत्यादूषिं वयोधसम्।।५।।

पतत्री पक्षी बलवान् कृत्यादूषिः सपत्नहा।
नितत्निर्विश्वभेषज उग्र आपतिको मणिः।।६।।

पतत्री ते बलाय कं नितत्निर्भेषजाय ते।
जातो हिरण्ययो मणिरप रक्षांसि सेधतु।।७।।

---

७.५.१　क　का. वैश्वनरादरोचत;
　　घ　का. कस्यपो * *;
२　कख　का. बृहस्पतंस्तमकृणो * * सह;
३　क　का * देवास्त्वि . . . ;
४　कख　का. अश्वथो * * ग्रेष् * *;
　　　म. * * तनु (→ नू): ।
　　ग　मा. * पृष्ट्या ।
　　　म. * सृष्ट्या ।
५　ख　का. * भरासि *;
द्र.　५　मा. 'कृत्वादूषिं' इत्येव पाठः।
६　ख-घ　का. * सपूलहा नितत्निविश्व . . . उग्रष्पतिको *;
७　ख　का. नितत्निर्भेषजाय * ।

देवो मणिः सपत्नहा रक्षोहामीवचातनः।
हिरण्ययोनिरंशुमान् कश्यपेनाभृतं सहः।।८।।

वैश्वानरं तेजनमेकमाहुरग्रेर्योनिः सह चन्द्रेण जातम्।
गयस्फानः प्रतरणो वयोधाः
कृत्यादूषिर्बलगहास्युग्रः।।९।।

यस्येदं भूम्यामधि निक्रान्तं पांसुरे पदम्।
मृजानस्तन्वो' यद्रपस्तस्य त्राहि तनू अधि।।१०।।

दूष्यास्त्वावधं भयं देवस्य सवितुः सवे।
जीवातवे भरामसि मह्या अरिष्टतातये।।११।।

आच्छेदनः प्रच्छेदनो द्विषतस्तपनो मणिः।
शत्रूञ्जयः सपत्नहा द्विषन्तमप बाधताम्।।१२।।

---

८ गघ का. हिरण्मयंनरंश्मान . . . . सह।

९ क का. * तेनमेकंमाहु;
ग का. * * वधोधष्;
मा. रायस्फान * *।

१० ख का. निष्क्रान्तं * *।
उ. * पांशुरे *।
गघ का. मृदानस्तन्नो यद्रूपस् * * * वधी।
ग उ. मृजानस्तनवो . . . .;

११ क का. दूषा त्वाविदं वयं;
घ उ. मज्या *।।

१२ क का. आश्छेदनः प्रत्येदनो;
मा. आछेदनः प्रछेदनो;

७.६

सत्यस्य स्थूणा पृथिवीं दाधार-
र्तेन देवा अमृतमन्वविन्दन्।
ध्रुवेण त्वा हविषा धारया-
म्यभि तद् द्यावापृथिवी गृणीताम्।।१।।

येभिर्होमैर्विश्वकर्मा
दाधारेमां पृथिवीं मातरं नः।
तेभिष्ट्वा होमैरिह धारया-
म्यृतं सत्यमनु चरन्तु होमाः।।२।।

इह ध्रियध्वं धरुणे पृथिव्या
उशत्या मातुः सुभगाया उपस्थे।
अपराणुत्ता महसा मोदमाना
अस्मिन् वास्तौ सुप्रजसो भवाथ।।३।।

सुप्रजसो महसा मोदमाना
वर्ष्मन् पृथिव्या उपरि श्रयध्वम्।
अस्यै शालायै शर्म यच्छन्तु देवा
धाराभिरेनां पृथिवी पिपर्तु।।४।।

---

७.६.१ कख का. पत्यस्य * पृथिवी * ऋतेन * अमृताम . . .। ध्रुवेन * हहविषा * * * * घृणीतां;
घ उ. . . . त * *।।
२ ख-घ का. दधारेमां * * *। . . . धारयामृचं . . . * *;
३ गघ का. अपराणुत्वा सहसा * * * सुप्रजासौ *।
४ क का. सुप्रजासौ सहसा *;
ख उ. वरिष्मन् * * *।
ग मा. . . . . . . . यछ *; म . . . . . . यछन्तु *,

इमां शालां श्रेष्ठतमां वसूना-
मरिष्टवीरा अभि सं चरेम।
दृढा अस्या उपमितो भवन्तु
स्थिरा वीरा उपसदो भवन्तु।।५।।

शौ.३.१२.४ इमां शालां सविता वायुरग्नि-
र्बृहस्पतिर्नि मिनोतु प्रजानन्।
उक्षन्तूध्ना मरुतो घृतेन
सोमो नो राजा नि कृषिं दधातु।।६।।

मानस्य पत्नि हविषो जुषस्व
तीव्रान्तस्य बहुलमध्यमस्य।
आ त्वा शिशुर्वास्यतामा कुमार
आ वास्यन्तां धेनवो नित्यवत्साः।।७।।

दृढास्ते स्थूणा भवन्तु भूम्यामधि
दृढाः पक्षासस्तव देवि शाले।
स्थिरवीरानमित्रा न एहि
शर्म नो यच्छ' द्विपदे चतुष्पदे।।८।।

---

५ क-ग का. ** श्रेष्ठ्यतमं वसानामरिष्टवीराममभि सञ् *। * त(→उ)पसितो *;
ख उ. . . . . . . . . . . सञ् * ।
६ का. *** वायुरिन्द्रो वृहस्पति न्निम्नोतु * ।
उक्षंतूर्णा ** भगो *** कृषं ददातु।
ग म. उक्षन्तू(द्ना →)ध्ना ** ; .
घ मा. *** नि कृषिन् * ।।
७ गघ का. ** शशिर्वाध्यतामा ** वाभ्यन्तां **;
मा. . . . नित्यवछाः।।
द्र. < वाश्यताम् / वाश्यन्तां।
८ ख-घ का. ** तवि धेवि * ।
स्थिरवीराअन्नसिता * एधि। ** यश्छ **;
घ उ. ** यछ **

शाला देवी गार्हपत्याय चाक्लृपे
तृणं वसाना जगते सुशेवा* ।
स्थिराङ्गां त्वा स्थिरपूरुषां मानस्य पत्नि
स्थिरा त्वा वीरा अभि संचरेम । ।९ । ।

ऋ.७.५४.१ वास्तोष्पते प्रति जानीह्यस्मान्
कौ. ४३.१३ स्वावेशो अनमीवो न एधि ।
यत्त्वेमहे प्रति नस्तज् जुषस्व
चतुष्पदो द्विपद आ वेशयेह । ।१० । ।

७.७

दर्भो अग्र ओषधीनां शतकाण्डो अजायत ।
स सहस्रवीर्यः परि णः पातु विश्वतः । ।१ । ।

---

९ कख का. * * * चक्लिपे तृणं * जगती सुसेवा ।
क मा. * * * चाकपे;
ख मा, म. * * * सुसेवा ।
ग का. स्थिराङ्गं * स्थिरपौरुषानस्य पत्निः;
मा स्थिरांगां * स्थिरपुरुषां * *;
म स्थिरांगां * * * *;
१० ख का. द्वावेशो * * * ।
उ. * ऽनमीवो * * ।
गघ का. यन्त्वेमहे पृत * * * * द्विपदा
वेश(शृ?)एह z१z
ग मा. यत्वेमेह * न सज् *; म. यत्वेमहे * * * *;
७.७.१ क का. दर्भोग्र *;
ख उ. * ऽजायत ।

यथा दर्भो जायमानस्त्वचं भिनत्ति भूम्याः।
एवा स भिद्यतां जनो यो नः पापं चिकित्सति।।२।।

अप नाडमप कृत्यामप रक्षः सदान्वाः।
अमीवाश्चातयामसि सर्वाश्च यातुधान्यः।।३।।

अस्ति वै निवत उद्वनं न वै सर्वमनुप्रवम्।
असि त्वं तस्य दूषणो यो नः पापं चिकित्सति।।४।।

परि सायं परि प्रातः परि मध्यंदिनं परि।
दर्भो हिरण्यहस्तघ्नः परि णः पातु विश्वतः।।५।।

गिरौ जातः स्वरहासि+ साकं सोमेन बभ्रुणा।
मापापकृत्वनः शिषो मा पाकः पुरुषो रिषत्।।६।।

---

२ कख का. * भर्भो अजायमानस् * भिनन्त्य भूम्यां।
ग का. * स्य * *;
मा. * म * *;
घ मा. योनः इति नष्टम्

३ कख का. * नात्रमप * * रक्ष स्यधान्वा।
द्र. गघ का. 'तयामसि सर्व' इति नष्टम्।
घ का . . . . . . यातुधान्यः(← नः);

४ कख का. अस्थि * * उद्वलम् * * सर्वमनुप्लवं।
ख मा. * * * द्वनं,

५ ख का,म. * मध्यन्दिनं * ।
ग का. गर्भो * ।

६ क का. * * स्वरासि।
उ. * * स्वरहासु।
ग का. . . . . . . . शिखो;
द्र. का. ६ घ 'षत्' इत्यतः ७घ 'परि' इत्यवधिको।
भागो नष्टः।

शौ.२.७.३　दिवो मूलमवततं पृथिव्यामोत आहितः।
दर्भः सहस्रवीर्यः परि णः पातु विश्वतः।।७।।

सहस्रकाण्डस्तविषस्तीक्ष्णवल्शो विषासहिः।
दर्भेण सर्वा रक्षांस्यमीवाश्चाप दहामसि।।८।।

अपदग्धं +दुःष्वप्न्यमपदग्धा अरातयः।
सर्वाश्च यातुधान्यः।।९।।

मा त्वा दभन्यातुधाना मा ब्रध्नः शकुनिः पतन्।
दर्भो राजा समुद्रियः परि णः पातु विश्वतः।।१०।।

७.८

यो नः पापेन वचसा घोषतो दुरुदब्रुवत्।
+आराच्छतमप्राप्यास्मानप तद् यातु सव्यतः।।१।।

---

७　　का. णष्पातु विद्वतः z द्र. आद्यो भागो नष्टः।
क　उ. * मूळमव * ;
ख　मा. अन्तिममक्षरं नष्टम्।
८ ख-घ　का. * विषासहि। गर्भेण सर्पा रक्षांस्यसीवाश्चापधामसि।
ख　उ. तीक्ष्णवल्लिशो * ।
घ　मा. . . . श्चाप हामसि।।
९ क　का. अपदुग्धं दुष्वप्रि अपदग्धा * सर्वश्च * ;
ग　उ. * दुःष्वप्रियमपदग्धा *।
१० कख　का. * * दभं यातुधानां सा सा ध्रध्निश्शकुनिष्पयम्।
क　मा. -न्या- इति नष्टम्।
७.८.१ ख　का. * दृक्तवृवत्।
गघ　का. आराश्छपतमप्रास्मामुप नद् * सर्वतः।
उ. आरात् शप्तमप्रा . . . . . . . . ।।

यन्नः शपादरणो यत् सपत्नः श्वश्रूर्वा +यच्छ्वशुरो वा शपाति
ज्यायसः शपथान् वयं यवेन यावयामसि। ।२। ।

यान् समस्यन् ते शपथान् वाकृक्षम्यानृत्वियामधि।
यवं त्वं बिभ्रद् बाह्वोः पूर्वः प्रति शृणीहि तान्। ।३। ।

ऋजुकेशो यवो बभ्रूर्मघवा नो(ऽ)नुमाद्यः।
हिरण्यधन्वा शपथानुपेजतु। ।४। ।

त्वां पीत्वेन्द्रो वृत्रं शक्रो जघान वासवः।
सविषाही यवर्षभः सहस्व शपथान्यव। ।५। ।

---

२ कख का * * . . . द्वरुणो * सपत्निश् * * यश्च्छ्वशुरो * *
मा . . . . . यः * * * यः श्वसुरो * *।
म . . यः . . यः श्वशुरो * *।
गघ का. * चपथां वयि यवैनं *।
३ क म. यान * * *;
३ का. यां * * पथां वाक्षंपानृत्यामधि।
युवं तं * वाह्वो * * श्शृणीयतां।
घ मा. पूर्व * * *।
४ कख का. * * मबभ्रूर् * * नसाभ्य।
मा. * जवो * म (. . .) मा * *; द्र. कोष्ठस्थं नष्टम्।
म. * जवो * मंधमा * *।
ग का. हिरण्यधन्वां शपथांतुपे . .,
५ का. तां . . . . शक्नो *। वासव
मैषाह्यत ऋषभस्सहस्वं शपथां इव।

आराच्चरन्तु शपथा युता इतो-
जिह्वा उ दिता अरसाः सन्तु सर्वे।
नामग्राहाद् वाचो हेडादीक्षिताद्+ घोरचक्षसः
शर्म ते वर्म कृण्मसि।।६।।

अपाञ्चो यन्तु शपथा जनेनास्ता अघायुना।
येनो दुरस्यां जीवते स्वेनानागसे स ते।।७।।

परि मा पातु शपथादनृताद् दुरितादुत।
परि मा ज्यायसः शंसाद् यवो रक्षतु मा ऋषं।।८।।

अनास्तिग्मं शपथैरनतिव्याध्यं कृतम्।
बृहद् वर्म प्रति मुञ्चामि ते यवम्।।९।।

तं वयांसीव पक्षिण आ विशन्तु पतत्रिणः।
शप्तारं शपथाः पुनः।।१०।।

---

६ कख का. आराच . . * इता * जिह्वोदिता रसास् * *।
ख मा. जिह्वो उ दिता * * *।
म. ऽजिह्वा उ . . . . . .।
ग का. नामग्रांहा * हेळादीक्षिता। अघोरचक्षस।
मा. * * . . . . . दीक्षितात * ;
म. * * . . . . दीक्षितात् *,

७ ख का. दनेनास्ता घायुना।
योनो * जीवसे सेनानाकस्येषते।

८ कख का. * पातु शपथा। दनृताद् . . . . .।
ख उ. -दनृता दुरि. . . .।
घ. का. दिवो * * मिषं।
द्र. घ < रिषम्।

९ कख का. अनास्तयज्ञं . . . रनुचि . . . . *।
वृहद * * * * युवं;

१० का, तर्ध्वयायांसीव पक्षणा विशन्तु *
शपतारं * * z ३ z

७.९

(१,२ ४-१० = शौ. ५. ७. १-८)

आ नो दिश मा परि ष्ठा अराते
मा नो रक्षीर्दक्षिणां याचमानाम्।
प्र णः प्रदाता सविता च यच्छतां
नमो *वीर्त्साया असमृद्ध्यै च कृण्मः।।१।।

यमराते पुरोधत्से पुरुषं परिरापिणम्*।
नमस्ते तस्मै कृण्मो मा वर्नि मम विव्यथः।।२।।

यमद्याभिप्रयुञ्ज्महे मनसा हृदयेन च।
अराते तं नो मा *वीर्त्सीर्दिप्सन्तं परिरापिणि।।३।।

प्र णो वनिर्देवकृता दिवा नक्तं च सिध्यतु।
अरातिमनुप्रेमो वयं नमोऽस्त्वरातये।।४।।

---

७.९.१ कख का. अ * दिशं सा * * रातेर् * नोर् दक्षैर् दक्षिणा यातुमावां;
क उ. . . . ष्ट *;
गघ का. पु नः प्रजाता * * यश्छतां नसोर्वीरश्छाया समृद्ध्यै * कृण्व।
उ. * * * * * यछतां * वीछाया * * * ।।

२ कख का. * * पुरोधत्स्यै पुरुरापृणं।
उ. * * * * परिराविणं।
गघ का * * * कृणो * * * व्यथः;
उ. . . . वर्ळि * *।।

३ कख का. अनवंधाभिष्प्रयु . . . * * * । उ. . . . प्रयौज्महे . . .।
गघ का. अराती तन् वो * वोरिश्छे दिश्छन्तं परिरापृणी;
मा. * तन् * * वीछीर् * परिराविणि।।
म. * * * * वीछीर् * परिराविणि।।

४ क का. पृ . . . रातिमनुप्रेमे * * स्त्वराय्यतये।

उत नग्ना बोभुवती स्वप्नया सचसे जनम्।
अराते चित्तं *वीर्त्सन्त्याकूतिं पुरुषस्य च।।५।।

परो ऽपेह्यसमृद्धे वि ते हेतिं नयामसि।
ग-ङ अन्यत्र नास्ति　यं द्विष्मस्तं सचस्व कन्या भूत्वा स्रग्विणी
रुक्मणी दृशे।।६।।

कख, ङ अन्यत्र नास्ति　नमस्तेऽस्त्वसमृद्धे मा मां पुरोधिं कृणुथाः।
वेद त्वाहं निमीवन्तीं नितुदन्तीमराते मर्त्या मर्त्येभ्यो
अधि निर्वदन्तीम्।।७।।

मा नो वर्निं मा वाचं मा वीर्त्सीरुग्रा
इन्द्राग्नी न आ भजतां वसूनि।
सर्वे नोऽधि दिप्सन्तो ऽरातिं प्रति हर्यत।।८।।

---

५　कख　का. * नग्न आ पोभवति स्वप्नय्या सृजेसे चनं
राते चित्ति वीरिश्छिंघा . . . . . . . * *।
गघ　मा. * * वीछन्त्याकूर्ती * *।।
म. * * वीछन्त्या . . . . . ।।

६　कख　का. * मेह्यसिमृद्धे मृ ते * *।
. . . विम्व कव्या * सृग्मणी * दृशेत्;
ग　मा. * दिष्मस्तं *;

७　कख　का. * * स्तु समृद्धे * माहं * कृण्वथ।
ख　मा. मी * * *।
गघ.　का. वर्मी * नमीवन्तीं नुतदन्तीं माते
मर्त्यां ससन्त्येभ्यो * * *
मा. . . . ऽधि *।

८　कख　का. . . . वीरिश्छमुग्राव् * नां * *।
मा. * * वर्लिं (म. वर्लिं) * * * वीछीर् . . .।
गघ　का. * णो द्य दिश्छस्त अरातिं * हर्यतां।
द्र.　कख　मा. अनुसारेण कृतोऽयं पादविभागः सन्देहास्पदम्।

सवितारमनुमतिं भगं यन्तो हवामहे।
वाचं जुष्टं मधुमतीं वदानि देवानां देवहूतिषु।।६।।

यं याचामि मकुर्या जिह्वयोष्ठापिधानया।
श्रद्धा तमद्य विन्दतु दत्ता सोमेन बभ्रुणा।।१०।।

७.१०

(शौ. १६.३६)

ऐतु देवस्त्रायमाणः कुष्ठो हिमवतस्परि।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्यः।।१।।

त्रीणि ते कुष्ठ नामानि नघमारो नघारिषो
नघायं पुरुषो रिषत्।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा।।२।।

जीवला नाम ते माता जीवन्तो नाम ते पिता
मारिषा नाम ते स्वसा न(घायं पुरुषो
रिषत्। यस्मै. . .)।।३।।

---

६ क-ग का. सवदानि;
घ का. * देवदूतिषु।
ग मा. * जुष्टा * * ;
१० क का. यं वाचाम मकुर्याज्;
ग का. श्रद्ध चमद्य * दत्तास् * * z ४ ꞉
७.१०.१ का. * देवस्त्रायमाण * *
* * नाशयं . . . यातुधाव्यः;
२ क-ग मा. * * कृष्ठ * * नघायुषो नघायुं * * ।
म. * * * * * नघायुषो नघायुं * रुषत्।
घङ का. अस्मै परिब्रवीमि * * * दिवः;
३ ग का. मार्षा * * श्वशाः;

उत्तमोऽस्योषधीनामनड्वान् जगतामिव
व्याघ्रः श्वपदामिव नघायं पुरुषो रिषत्।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा।।४।।

त्रिः शाम्बुभ्यो गिरयेभ्यस्त्रिरादित्येभ्यस्परि।
त्रिर्जातो विश्वदेवेभ्यः स कुष्ठो विश्वभेषजः
साकं सोमेन तिष्ठति।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्यः।।५।।

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि।
तत्रामृतस्य चक्षणं ततः कुष्ठो ऽजायत।
[स कुष्ठो विश्वभेषजः साकं . . . यातुधान्यः]।।६।।

शौ. ५.४.४ हिरण्ययै नौरचरद्धिरण्यबन्धना दिवि।
[तत्रामृतस्य . . . . . यातुधान्यः] ।।७।।

यत्र नावः प्रभ्रंशनं यत्र हिमवतः शिरः।
तत्रामृतस्य चक्षणं ततः कुष्ठो अजायत।
स कुष्ठो विश्वभेषजः साकं सोमेन तिष्ठति।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्यः।।८।।

---

४ कख का . . . . . . मनड्वां . . .। व्याघ्रे स्वपदामिव . . . .।
अस्मै . . . दिवः; मा. 'थोदिवा' इति नास्ति।।
५ कख का. ति ष्यामिविद्यो गिर . . .
मा. * * गिरयेभ्यः स्त्रिरा . . . .।
म. * साम्बुभ्यो गिरे(←गिर)येभ्यः त्रिरा(←स्त्रिरा) . . .;
घ-ङ का. * * विश्वभेषज। * * तिष्ठसि ;
द्र. घ म. कीटदष्टम्।
च का. * * नाशयं, छ मा. . . . ।।[४]
६ कख का. * * . . . . मितौ *।
मा. ६ - ८ मन्त्रा गलिताः।
घङ का. त्वष् * जायतात्सः; म. . . . ऽजायत।।[४]
७ कग का. हिरण्ये नोनचर . . . * । स;
म. . . . दिवि।।[४]
८ क का. * नवष् परिभ्रशनं;. . . . .।
घ म. * * ऽजायत।
ङ-छ का. * कुष्ठं विश्वभेषज * * तिष्ठसि। * * नाशं;

यं त्वा वेद पूर्व ऐक्षाको यं वा त्वा कुष्ठ काश्यः।
यं शावसो यं मात्स्यस्[+] तेनासि विश्वभेषजः।।९।।

शीर्षालाकं तृतीयकं सदन्दिर्यश्च हायनः।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव।।१०।।

इति सप्तमकाण्डे द्वितीयोऽनुवाकः

७.११

शौ. ३.२१.१० ये पर्वताः सोमपृष्ठा आप उत्तानशीवरीः।
वातः पर्जन्य आदग्निस्ते क्रव्यादमशीशमन्।।१।।

शौ.२०.९६.१३ यस्ते हन्ति चराचरमुत्थास्यन्तं सरीसृपम्।
गर्भं यो दशमास्यं तमितो नाशयामसि।।२।।

यदि घ्नन्त्यप्सरसो गन्धर्वा गेह्या उत।
क्रव्यादो मूरदेविन[+]स्ताँ इतो नाशयामसि।।३।।

---

९ कख का. * * * * क्ष्वाको * * * कुष्ठि काश्च;
ख मा. ऽयं * * * कास्यः।
म. ऽयं * * * *।
ग का. अहिश्यावसो अनुसारिश्छस्;
उ. * * * माछ्यस्,
१० ख का. सदन्ती यश्च * ; मा. . . . .हाअनः।
म. सदंदिर्यश्च *।
घ का. . . . अधराञ्चं * सुवः z z ५ z अनु २ z
७.११.१ क मा. * * सोमपृष्ठाः;
ख-घ का. पउत्तानशीवरि। * पर्जन्यादग्निस् * . . . . शीशमं।
२ क का. * * हन्तु *;
३ का. यदग्निभ्यपूसरसो गन्धर्वा * *।
* मूरदेवेनस् तायितो *।
घ उ. तानितो *।।

क शौ.२०.९६.१४क यस्त ऊरू आरोहत्यसृक् ते रेहणाय कम्।
आमादः क्रव्यादो रिपूं'स्तौं इतो नाशयामसि।।४।।

शौ.१४ ख-घ　यस्ते श्रोणी 'च्यावयत्यन्तरा दम्पती शये।
योनिं यो अन्तरारेढि तमितो नाशयामसि।।५।।

शौ.१६　यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते।
प्रजां यस्ते जिघत्सति तम् [इतो नाशयामसि]।।६।।

शौ.१५ कख　यस्त्वा पत्युः प्रतीरूपो जारो भूत्वा निपद्यते।
अरायं कृण्वं पाप्मानं तमितो नाशयामसि।।७।।

हा है खर्व खलते नैगूरकर्ण तुण्डिल।
इन्द्रस्य तिग्ममायुधं तेन त्वा नाशयामसि।।८।।

---

४ कख　का . . . . स्ता उर्वारोहत्यसृक् * * *।
मा. * * ऊरु * * * रोहणाय *।
म. * * * रोहणाय *।
गघ　का. * क्रव्याधे रिपुंस् तायितो *।
मा. आमाद * * तानितो *।।
म. * * रिपुंस् तानितो *।।

५ कख　का. * * * व्यावयत्य . . . . ।
मा. * * * च्यवयंन्त्य . . . ।
म. * * * च्यावयन्त्य . . . ।
ग　का. योनी * . . . . रारेल्हि;
उ. * * ऽन्तरारेढि;

६　का.　६ग - ७ख गलितम्।

७ कख　का. नास्ति।
ग　का. रायं कण्वं *। ४.१३ मन्त्रेष्वपि उ. क्वचित् 'कृण्वं' इति।

८ कग　का. * ही * खलुते नैगुरकर्ण तुण्डिल।
इन्द्रश्च तिग्मसायुधं;

नमस्तण्डाय नमः कुसुमाय नमः प्रतिदीप्साव्ने
नमः कःस्वधेयै।
नमस्तुभ्यं निर्ऋते विश्ववारे जरेमं
धापयतां विश्वरूपा।।९।।

यावद् द्यौर्यावत् पृथिवी यावत् पर्येति सूर्यः।
तावत् त्वमुग्र गुल्गुलो परि मां पाहि विश्वतः।।१०।।

७.१२

एकराज्ञीमेकव्रतामेकस्थामेकलामिकाम्।
पाटां सपत्नचातनीं जैत्रायाच्छा[1] वदामसि।।१।।

एकराज्ञ्येकव्रत एकस्थ एकलामिके।
न त्वा सपत्नी सासाह गैरेयी च न वाह्या।।२।।

शौ.३.१८.४ उत्तराहमुत्तराभ्य उत्तरेदधराभ्यः।
अधः सपत्नी मामक्यधरेदधराभ्यः।।३।।

---

९ कख का. नमस् * * * * प्रदिष्ठाम्ने * कश्यदे
. . . जलेमं धापयेतां विश्वरूपं;
गघ मा. * स्तुभं * * जरेसन् * विश्वरूपां।।
म. * * * जरेमन् * *।।
१० क मा. * द्यौर्याव पृथिवीर्;
का * पयेति * ताव त्वमुमुग्रलुल्गुलो
परी * * * z१z
ग म ताव . . . . . . गुग्गु (→ल्गु) लो;
७.१२.१ क का. यैकराग्रीमे . . .।
गघ का. * सन्नचातनीं जैत्रायाश्छा *।
उ. * * जैत्रायाछा *।
२ कख का. यैकराज्ञी एकव्रता एकस्था *।
* * * स (→सा) सह शैरे * * *;
३ का. उत्तराहं तत्तरभ्यो . . . दधरम्यः
* * सामत्क्यधरेदधारभ्यः;

न सैन्धवस्य पुष्पस्य सूर्यो म्लापयति त्वचम्।
पाटे (ऽ)म्लातया त्वया सपत्न्या वर्च आददे।।४।।

न वै पाटे पाटेवासि सुभागंकरणीदसि।
पाटे भगस्य नो धेह्यथो मा महिषीं कृणु।।५।।

यत् पाटे अधि+ वृक्षे वातप्रवा महीयसे
पै.६.४.५ गघ शौ.५.५.३ गघ　जयन्ती प्रत्यातिष्ठन्ती सञ्जया नाम वा असि।।६।।

शौ.३.१८.२ कख　उत्तानपर्णां सुभगां सहमानां सहस्वतीम्।
+अच्छा बृहद्वदां वद पाटां सपत्नचातनीम्।।७।।

पै.२.१६.३ शौ.२.२७.४कख　पाटामिन्द्रो व्याश्नाद्धन्तवा असुरेभ्यः।
शौ.२.२७.५कख　तयाहं सपत्नीं साक्षीय महेन्द्रो +दानवाँ इव।।८।।

पाटा बिभर्त्यङ्कुशं हिरण्यवन्तमङ्किनम्।।
तेन सपत्न्या वर्च आ लुम्पामि ममेदसत्।।६।।

---

४　क　मा. * * पुष्यस्य;
　ख-घ　का. * स्नापयति त्वचाम्
　　* स्नापया * सपत्ना वर्चादधे।
५　　का. * * पाटेवहसि . . . .
　　* भगम्य * धेयथो * महिषीङ् *।
६　　का. * * अध * वातप्लवा महीयमे * *।
　　सञ्जाया * वासि।
　क　उ. * * ऽधि * ;
७　गघ　का.अश्छा वृहद्वदा * * पाटं शपत्नचातनीं;
　　उ. अछा . . . . .।।
८　　का * पाटामिव्याष्णान् हन्तवा अमुरेभ्यः।
　　तया सपत्न्यं * * दानवानिव।
　घ　मा. * दानवामिव।।
　　म. * दानवारिव।।
६　ग　मा. * सपत्ना *;
　घ　का. * लुम्पसि समेधमत्;

शौ. ३.१८.१ इमां खनाम्योषधिं वीरुधां बलवत्तमाम्।
यया सपत्नीं बाधते कृणुते केवलं पतिम्।।१०।।

७.१३

(पै.१.२६, १५. १६द्र.)

यासामारादाघोषामो वातस्येव पृथग्यतः।
तासां +श्वन्वतीनामिन्द्रो +अपि कृतच्छिरः+।।१।।

याः पुरस्तादाचरन्ति साकं सूर्यस्य रश्मिभिः।
[तासां .......]।।२।।

या वातमनुसंयन्त्यन्तरिक्षे अधो दिवः।
[तासां .......]।।३।।

यासां प्रेङ्खो दिवि बद्धो ऽन्तरिक्षे हिरण्ययः।
[तासां ......]।।४।।

यास्तल्पाननुनृत्यन्त्यन्तरिक्षे हिरण्ययान्।
[तासां .........]।।५।।

---

१० क मा. * ...... म्योषधीं;
गघ का अथा * * * * * z२z
मा. * * * * कवलं * ।।

१ का ....... दाघोषासो वातस्यै * *
* सम्वनामिन्द्र अप कृतश्छिरः ;
गघ उ. * श्मन्मतीनामिन्द्रोऽपि कृतत् शिरः।।

३ कख का . * वाचमनसव्यंन्यन्तरिक्षेद् * *;
ख म. * ऽ(→अ)धौ * ।।

४ कख का. * प्रेङ्ख्यो * वृद्धो अन्तरिक्षे * ;
मा. * * * * अन्तरिक्षे * ।।

५ का. नास्त्ययं मन्त्रः।

याः पतन्ति वातरथा उत्तानाः पादघातिनीः।
[तासां . . . . . . . .]। ।६। ।

या वृक्षं परिसर्पन्ति साच्यक्षि करिक्रतीः।
[तासां . . . . .]। ।७। ।

याश्चत्वरे संगच्छन्ते+ विकुम्भाश्चेलवासिनीः।
[तासां . . . . . . .]। ।८। ।

यासां सिकतवापिषु गृहो ऽमितो हिरण्ययः।
[तासां . . . . . . .]। ।९। ।

या आरोकैः प्रपद्यन्ते+ पुष्कैरैरिव जामयः।
[तासां . . . . . ]। ।१०। ।

या नदीः प्रतिगाहन्ते संरभ्य कन्या इव।
[तासां . . . . . .]। ।११। ।

यास्तीर्थानि विगाहन्ते ऽघ्न्याः स्वसतीरिव।
[तासां . . . . . . ]। ।१२। ।

---

६ का. * * वातरथाद् * पादघातिर्नीं;

७ का. वृक्षं * साचक्षु करिक्रति,

८ कख का. याश्चत्वारि संगश्छति . . . श्चेलनासिनी।
क मा. * * संगछन्ते;
कख म. * * संगछन्ते विकुम्बाश्चेल . . . .। ।

९ क का. यासं सित्तवामिषुर्;

१० का. * रोकैष् पपद्यन्ते पुष्कलैरिव जामय।
उ. * * प्रपद्यन्ति * * यामयः। ।

११ का. * * प्रतिगाहयन्ते * * वयः;

१२ का. यास्स्तीर्थनवगाहन्ते घ्न्या स्वशितीरिव।

याः समुद्रादुच्चरन्त्युच्चैर्घोषान् करिक्रतीः ।
[तासां . . . . . . .] । ।१३ । ।

या +गच्छन्ति जनंजनमिच्छन्तीः+ प्रयुतं बहु ।
तासां +श्वन्वतीनामिन्द्रो +अपि कृतच्छिरः+ । ।१४ । ।

७.१४

(तु. तै. स. २.३.१०.३,४)

अग्निरायुष्मान् स वनस्पतिभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु । ।१ । ।

वायुरायुष्मान् सो अन्तरिक्षेणायुष्मान् ।
[स . . . . . . . . . .] । ।२ । ।

सूर्य आयुष्मान् स दिवायुष्मान् ।
[स . . . . . . . . .] । ।३ । ।

चन्द्र आयुष्मान् स नक्षत्रैरायुष्मान्
[स . . . . . .] । ।४ । ।

सोम आयुष्मान् स ओषधीभिरायुष्मान् ।
[स. . . . . .] । ।५ । ।

---

१३ का. * . . . . . दुश्चरन्त्युश्चैर्घोषान् कनिक्रति ।
मा. * समुद्राद्दुच्च * । ।

१४ का. आगच्छन्ती . . . . नमिश्छन्तीष्प्रहितं * । * सुन्वतीमिन्द्रो अपकृतश्छिरः z ३ z

ख-घ उ. - मिछन्तीः * * । * श्मन्मतीनामिन्द्रो ऽपि कृततृशिरः । । . . .

७.१४.१ घ का. * कृनोतु ।

२ ख उ. * ऽन्तरिक्षेणायुष्मान् । ।

५ ख का. * ओषधिभि. . . . . ।

यज्ञ आयुष्मान् स दक्षिणाभिरायुष्मान्।
[स . . . . . .]।।६।।

समुद्र आयुष्मान् स नदीभिरायुष्मान्।
स मायुष्मानायुष्मन्तं कृणोतु।।७।।

ब्रह्मायुष्मत् तद् ब्रह्मचारिभिरायुष्मत्।
तन् मायुष्मदायुष्मन्तं कृणोतु।।८।।

इन्द्र आयुष्मान् स वीर्येणायुष्मान्।
स मायुष्मानायुष्मन्तं कृणोतु।।९।।

देवा आयुष्मन्तस्ते ऽमृतेनायुष्मन्तः।
ते मायुष्मन्त आयुष्मन्तं कृण्वन्तु।।१०।।

प्रजापतिरायुष्मान्।
स मायुष्मानायुष्मन्तं कृणोतु।।११।।

---

७ गघ का. नास्त्ययं भागः।

८ का. व्रह्मायुष्मात् ताद् व्रह्मचारिभिरायुष्मान्
तन्मायुष्मा आयु. . . *।

क उ. व्रह्मायुष्मन्;

द्र. का. ८=९

९ का. इन्द्रेणायुष्मान्; गघ का. नास्त्ययं भागः

द्र. का. ९=८

१० क मा. * युष्मन्तस्;

ख का, मा. * मृतेना . . . . . .।

गघ का. * षा * आयुष्मन्त कृणुत।

मा. * मा आयुष्मन्त * कृणोतु।।

११ घ का. आयुष्कृन्त * z४z

७.१५

पै.२.८५.३ द्र. दक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यतः।
पश्चादनुव्याधात् पातु सर्वस्या भवहेत्याः।।१।।

पशुना त्वं पशुपते द्विपाद्दत्वा चतुष्पदा।
आत्मन्वतीं दक्षिणां प्राणद्दत्वा प्राणिहि।।२।।

यां ददासि श्रद्दधानो दक्षिणां ब्राह्मणकृते।
सा त्वा यक्ष्मात् पारयत्वग्नेः सन्तापाद्
दिव्यस्य शोकाद्।।३।।

ददासीमां दक्षिणां मा त +आममघ्
छल्यान् यक्ष्मान् वि वृहामो वयं ते।
कर्णशूलमुपहत्या अरातिः
सर्वे यक्ष्मा उप तिष्ठन्तु साकम्।।४।।

---

७.१५.१ कख का. * सा * दक्षिणाष् * *
पश्शादनव्याधात् * * भवहेत्या।

२ कख का. * त्वां * द्विपादत्ता *।
उ. * * * द्विपाघत्वा * ?
गघ का. आत्मन्वती दक्षिणा प्राण दत्ता प्राणेहि;
मा. * * प्राणघत्वा * ।।

३ कख का. * दधामि यद्धदानो * *।
मा. * * * * व्रह्मणकृते।
म. * * * * व्राह्मणेकृते।
गघ का. * * * पारयत्यसग्ने * * शोका।
म. * * * पारयत्वमग्नेः . . . . . . .।।

४ कख का. ददामीमां दक्षिणा आताममशूछल्याभ्यक्ष्माद् विबर्हामो * * ।
उ. . . . . . . . * * * आममत् शल्यान् . . . .
ग का. कर्णशीलमुपहत्या रातिस्;
उ. कर्ण्णशूळमुप . . . . . ;

अन्नेन प्राणं वनुते तिरो धत्ते परिधानेन यक्ष्मम्।
हिरण्यमश्वं गां ददत् कृणुते वर्म दक्षिणाम्।।५।।

उष्णीषं त्वा शीर्षत्त्या वासस्त्वा तन्वामयात्[+]।
चन्द्रं हिरण्यमन्ध्यात् कर्णाद्दत्तं शुक्रं भ्राजद्
बाधिर्यात् पातु दक्षिणा।।६।।

उपबर्हणं त्वा ग्रीवामयान् मणयो यक्ष्माद्दत् क्रव्यात्।
अङ्गरोगादभ्यञ्जनमन्नं त्वां तष्ट्यामयात्।।७।।

अधस्पदादामयतः पदो रोगादुपानहौ।
दण्डस्त्वा दत्तः परि पातु सर्पाद् दक्षिणतः
प्रयतो दक्षिणेन।।८।।

पै.५. ३१.८द्र.　सौमनसं दक्षिणां दक्षमाणा इषमूर्जं दक्षिणां[+] संवसानाः।
भगस्य धारामवसे प्रतीमः।।९।।

---

५　का. अन्येन प्राणी **** यक्ष्मा .... दद(→ दा)नु ** दक्षिणा।
　ख　मा. * धते * *।

६ कख　का. उष्णीशं त्या शीशत्त्माद् * त्वात् तमामया ... ।
　उ. **** तनवामयात्।
　गघ　का. * हिरण्यं मिथ्या * * भाजातु। म. * ... मन्ध्रात् ...;
　< ... मक्ष्यात् ?
　मा. आदौ 'अधस्पदादामयतः' (८क) इत्यतिरिक्तं प्रमादात्।
　ङ　का. वाधुर्यात् * *।
　मा. बाधिर्यातत् * *।

७ कख　का. * कृत्वा ग्रीवामयार् * यक्ष्मादत्रव्या ....
　मन्यन् तां निष्ट्वामया ;
　मा. अङ्गिरोगाद ....... * तष्ट्वामयात्।
८　का. अधम्पदादा .... * रोगानुपानहूः ****
　सर्पा * प्रेतो * ।

९ कख　का. ** दक्षिमाणा ..... संवसाना।
　ख　मा ** द्वक्षिणा संवत्सानाः।
　म. *** सम्वसानाः।
　ग　का. घृतस्य धारामसे * ;

तु.पै.५.३१.६ सहस्राङ्गा शतं ज्योतींष्यस्या यज्ञस्य पप्रिरमृता स्वर्गा।
आ न एतु दक्षिणा विश्वरूपाहिंसन्तीं प्रति
गृह्णीम एनाम्।।१०।।

इति सप्तमकाण्डे तृतीयोऽनुवाकः

७.१६
(शौ.१९.१७)

अग्निर्मा पातु वसुभिः पुरस्तात्
तस्मिन् क्रमे †तस्मिञ्छ्रये† तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु
तस्मा आत्मानं परि ददे स्वाहा।।१।।

वायुर्मान्तरिक्षेणैतस्या दिशः पातु
तस्मिन् [क्रमे . . . . . .]।।२।।

सोमो मा रुद्रैर्दक्षिणाया दिशः [पातु
तस्मिन् . . . . .]।।३।।

---

१० का. सहस्रांगां * ज्योतियंज्ञस्या . . . . . . .
आ नेतु * * अहिंसन्ती * * एनां z अनु ३z
क मा. * * ज्योतींष्वस्या;
घ मा. ऽ हिंसन्ती * * येनां ।।१५।।ऋ।।
म. ऽहिंसन्तीं * * एनां ।।१५।।ऋ।।
द्र. उ. काण्डिकान्ते अनुवाको न सूचितः।
७.१६.१ ख का. * * तस्मिंयंश्रपये थां * व्रवीमि।
उ. * * तस्मिंत् श्रये * * *।
घ का. * त्मानं * * * z
२ का. वायुर्मान्तरिक्षेण तस्या दिशस्;
मा. वायुर्मान्तरिक्षेण तस्या * * *।।
३ का. * * रुद्रैः * *;

वरुणो मादित्यैरेतस्या दिशः [पातु
तस्मिन् . . . . . .]।।४।।

सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः पातु
तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु
तस्मा आत्मानं परि ददे स्वाहा।।५।।

अपो मौषधीमतीरेतस्या दिशः पान्तु
तासु क्रमे तासु श्रये तां पुरं प्रैमि।
ता मा रक्षन्तु ता मा गोपायन्तु
ताभ्य आत्मानं परि ददे स्वाहा।।६।।

विश्वकर्मा मा सप्तर्षिभिरुदीच्या दिशः [पातु
तस्मिन् क्रमे . . . . .]।।७।।

इन्द्रो मा मरुत्वानेतस्या दिशः [पातु
तस्मिन् . . . . . . .]।।८।।

प्रजापतिर्मा प्रजननवान् सह प्रतिष्ठया
ध्रुवाया दिशः [पातु . . . . .]।।९।।

---

४　　का. वरुण मानतीनेतस्या दिशस्;

५　　का. 'दिश' इति मा. 'दिशः' इति
मन्त्रः समाप्तः। 'पातु' इत्यतः म-हस्तलेखे।

६ कख　का. * सोषधसितीरेतस्या * * ताशु * ताआ * थां * व्रवीमि।
मा. * * तासुत् . . .।
घ　का. ताभ्यातुत्मानं * * *।

७　　का. * * . . . रुदीचा *;

९　　का. * * सप्तमिष्ठया * * ;

बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिशः पातु
तस्मिन् क्रमे *तस्मिञ्छ्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु
तस्मा आत्मानं परि ददे स्वाहा।।१०।।

७.१७
(शौ. १९.१८)

अग्निं ते वसुमन्तमृच्छन्तु*
ये माघायवः प्राच्या दिशो (ऽ)भिदासां।।१।।

वायुं ते ऽन्तरिक्षवन्तमृच्छन्तु*
ये माघायव एतस्या दिशो (ऽ)भिदासां।।२।।

सोमं ते रुद्रवन्तमृच्छन्तु*
ये माघायवो दक्षिणाया दिशो (ऽ)भिदासां।।३।।

वरुणं त आदित्यवन्तमृच्छन्तु*
ये माघायव एतस्या दिशो (ऽ)भिदासां।।४।।

---

१० ख का. ** तस्मियं त्रये थां * व्रवीमि।
उ. ** तस्मिं त्श्रये .......।
घ का. * त्मानं *** ZZ१ZZ
७.१७.१ कख का. ** .... मृश्छन्तु इ मामघावयष् ....
मा. अग्निन् * .... मृछन्तु ....... ।।
म. अग्निन् * ..... मृछन्तु ....।।
२ का. नास्ति।
उ. वायुन् .... मृछन्तु
३ का. ** ..... मृश्छन्त इ ......।
उ. ** ..... मृछन्तु .....।।
४ का. * त्वादित्यवन्तमृश्छन्त इ ; ...
मा. वरुन्त ....।।
म. वरुणन् .....।।

सूर्यं ते द्यावापृथिवीवन्तमृच्छन्तु+
ये माघायवः प्रतीच्या दिशो (ऽ)भिदासां।।५।।

अपस्त ओषधीमतीर्ऋच्छन्तु+
ये माघायव एतस्या दिशो (ऽ)भिदासां।।६।।

विश्वकर्माणं ते सप्तर्षिवन्तमृच्छन्तु+
ये माघायव उदीच्या दिशो (ऽ)भिदासां।।७।।

इन्द्रं ते मरुत्वन्तमृच्छन्तु+
ये माघायव एतस्या दिशो (ऽ)भिदासां।।८।।

प्रजापतिं ते प्रजननवन्तमृच्छन्तु+
ये माघायवो ध्रुवाया दिशो (ऽ)भिदासां।।६।।

बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु+
ये माघायव ऊर्ध्वाया दिशो (ऽ)भिदासां।।१०।।

७.१८

(शौ. ५.८)

वैकङ्कतेनेध्मेन देवेभ्य आज्यं वह।
अग्ने तानिह मादय सर्व आ यन्तु मे हवम्।।१।।

---

५ का. ** द्यावापृथिवीवन्त इश्छन्त। इ...;
उ. सूर्यन् *.....मृछन्तु....।।

६ का. नास्ति।

७ उ. विश्वकर्माणन्....।।

८ का. * मे...इ...;
मा. इन्द्रन् * मरुत्ववन्तमृछन्तु....।।
म. इन्द्रन्....।।

६ उ. प्रजापतिन्....।।

१० का. वृहस्पतिं * विश्वेदेवावान्तमृश्छन्त इ... रूर्ध्वा ** Z२Z
मा. वृहस्पतिन् * विश्वेदेववन्तमृछन्तु...।।
म. वृहस्पतिन् *....।।

७.१८.१ गघ का. अग्नये थान्निह सादय सर्वा यंतु **;

इन्द्र आ याहि मे हवमिदं करिष्यामि तच्छृणु+।
इम ऐन्द्रा अतिसरा आकूतीः सं नमन्तु मे।
तेभिः शकेम वीर्यं जातवेदस्तनूवशिन्।।२।।

यदसावमुतो देवा अदेवः संश्चिकीर्षति।
मा तस्याग्निर्हव्यं वाक्षीद्धवं देवाश्च मोप
गुर्ममैव हवमेतन।।३।।

क शौ.५.८.४क अति धावतातिसरा विश्वस्येशाना ओजसः।
वृश्चतामुष्य जीवितमिन्द्रेण सह मेदिना।।४।।

ख-ङशौ.५.८.४ख-ङ अतिसृत्यातिसरा इन्द्रस्यौजसा हत।
अविं वृक इव मथ्नीत ततो वो जीवन् मा मोचि
प्राणमस्यापि नह्यत।।५।।

---

२ कख का. इन्द्रायाहि * * * * तश्छृणु ।
उ. . . . तत् शृणु।
ग-च का. इममिन्द्रातिराकूती * नवंभू * । * शकेमं * * . . वशिं;
गघ मा. * * अतिसराः आकूती सन् * *।
म. * * * सन् * *।

३ का. . यदासाममुचो * देवासश् *।
वा . . . साक्षीद् * * * सोमप . . . मेतुनः।
घ मा. * * * . . गु(→शु)र्ममैव . . . .।।

४ कख का. * धावतातिसुरा . . . . ओजसा।
क मा. * धाव अतिसरा ;
गघ का. . . . जीवति। इन्द्रेण * मेधिना।
उ. वृश्च्यतामुष्य . . . .।।

५ कख का. अतिमृतातिसराविन्द्रस्योजसा *।
म. इन्द्रस्योजसा * ।
गघ का. * वृकीव सलीच * * जीवं * मोचिः;
मा. * * * मथ्नीत . . . मेचि;
द्र. का. ५ङ - ६घ। प्रतीचः इत्यवधिको भागो नष्टः।

शौ.७ यानसौ प्रतिसरानकश्चकार कृणवश्च यान्।
त्वं तानिन्द्र वृत्रहन् प्रतीचः पुनरा कृधि यथामुं
तृणहं जनम्।।६।।

५ यममी पुरोदधिरे ब्रह्माणमुपभूतये।
इन्द्रस्य ते अधस्पदं तं प्र यच्छामि' मृत्यवे
क्रव्यादेनं शमयतु।।७।।

६ यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे।
तनूपानं परिपाणानि चक्रिरे सर्वं तदरसं
कृधि।।८।।

६ अथैनमिन्द्र वृत्रहन्नुग्रो मर्माणि विध्य।
अत्रैवैनमभि तिष्ठ शक्र मेद्यहं तव।
अनु त्वेन्द्रा रभामहे स्याम सुमतौ तव।।९।।

८ यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम्।
कृण्वेऽमुमधरं तथा शश्वतीभ्यः समाभ्यः।।१०।।

---

६ ख मा-नकशृकार * *।
म. -नकशृकार कृणवर्च्च *।
ङ का. यथामन्त्रिणहं * z५z

७ ख का. . . . . . . . मभिभूतये।
घङ का. त्वं पृश्छामि * * * समयतु।
घ उ. * * यछामि * ;

८ क का. यद्विप्रैर्देव . . * *। तनूपाणं. . . .।

९ कख का. * वृत्रहंनुग्रो * विश्य।
गघ का. अत्रैवेनममि तिष्ठश् * नेद्य हन्तवः।
घ उ. 'तव' इति मन्त्रः समाप्तः।

१० का. यथेन्द्रमुद्वातनं लब्धा * * कृणेमिमधरं
* * * z३z
घ मा. सस्वतीभ्यः *।।१८।।ऋ।।
म. सश्वतीभ्यः *।।१८।।ऋ।।

७.१९

आङ्गिरसो जन्मनासि तमु त्वाहुर्वनस्पते।
स पीलो रक्षो बाधस्व साकमिन्द्रेण मेदिना।।१।।

अप रक्षांसि बाधस्व बाधस्व परिरापिणः+।
पिशाचान् पीलो क्रव्यादो बाधस्व +मूरदेविनः।।२।।

+ययाहुस्तृष्टं कटुकमपगूढं फले कुलम्।
तस्यै हिरण्यकेश्यै नमः कृण्वो अरातये।।३।।

या महती महोन्माना सर्वा आशा व्यानशे।
तस्यै हिरण्यकेश्यै नमः कृण्वो अरातये।।४।।

यस्ते योनिं प्रतिरेढ्याण्डादो गर्भदूषणः।
अरायं पुत्रं प्राप्यास्तं पीलुः सहतामितः।।५।।

---

७.१९.१ का. अङ्गिरसो . . . . हाहुर्वनस्पतिं
स्व * * * . . . मेधिना।

२ ख का. * परिरपृण।
उ. * परिराविणः।
घ का. * पूरदेविनः।
उ. * मुरदेविनः।।

३ कख का. अथाहुस्तिष्ठं . . . . मवगूढं पले *;
मा. ययाहस्तष्टं . . . . . .।
म. ययाहस्तुष्टं . . . . . .।
गघ मा. * हिरण्यकैस्यै * * ऽरात्तये।।
म. * * * * ऽरातये।।

४ कख का. * सहती महोर्माना * सा *
गघ. मा. * हिरण्यकैस्यै * * ऽरातये।
म. * * * ऽरातये।

५ गघ का. रायं * प्राप्यस्त्वं * सहजासिता।
मा. * * * पीलु * ।।

यदा पीलवाङ्गिरस पक्वो (ऽ)तिष्ठो वनस्पते।
अथाहुरिन्द्रं जज्ञानं शक्रं बर्जह्ये+ प्रति।।६।।

यथा सेदिमबाधथाः पच्यमानो वनस्पते।
एवा पीलो रक्षो बाधस्व साकमिन्द्रेण मेदिना।।७।।

यत् पिशाचैः पुरुषस्य जग्धं भवत्यात्मनः।
आ पीलो प्यायते पुनस्तव चाश्नाति पिप्पलम्।।८।।

पीलुं त्वाहुः पीवं त्वाहुरथो त्वाहुर्वनस्पतिम्।
सर्वा ते भद्रा नामानि तेभिर्नः पाह्यंहसः।।६।।

रक्षोहणं वृत्रहणं पीलुं पिशाचजम्भनम्।
जज्ञानमग्रे वृक्षाणां तं ते बध्नाम्यायुषे।।१०।।

---

६ कख का. * पीलमङ्गिसः। * तिष्ठ *।
तदादु . . . * * प्रज्ञह्ये *।
उ. . . . यज्ञानं * बर्जज्ये *।।

७ कख का. * सेधिमपबाधता पश्यमानो *।
मा. * . . . मवाधथा * *।
घ का. सकमि . . . . . . *।

८ क मा. * पिशाचै *;
घ का * चष्णातु पिपृलं।

६ कख का. * * पील्वाहुरथो . . . . .।
मा. * वाहुः * . . . . .।
गघ का. * त्वे * मानामानि तेभिन्नष् . . . .;
मा. * * * पात्वंहसः।।

१० क का. रक्षोहणँ * ;
ख मा. * पाशाचजम्भनं।
गघ उ. यज्ञान . . . . . तन् * * ।।१६।।ऋ।।

७.२०

सगराय शत्रुहणे स्वाहा।।१।।

शर्णीलाय शत्रुहणे स्वाहा।।२।।

समुद्राय शत्रुहणे स्वाहा।।३।।

सन्धसाय शत्रुहणे स्वाहा।।४।।

इषिराय शत्रुहणे स्वाहा।।५।।

अवस्यवे शत्रुहणे स्वाहा।।६।।

वायवे शत्रुहणे स्वाहा।।७।।

वाताय शत्रुहणे स्वाहा।।८।।

मातरिश्वने शत्रुहणे स्वाहा।।९।।

पवमानाय शत्रुहणे स्वाहा।।१०।।

इति सप्तमकाण्डे चतुर्थोऽनुवाकः।

दशर्चः सप्तमः काण्डः समाप्तः।

---

२ का. शरंनीलाय * *।

३ का. ८-९ मन्त्रयोर्मध्ये पठितः।

४ का. सदंसाय * *।

५ मा. इशिराय * *।

६ उ. अवश्यवे * *।

काण्डान्ते का. इत्यथर्वणिकपैप्पलादयाश्शाखायां सप्तमष् काण्डस् समाप्तः zz का७ zz

उ. अ ४ ।। दशर्चकाण्डः।।

# अष्टमः काण्डः

## ८.१

(शौ.५.११)

कथा दिवे असुराय ब्रवाम कथा पित्रे हरये त्वेषनृम्णः।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघत्वं
मनसाचिकित्सीः।।१।।
न कामेन पुनर्मघो भवामि संपृच्य कं पृश्निमेतामुपाजे।
केन मत् त्वमथर्वन् काव्येन केन जातेनासि
जातवेदाः।।२।।
सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः।
न मे दासो नार्यो महित्वं व्रतं मीमाय यदहं धरिष्ये।।३।।

न त्वदन्यः कवितरो न वेधा न धीरतरो वरुण स्वधावः।
त्वमङ्ग विश्वा जनिमानि वेत्थ स चिन्नु त्वज्जनो
मायीं बिभाय।।४।।

---

काण्डारम्भे का. अथाष्टमं लिख्यते zz ओं नमो नारायणाय z ओं
नमश् शिवाभगवत्यै zz ओं . . . .; उ. ओं . . . .;

१ का. कया दिव * प्रवामः * * * स्त्वेषुनृम्णः। पृश्निर्वरुण
* ददावां * . . . . चिकित्से।

ग मा. * * * जदावान्; घ मा . . . . . चिकित्सी।।

२ क मा. * * * भवासि (→मि);

खग का. संपृश्छि * पृश्छिमेतामुपाजेत्। * म त्वमथर्वं *;
ग उ. * मत्व . . . ;

३ का. सत्वसं * * सत्वं . . . . . म * * * * व्रतर्मीमाय . . . .
हनिष्य;

४ का. . . . . . किवितरो * * अनु * * * . . . जन्मानि *
म तंन तुज्जनो मां विमायः z

त्वं ह्यङ्ग वरुण स्वधावो विश्वानि वेत्थ जनिमा शर्धनीते।
किमेना रजसः परो ऽस्ति किमवरेणावरमसुर।।५।।

एकमेना रजसः परोऽस्ति पर एकेन दुर्दाशं चिदन्यत्[+]।
तत्ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु
नीचैर्दासा उप सर्पन्तु रिप्राः।।६।।
त्वं ह्यङ्ग वरुण प्रब्रवीषि पुनर्मघेष्ववद्यानि भूरि।
मो षु पण्यभ्येतावता भूर्मा त्वा
वोचन्नराधसं जनासः।।७।।
मा मा वोचन्नराधसं जनासः पुनस्ते [+]पृश्निं जरितर्ददामि।
स्तोत्रं मे विश्वमा याहि जनेष्वन्तर्देवेषु
मानुषेषु विप्र।।८।।

---

५ मा. त्व . . . . वरमुर।।
का. विश्वा * जन्मा श्रद्धदनीते। किंमेना * * *
किमवरेणा अवरमसूर।

६ का. यएकमेना * * * परेकेन दूडाह्यं त्यजन्यत्
तत्वे * वरुणष्प्र व्रवीमधोवचसष् * * नीचीर्मा साया* * रिप्रा;
ख उ. * * * चिदन्यत।
गघ मा. . . . . व्रवीमधोवचसः प्रणयो * ;
घ म. . . . . . प्रणयो * ;
ङ मा. नीचैदासा * * *।। म. . . . . . सर्पन्त *।।

७ क मा. त्व . . . . . ; का. . . . . वरुण व्रवीषि।
ख उ. . . . . . विद्यानि * ।
ग का. सो ख पाण्वद्भ्यवतावचा . . . वोचंन्नराधस्सं *;
मा. * * पश्यभेतावता . . . . .।।
म. * सु . . . . . .।।

८ कख का. आ मा वोचंनराधस्सं * . . . पृष्णिं जनभिर्ददासि।
मा. * * वोचंनराधसं * . . . पृश्नि . . .।
म. . . . . . . . पृश्नि . . . .।
का. * * श्वमा . . . रिप्रा।

आ ते स्तोत्राणि वर्धनानि यामि देहि तन्मह्यं यददत्तमस्ति।
युज्यो नः सप्तपदः सखासि समा नौ बन्धुर्वरुणः
समा जा।।९।।
वेद वै तद्यन्नौ समा जा ददामि तुभ्यं यददत्तमस्ति।
देवो देवाय गृणते वयोधा विप्रो विप्राय
स्तुवते सुमेधाः।।१०।।
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं विश्वदेवम्।
तस्मा उर्वायुः कृणुहि प्रशस्तं सखा नो
ऽसि परमश्च बन्धुः।।११।।

८.२

१-१०
शौ. ५.१३.२-११ वृषा मे रवो नभसा न तन्यतु-
रुग्रेण तं वचसा वाध इदु ते।
अहं तमस्य ग्रभिरग्रभं रसं
ज्योतिषेव 'तमस उदेति' सूर्यः।।१।।

---

९ का. या * * बन्धनानि यानि * तंमह्यं यदितत्वमस्ति।
यद्यो नस्सप्तपतस्सखासस् * नो . . . . जाः;
घ मा. . . . . . . . स्यमा *। म. . . . . . . . .र्वरुण स्यमा *।।
१० कख का वद * तद्वंदं * * दजामि * यदितत्वमस्ति।
११ कख का. . . . . .स्वधावं अथर्वणं * *;
घ का. * * ऽस्ति वरुणश्च * z१z
८.२.१ का. * * * रभसा नि . . . . बाधैतु *।
* . . . . ग्रभिरग्रभ * . . . तपसोदयतु *।
घ उ. . . . . तमसौदेति *।।

यत् ते ऽपोदकं विषं तत् त आत्ताभिरग्रभम्।
गृह्णामि मध्यमुत्तममुतावमं भियसा नेशदादु ते।।२।।

बलेन ते बलं हन्मि *तन्वा हन्मि ते तनुम्।
विषेण हन्मि ते विषमहे मुरिष्टा मा जीवीत्
प्रत्यगभ्येतु त्वा विषम्।।३।।

असितस्य तैमातस्य बभ्रोरपोदकस्य च।
सात्रासाहस्य मन्योर्ज्यामुग्रस्येव धन्वनो
वि मुञ्चामि रथाँ इव।।४।।

कैलात पृश्न उपतृण्य बभ्रवा मे शृणुतासिता अलीकाः+।
मा नः सख्युः काममपि छादा श्रावयाद्धो
वीर्षे रमध्वम्।।५।।

---

२ का. * * मोदक * तत्ताभिरग्रभं
* मध्यमुतावसं * नेसदातु *।
क मा. ना * पोदकं * ;
गघ मा. गृभ्णामि . . . . ममुत्त(→त)ावमं. . . .।।

३ का. * * * हर्मि तर्मा सन्मि ते तनूँ।
ऋषेण हर्मि . . . . . मरिष्टा मा जीवी प्रत्यगर्भेतु * *।
क मा. * * ववलं *;
ख उ. तन्मा * * * ।

४ का. * तयिमातस्य . . . रुपोदकस्य * । मात्राहस्तस्व
. . . . . ग्रस्यव धन्यनो * * रथां *।
ग मा. * मन्योज्यामु . . . .; .

५ का. कैलात् पृष्णिरुपतर्णि बभूवा * शुणुतासितलीका ।
* नश्चक्षुष्काममपृष्ठाताश्यावयाद्वौ वर्षे *।
कख मा. * * उपतृण . . . . . . . शृणुताशिता अलिकाः। म. . . .
अलिकाः।
गघ मा. * * सख्यु . . . थादा श्रावयोद्धो * * *।।
म. . . . . थादा . . . .।।

द्र. घ < श्रावयाद्धो+?

आलिकि च विलि पिता यस्ते माता च।
विद्म ते विश्वतो बन्धुमरस किं करिष्यसि।।६।।

उरुगूलाया दुहिता जाता दास्यसिक्न्याः।
प्रतङ्कं दद्रुषी नु +साहीनरसाँ अकः।।७।।

कर्णा श्वाविदब्रवीद् गिरेरवचरन्तिका।
याः काश्चेमाः खनित्रिमास्तासामरसतमं विषम्।।८।।

ताबुवं न ताबुवं न घेदसि त्वं ताबुवम्।
ताबुवेनारसं विषम्।।६।

तस्तुवं न तस्तुवं न घेदसि त्वं तस्तुवम्।
तस्तुवेनारसं विषम्।।१०।।

+अरसं ते (ऽ)हे विषमियं कृणोत्वोषधिः।
त्रायमाणा सहमाना सहस्वती सहाता इद्
गोरश्वात् पुरुषाद् विषम्।।११।।

---

६　का. आलका * व्यचलुपूत्वा . . .
** विद्वतो बद्धतो वन्धुस्सरसष् **।

७　का. उदकूलाया दुहि * जाश्वशघ्न्या प्रतंगर्तद्रुहशी
नु षाहीनरसां * ;
घ　मा. साहीनरजाङ् * ।।
म. साहीनरसाङ् * ।।

८　का. कण्वा . . . . . गिरेदव . . . काश्येमा . . .सामरमतमं *।

६　का. तावुचं * तावुचं * हेरसिक्तं तावुचेनारसं *;

१०　का. तस्तुवं न हरिसिक्तं त्रस्तुवं . . . . . . z

११　का. रसं . . . . . . .त्रायमाणां सहमानां
** यद् . . . . . . z२z
क　उ. अर्षं . . . . .;
घङ　मा. सरस्वती ** . . . . . . पुरुषा *।।

८.३

(शौ.४.९)

शौ. ४.९.९ यदाञ्जनं त्रैककुदं जातं हिमवतस्परि
यातूंश्च सर्वान् जम्भया सर्वांश्च यातुधान्यः।।१।।

३ उतेवासि परिपाणं यातुजम्भनमाञ्जन।
उतामृतत्वस्येशिष[1] उतासि पितुभोजनम्।।२।।

२ परिपाणं पुरुषाणां परिपाणं गवामसि
अश्वानामर्वतामित् परिपाणाय तस्थिषे।।३।।

शौ.२.७.४ परि मां परि णः प्रियं परि णः पाहि यद्धनम्
अरातिरिन्नो मा तारीन्मा च नः किं चनाममत्।।४।।

४.९.५ न तं प्राप्नोति शपथो न कृत्या नामिशोचनम्।
नैनं विष्कन्धमश्नुते यस्त्वा बिभर्त्याञ्जन।।५।।

---

८.३.१ का. . . . . त्रैकन्कुदं . . . . . . .। यातृंश्च सर्वां जम्भय . .
. . . . . . .।

२ कख का. . . . . . मांजनः उतामृतत्वेस्येशिष उतासष् *;
उ. . . . . उतामृतत्वस्येसिष. . . . . .।।

३ का. परिमाणं * परिमाणं रकामसि अश्मानांसर्वतामि
परिमाणाहि तस्तिषे .

घ मा. * तसिषे।।

४ का. परी * * * * * * पाह्यद्धनं रातिरंनो * तारीन्मा तरष्. . .
. .;

घ मा. . . . . . किञ्चनाममत्।। म. . . . .किञ्चनममत्।।

५ गघ का. . . . . . . निनिष्कन्धमश्नुते यस्त्वां . . र्त्यांजनः;

ग मा. . . विस्कन्द . . . . .; घ म. यस्त्व . . . . . . ।।

६ आसन्मन्त्रयाद्दुःस्वप्न्यात्[+] [+]क्षेत्रियाच्छपथादुत।
दुर्हार्दश्चक्षुषो घोरात्तस्मान् नः पाह्याञ्जन।।६।।

८ त्रयो दासा आञ्जनस्य तक्मा बलास आदहिः।
वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता।।७।।

तु. १ वृत्रस्यासि कनीनिका पर्वतस्यास्यक्ष्यौ।
देवेभिः सर्वैः प्रोक्तं परिधिर्नाम वा असि।।८।।

वैदो ह वेद ते नाम गन्धर्वः परिवाचनम्।
यत आञ्जन प्रजायसे तत एह्यरिष्टतातये।।९।।

१० यदि वासि त्रैककुदं यदि यामुनमुच्यसे।
उभे ते भद्रे नाम्नी ताभ्यां नः पाह्याञ्जन।।१०।।

४ यस्याञ्जन प्रसर्पस्यङ्गमङ्गं परुष्परुः।
तस्माद्यक्ष्मं वि बाधस्वोग्रो मध्यमशीरिव।।११।।

---

६ का. आसमर्त्या दुष्वप्न्या . . . . . . । द्रहादेश्च . . . . . ।
मा. आसन्मन्त्रियाद् दुःष्वप्न्या क्षेत्रिया शपथादुत।
दुर्हादश्चक्षुषो . . . . . . न . . . . . . ।।
कख म. आसन्मन्त्रियाद् दुःस्वप्न्यात् क्षेत्रियाश्छ . . . . . . . ।
७ का. * चसांजनस्य * बलासादहे * पक्षतानां . . . . . . ।
ख मा. तक्मान . . . . . . . ।
गघ उ. वरिशिष्टः . . . . . . ।
८ का. वृत्रस्यास्य * . . . . . . . स्यक्षौ * सर्वै . . . . . . वासि।
९ का. वेदो हि * * * गन्धर्वा *। यतांजन * ततेह्य . . . . z
१० का. * वास * * वासनुमुच्यसे। उभय * भद्री नाम्नीस्ताभ्यन्
नष्पाह्यञ्जन;
११ का. यस्यांजनः। . . . . . . वि बाधध्वमुग्रो . . . . . ।

शौ.६.७६.४ कख नैनं घ्नन्ति पर्यायिणो न 'सन्नाँ अव गच्छति'।
जने स न प्र मीयते यस्त्वा बिभर्त्याञ्जन।।१२।।

४.६.७ इदं विद्वानाञ्जन सत्यं वक्ष्यामि नानृतम्।
सनेयमश्वं गां वास आत्मानं तव पूरुष।।१३।।

८.४

(शौ.५.१६)

य एकवृषोऽसि सृजारसोऽसि।।१।।

यो द्विवृषोऽसि .... ।।२।।

यस्त्रिवृषोऽसि .....।।३।।

यश्चतुर्वृषोऽसि .....।।४।।

यः पञ्चवृषोऽसि ......।।५।।

यः षड्वृषोऽसि .......।।६।।

यः सप्तवृषोऽसि ........।।७।।

योऽष्टवृषोऽसि ........।।८।।

यो नववृषोऽसि .....।।९।।

यो दशवृषोऽसि ......।।१०।।

---

१२ का. नैनो घ्नन्तु पर्यायणो * मन्वा इव गश्छति।
* म * * * यस्त्वां ... र्त्यञ्जन।
खग उ. * सन्नाङ् * गछति। * * नः ... ।।
द्र. तु. पै. १९. १५.१५ख उ. सन्नाङ्; का. सुन्वाँ।

१३ का. * ... नांजनस् * वक्ष्यमि .... वासा * * पौरुषः Z३Z
कख मा. नास्ति इदं पादद्वयम्। क $म_2$ * ... नांजन;
घ म. आत्मान; मा. पूरुषः।।

३ का. यस्तृवृषोसि;

४ का. यश्चतुवृषोसि; मा. यशतुर्वृषो *।।

५ का. * .... षोष ;

८ का. * अष्टवृषोसि;

योऽपोदकोऽसि सृजारसोऽसि। ।११। ।

८.५

(शौ.५.१५)

एका च मे दश चापवक्तार ओषधे।
ऋतजात ऋतावरि मधु त्वा मधुला करत्। ।१। ।
द्वे च मे विंशतिश्चा[प वक्तार . . . . .करत्]। ।२। ।
तिस्रश्च मे त्रिंशश्चा [. . . .]। ।३। ।
चतस्रश्च मे चत्वारिंशश्चा [. . . .]। ।४। ।
पञ्च च मे पञ्चाशश्चा [. . . . .]। ।५। ।
षट् च मे षष्टिश्चा [. . . .]। ।६। ।
सप्त च मे सप्ततिश्चा [. . . .]। ।७। ।
अष्ट च मे ऽशीतिश्चा [. . . .]। ।८। ।
नव च मे नवतिश्चा [. . . .]। ।९। ।
दश च मे शतं चा [. . . .]। ।१०। ।
शतं च मे सहस्रं चापवक्तार ओषधे।
ऋतजात ऋतावरि मधु त्वा मधुला करत्। ।११। ।

इति प्रथमोऽनुवाकः

---

११ का. यूपोदकोसि * * Z४Z

८.५.१ क म. * * * दशच् ;
ख-घ का. चापवक्त्रारोषधे यदिचाद दतावरि * * * *।

२ का. * * * विशंतिश्च; ३ का . . . . त्रिंशश्च; मा. तिस्रच मे चत्वारिशंश्चत्रिस्रश्चा . . . । । ४ मा. चतस्रच . . . .। । का . . . चत्वारिंशश्च। । ५ का. . . . पञ्चाशश्च। मा. * * * पञ्चासश्चा। ।

६ मा. * * * षष्ठश्चा। । ११ का. * * * * चापवक्त्रारोषधे। यदिचाद धतावरि * * * * Z अनु ५ Z

८.६

(शौ.४.२०)

१ आ पश्यसि प्रति पश्यसि परा पश्यसि पश्यसि।
द्यामन्तरिक्षमाद् भूमिं तत् सर्वं देवि पश्यसि।।१।।

२ तिस्रो दिवस्तिस्रः पृथिवीः षट् चेमाः प्रदिशो महीः।
तयाहं सर्वान् यातून् पश्यानि देव्योषधे।।२।।

३ सुपर्णस्य दिव्यस्य तस्य हासि कनीनिका।
सा भूमिमा रुरोहिथ वह्यं श्रान्ता वधूरिव।।३।।

४ तां मे सहस्राक्षो देवो दक्षिणे हस्त आ दधत्।
तयाहं सर्वं पश्यानि यद्भूतं यच्च भाव्यम्।।४।।

यथा श्वा चतुरक्षो यथाश्व(:) स्यावोर्वताम्।
यथाग्निर्विश्वतः प्रत्यङ् एवा त्वमस्योषधे।।५।।

७ कश्यपस्य चक्षुरसि +शुन्याश्चतुरक्ष्याः*।
वीध्रे सूर्यमिव सर्पन्तं मा पिशाचं तिरस्करः।।६।।

---

६.६.१ क मा. अ * * *;

२ का. * . . . . पृथिवी * चेमस्सुदिशो मही। तथाहं
सर्वा यातृनपश्यामि . . . . .।
मा. * . . . . . . . . पृथिवी . . . . . .। यातुन् . . . .।।

३ का. . . . . . रोहेर्मह्यं . . . . .।

४ का. तावन्मे * * * हस्ताददत्। तेनाहं * पश्याम्यद्भूतं यश्च भव्यं।
ख मा. दक्षिण आ दधत्। म. दक्षिणहस्त * *।

५ क उ. * स्वा *;
ख मा. . . . . स्यावोर्धितां।
ग का . . . . प्रत्यं → स्त्यं ;

६ कख का. * चतुरक्षस् स्यंन्याश् चतुरक्षा। उ. कश्यपश्य. . . .
शून्याश्चतुरक्षाः।
घ का. . . . . .तिरस्कर।

कख ६कख　दर्शय मा यातुधानान् दर्शय यातुधान्यः।
आपस्पृत इव तिष्ठन्तं दर्शय मा किमीदिनम्।।७।।

८　उदग्रभं परिपाणं यातुधानात् किमीदिनः।
तेनाहं सर्वं पश्यान्युत शूद्रमुतार्यम्।।८।।

यथा सूर्यश्चन्द्रमाश्च विश्वा भूता विपश्यतः।
एवा वि पश्य तान् त्वमघायुर्मोप गादिह।।६।।

६　यो अन्तरिक्षेण पतति भूमिं यश्चोपसर्पति।
दिवं यो मन्यते नाथं तं पिशाचं दृशे कुरु।।१०।।

५　आविष्कृणुष्व रूपाणि मात्मानमप गूहथाः।
अथा सहस्रचक्षो त्वं प्रति पश्यास्यायतः।।११।।

८.७

मोक्षेजांस्तोदांस्तुमलान् पथिष्ठाँ उत पार्षतान्[+]।
अहीनां सर्वेषां विषमरसं कृण्वोषधे।।१।।

---

७　का. दर्शये * यातुधानां शवय * । आपस्पृगेव * * * *;
क　मा. * * यातुधान्यान् ;
८　का. तदग्रभं * * किमीदिन। . . . . .पश्याम्युत . . . उतर्यं।
६　का. . . . . . श्चन्द्रमस्या * * विपश्यत। । * * पस्य ता त्वमघा-
युन्मोप. . . .
गघ　मा. * * * तां . . . . . । । द्रः ग < पश्यतात्?
१०　क. मा. यो ऽन्तरिक्षे * ; म. योन्तरिक्षे * ;
ख-घ　का. भोमीश्चोप . . . । * * * * त्वं * * * ।
११　का. . . . मपि रूहता। एवा * * * पश्याम्यायत Z9Z
८.७.१ कख　का. सौक्षेजांस्त्वोदांस्तुमलं पतिष्ठाम उ पार्षतां
ख　उ. पथिष्ठाङ् * पारुषतान्।

अश्वक्रन्दस्य वण्डस्य पृदाकोर्गोनसेरुत।
श्वित्राणां सर्वेषां विषमरसं कृण्वोषधे।।२।।

ध्यांपातस्य गवकस्य गोधापृष्ठेरहेरुत।
असितानामेतज्ञातमरिष्टे ऽरसं कृधि।।३।।

एतज्ञातं स्वजानां तद् बभ्रो अरसं कृधि।
सर्वस्य बभ्रोर्भेषज्यसीहि विषदूषणी।।४।।

त्रायमाणा प्र ब्रवीतु सर्वाङ् राज्ञो अहीनाम्।
तिरश्चिराजीनसितानथो उपशयाश्च ये ।।५।।

सहसाहं यातुधानान् सहसा यातुधान्यः।
सहो वः सर्वान् सासाह तस्याहं नाम जग्रभ।।६।।

सहः साकं पैद्वेनोग्रेण वचसा मम।
अन्धाहींश्च सृजयाश्च शफकांश्च रथव्रयः।
सहसा सह उत्पत्य तान् सर्वाँ अरसाँ अकः।।७।।

---

२ का. अश्वक्रंदस्यवा(→व)ण्डस्यप्रदाकोर्गोनुशेरुत। * सर्वेषा . . .।
ख म. प्रदाकोर्गो . . . . .।

३ का. ध्यांपाकस्य * गोधापिष्ठे . . . . . .।
म. * गवगस्य . . . . . .।

४ क मा. . . . . . . स्वजानात् ; म . . . . .स्वजानान्;
ख-घ का. तदबभ्रो रसं * । * बभ्रो भेषज्यसीय विदूषणी।

५ का. * * * सर्वं * महीनां तिंरश्चराजैरसितानथोपसयाश्च *।
ख म. सर्वाङ * ऽहीनां।

६ कख का. शांसां यातुधानं सहस * ; मा. . . . सहस *।
गघ का. ससहस्वान् सासह मंहा नाम *।
उ . . . . . . .जग्रभः।।

७ का. महस्माकं . . . . . . । अन्धायूंश्च * हृदयांश्च शपथांश्च रथव्रिहः सामा उतपद्यतां सर्वानरसं *;
घ मा. सफकांश्च *।
च उ. * सर्वाङ् अरसाङ् *।

असितस्य विद्रधस्य हरितो यश्च विद्रधः।
निमङ्क्षी विद्रधानां यो मृजन्ती तौं अजीजभत्।।८।।

नीलरुद्रोप. २१ यः स्वजानां नीलग्रीवो यः स्वजानां हरिरुत।
कल्माषपुच्छमोषधे जम्भयास्यरुन्धति।।९।।

मायं मरदहिदष्टः पितुरस्मा असद् विषम्।
इमा ह्यस्मा ओषधिमा हराम्यरुन्धतीम्।।१०।।

एतज्जातं पृदाकूनामरसं जीवले कृधि।
इन्द्रस्य भद्रिका वीरुदसीहि विषदूषणी।।११।।

८.८

शतमर्वाक् प्र स्यन्दन्ते प्र स्यन्दन्ते शतं परः।
शतं वृत्रस्य काण्डानि तेभ्य आपो वि धावथ।।१।।

अन्तरिक्षे पतयिष्णवो नभसस्परि जज्ञिरे।
आपो हिरण्यवर्णास्तास्ते भवन्तु शं हृदे।।२।।

---

८ का. * विद्रदस्य * यस्य विद्रध।
इमंक्षी * * सृजांत्वयि ता अजीजनत्।
गघ उ. निमंक्षी * * * तां *।।

९ का. य * * य * हरीरुत कल्मषप्रष्छमोषधे जम्भयाम्यरुन्धती।
क उ. * * नीळग्रीवो;

१० का. मायं सल×जजहिजष्टः पितरस्मात् सद्विषं।

११ कख का, मा * * प्रदाकूनामरसं * * । म. * * पृदाकूना . . . * *।
गघ का. * * वीरुजूज्यसीय * z२z

८.८.१ मा. . . . . . प्र स्यन्दंते * स्यन्दंते * *।
* * * तेभ्यः * * *।। क म. . . . * स्यन्दंते;
ख म. * स्यंदन्ते * *। का. * * * पर;
गघ का. * * * काण्डा(→ण्वा) नि * * * धावताः ;

२ का. * पथयिष्लवो ; ख मा. . . . . .यज्ञिरे।
घ का, म. . . . . सं *।।

शं ते सन्तु हृदयाय शं ते हृदयाभ्यः।
शं ते यकक्लोमभ्यः शमु ते यन्तष्टेभ्यः।।३।।

यदङ्गैरपसिस्मिषे+ *यच्छीर्ष्णा यद्य पृष्टिभिः।
आपस्तत् सर्वं निष्करन्* तष्टा रिष्टमिवानसः।।४।।

सं हृदयेन हृदयमोपशेन समोपशः।
अद्भिर्मुञ्चापस्मितं पार्ष्णिद्योतः समेतु मे।।५।।

पै.८.१२.१०क आचरन्तीः पर्वतेभ्यो देवीर्देवेभ्यस्परि।
आपो यमद्य प्रापन् न स रिष्याति पूरुषः।।६।।

शौ.१६.२.१ शं त आपो हैमवतीः शमु ते सन्तूत्स्याः+।
शं ते सनिष्यदा आपः शमु ते सन्तु वर्ष्याः।।७।।

---

३ क का. * * * हृदय्याय; ख मुम्ब. * * हृदयाद्यः।
गघ का. * * अकक्लोसद्भ्यश्चमु * यंन्वेष्टेभ्यः।
घ म. . . . यन्तष्ट्येभ्यः।।

४ का. . . . . रपसस्पृशे यश्छीर्ष्णा यश्च *
. . . . . निष्करं त्वष्टा . . . . वानशः;
क-ग उ. . . . रुपसिस्मिषे यत् शीर्ष्णा . . . .।
. . . निष्करं ;

द्र. ४घ तु. Louis Renou, Etud. voc. Rv, २३[१].

५ का. * हृदेन हृदय (म.हृय) मोपसेन . . . . .
. . . मुञ्चापस्सितं तार्ष्णभ्यो (→द्यो) तस् . . . ते।

६ गघ का. . . . प्रापं * * * रिष्यात् पौरुषः;
घ मा. * * रिष्या (←स्या) ति *।।

७ का. * तापो * शं * सन्तूश्छा श * सनिष्यदापः . . . संतु * ;
मा. शन् * * हैमवती . . . . . सन्तुच्याः।
म. . . . . .सन्तूछ्याः।
घ उ. . . . . . . वरिष्याः।।

२ शं त आपो धन्वन्याः शमु ते सन्त्वनूप्याः।
शं ते खनित्रिमा आपः शं याः कुम्भेभिराभृताः। ।८।।

३ अनभ्रयः खनमाना विप्रा गम्भीरेऽपसः।
भिषग्भ्यो भिषक्तरा आपो +अच्छा वदामसि। ।६।।

४ अपामह दिव्यानामपां स्रोतस्यानाम्।
अपामह प्रणेजनेऽश्वा भवथ वाजिनः। ।१०।।

५ ता आपः शिवा आपो ऽयक्ष्मंकरणीरपः।
यथैव तृप्यते मयस्तास्त आधुत्तभेषजी। ।११।।

८.६

शौ.१६.२२.२१, २३.३०, तै. ब्रा.२. ४.७.२६

ब्रह्मज्येष्ठा सम्भृता वीर्याणि ब्रह्माग्रे
ज्येष्ठं दिवमा ततान।
भूतानां ब्रह्म प्रथमोत जज्ञे तेनार्हति ब्रह्मणा
स्पर्धितुं कः। ।१।।

---

८ का. सन्तापो धन्विन्याश् . . . .सन्तन्यप्या * * खनित्रमापः * * . . . . . रावृता;
क उ. शन् * * *;
ख मा. . . . . सन्तुप्याः।
ग उ. शन् * * *;
६ ख-घ का. * * प्सा * भिषक्वरापो वत्सा * z
घ उ. * ऽछा * । ।
१० का. . . . . दिव्यानां मा स्रोदस्यानां . . . . .ष्वा भवत *;
११ का तापशृशिवापोअव . . . . . .अथैव दृश्यते मयस्त्वाभ्यत्वभेषजी z३z
८.६.१ का. ब्रह्मज्येष्ठास् * * . . . . ततानः * * प्रथमोधि * . . . . . स्पर्धत्तिं *;
ग उ. . . . . यज्ञे;

x ब्रह्मेमे द्यावापृथिवी ब्रह्मेमे सप्त सिन्धवः।
ब्रह्मेमे सर्व आदित्या ब्रह्म देवा उपासते।।२।।

x ब्रह्म ब्राह्मणो वदति ब्रह्म रात्री नि विशते।
सावित्रं ब्रह्मणो जातं ब्रह्मणाग्निर्वि रोचते।।३।।

x ब्रह्मौषधयो नि तिष्ठन्ति ब्रह्म वर्षन्ति वृष्टयः।
ब्रह्मेदं सर्वमात्मन्वद यावत् सूर्यो विपश्यति।।४।।

शौ.१९.४२.१. ब्रह्म होता ब्रह्म यज्ञो ब्रह्मणा स्वरवो मिताः।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोत्तिरते हविः।।५।।

शौ.१९.४२.२क-घ ब्रह्म *स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्यता।
ब्रह्म यज्ञस्य तन्तव ऋत्वियो ये हविष्कृतः।।६।।

x ब्रह्म ऋषभो भद्ररेता ब्रह्म गावो हविष्कृतः।
ब्रह्म रथस्य देवस्य यज् +जयाति स्वरङ्कृतः।।७।।

x ब्रह्मणा शीरं वहति ब्रह्मणा युज्यते रथः।
ब्रह्मणा पुरुषो द्विपान्न व्यथते चरन्।।८।।

---

२ ग का. ब्रह्ममे * दादित्या;

३ क-ग का. . . . वदति। * * * वसते। सावित्रे. . .;

४ कख का. व्रह्म ओषधयो न * * वर्षन्तु * ;
घ का. * सर्यो *।

५ ख-घ का. * सुरो मिता। . . . . . .व्रह्मणेत्तिरते * ;

६ क का. * मृचो . . . .; उ. * सृचो. . . .;
द्र. ६ख-घ का. नास्ति पादत्रयम्।

७ ख का. * * हविष्कृत।
घ का. युञ्जेयाति (→ते) स्वरंकृता।
उ. यज्ञाति *।।

८ क का. * सादं वनति;
गघ का. * भ्यपानं * चरं;

x ब्रह्मणो जाता ऋषयो ब्रह्मणो राजन्या उत।
ब्रह्मेदं ब्रह्मणो जातं ब्रह्मणो (ऽ)विष्या+ अन्नम्।।९।।

x ब्रह्म शूद्रा राजन्यानां ब्रह्मैषामुत विक्षदः+।
ब्रह्मैषां भद्रं सादनं ब्रह्मणैषां सभासदः।।१०।।

x ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत।
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्म उत वावन।।११।।

x ब्रह्मोद्धतो* निवतो ब्रह्म संवतो वानस्पत्याः
पर्वता ब्रह्म वीरुधः।
ब्रह्मेदं सर्वमन्वा ततानान्तरा द्यावापृथिवी उभे।।१२।।

---

९ क मा. * ज्ञातो * ;
घ का. * विष्यन्नं। उ. * विस्या *।।

१० ख का. . . . . चिक्षतः; मा. ब्रह्मैषांमुत *। उ. . . . वीक्षदः।
द्र. < विश्+सदः; तु. पा. ८.२.३६, ४१। पदमिदमन्यत्रालभ्यम्।
घ का. . . . . सभासदा।

११ कख का. * दासद् * दासाद् ब्रह्मेसे * *।
मा. * दासा * * ब्रह्ममे * *।
घ का. * ब्रह्मोथ वावना।

१२ का. ब्रह्मोभ्यतो * ब्रह्मशर्व सर्वतो वानस्पत्या पर्वता वीरुधः . . .
सर्वमन्त्रा उतानामन्तरा * *।
क उ. ब्रह्मोघतो . . . ?
द्र. ब्रह्मसूत्र, २.३.४३ भाष्ये शंकरपादैरेके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्त इत्यारभ्येयमेव ऋगंशतउद्धृता। तत्र 'ब्रह्मैवेमे कितवा उत' इति पाठभेदो दृश्यते। श्रीकरभाष्येऽपि तथा।

x ब्रह्मैवाभूदुत्तरं जातवेदोरद्वज्रो
यातुधानं महालम्।
भवाशर्वौ तपुषीं हेतिमस्मै मयेषितौ वि
सृजतां वधाय।।१३।।

८.१०

यदश्विना ओषधीष्वासिक्तं पुष्करस्रजा
वीरुधो मधु बिभ्रति।
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्याः।।१।।

यदश्विना पुष्पादधि माक्षिकं मधु संभृतम्।
अन्ने लवणे यन्मधु तेना(हम.....)।।२।।

यदश्विना गुलुगुन्याञ्जने मधु संभृतं
यदस्मिन् मधुघे मधु।
[तेनाहम ......]।।३।।

---

१३ का. ब्रह्मैवाभवदुत्तरं * अदद्वज्रो * महाबलम्
भवशर्वौउपुषियं ... नयषितौ *** z४z अप्रूपव्रह्मसूक्तम् १ zz
खघ मा. व्रह्मेवाहूदुत्तरं * रद्वभ्रोजो **।
* तपुंषीं ... ।।
द्र. का. सर्वत्र ब्रह्म - इत्यस्य स्थाने व्रह्म- इति। का. पत्रस्य वामतो व्राह्मसूक्तं कारणं इति।
उत्कलीयहस्तलेखेषु ब-वयोर्भेदो नास्ति।

८.१०.१ कख मा. ......सिक्त *;
गङ का. ** बिभ्रतीनः तिनाहमस्य ..... नायः।
२ क का. अश्विना ....; मा. .....पुष्पादधि;
गघ का. * लवणेन मधुम तेन।
३ का. अश्विना गुग्गूलुंनाञ्जने * ... मधुगो *।

यदश्विनाक्ष मधु गोष्वश्वेषु यन्मधु।
सुरायां सिच्यमानायां कोलालेऽधि यन्मधु।
तेन [. . . . . . .] ।।४।।

यदश्विना गोवर्चसं हिरण्यवर्चसं हस्तिवर्चसमश्विना।
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्याः।।५।।

अभि नन्दमभि मोदमभि दर्पं कृणोमि ते।
आ ते भगं वर्तयतामश्विना पुष्करस्रजा।।६।।

दत्सु ते वर्चः सुभगे जिह्वायां ते मधूलकम्।
अक्ष्यौ निकरणी तव प्रतीकं मधुमत्तरम्।।७।।

आ सचस्व तलाशेव वृक्ष इवापतिकः पतिम्।
त्वं समग्रभीः पुंसः श्येन इवान्यान् पतत्रिणः।।८।।

---

४　क　उ. अश्विनाक्ष *;
　　ख　का. गोश्वश्वेषु . . . . .।
५　ग　का. . . . . मुर्धानामभि * *;
६　　का. . . . . . . . . मोजमभि तल्पं * *।
　　　या * * वत्तयेतामश्विना पुष्करस्सृजा।
७　　का. यदपूसु * * * * * मधूलक
　　　अक्षौ नकरणी * त्सु(→ प्र)तीकं *।
　　ख　मा. * * मधुलकं।
८　　का * शितस्य . . . . . . वृक्षैवापतिकष् पति।
　　　* समग्रभीत् पुंसश् * . . . . . पतन्त्रिणः;
　　ग　मा. * * पुंस;

आ हि ते हार्षमुदकमपो भगाभिषेचनीः।
यत्ते वर्चो ऽपक्रान्तं मुखस्य प्रतिचक्षणात्।
पुनस्तदश्विना त्वय्या धत्तां पुष्करस्रजा।।६।।

अभि त्वा वर्चसासिचं दिव्येन पयसा सह।
यथा पतिवत्यसो' देवृभ्यो मधुमत्तरा।।१०।।

भगं ते मित्रावरुणा भगं देवी सरस्वती।
भगं ते अश्विनोभा धत्तां पुष्करस्रजा।।११।।

पतिं ते राजा वरुणः पतिं देवो बृहस्पतिः।
पतिं त इन्द्रश्चाग्निश्च पतिं धाता दधातु ते।।१२।।

इति द्वितीयोऽनुवाकः

---

६ का. * यि . . . . . . . भगादिषेचनं। . . . . मनस्य प्रतिचक्षणः
. . . . दश्विन . . दत्तां पुष्करस्रजाः
ग म. . . . . पक्रान्तं;
ङ मा. . . . . . . त्वर्य्या धतां *।।
१० का. * * . . सासृजं * * *। * पतिविन्स्यसो देवऋग्भ्यो मनुमत्तरा।
गघ उ. * पतिपत्यसो * *।।
११ का. * * * * दिवी *। * * * दत्तां। आ दत्तां पुष्कर स्रज z
क उ. भगन् * *;
ग उ भगन्तेऽश्विनोभा;
द्र. पत्रस्याधोदेशे "भगंतेमित्रावरुणौभगंदिवीसस्वती भगंतअश्विनौ देवौआदत्तांपुष्करासृजम् पाठः" इति।
१२ क का. पतिपतिं * * *; उ. पतिन्ते * *;
गघ का. . . . . .दाता ददातु * z५z अनु २zz
ग मा. पतिन्त . . . . . धतातु *।।१०।।ऋ।।अनु२।।

८.११

चतस्रस्ते खल स्रक्तीरथो मध्यमहं खल।
धाराश्चतस्रस्तोष्यामि वेदिं मनुष्यवर्धनीम्।।१।।

ऊर्जस्वन्तमा रभध्वं स्फातिमन्तं पुनीतन।
इन्द्रो बीजस्याभ्यावोढा भग ऐतु पुरोगवः।।२।।

भगस्य ह्यनड्वाहौ युञ्जाथां राशिवाहनौ।
अधा पृथिव्याः कीलालमिहा वहतमश्विना।।३।।

अभिवृतः परिहितो धान्येन विभुः प्रभुः।
भर्ता मनुष्याणां जज्ञे देवानामाज्यं खलः।।४।।

स्रुच+ आसन् पवनीः +सृणीकाः परिधिष्कृतः।
कीनाशा आसन् होतारो +बीजदा
आसीद्धविष्पतिः।।५।।

---

१ गघ का. . . . . .स्तोष्यामि। * मानुष्यवर्धिनीं z
मा. धाताश्च . . . . . * *।।

२ का. ऊर्जस्वतमा * स्फातिवन्तं पुनीदिनः . . . .
भगैतु पुरोगव।
कख म उर्ज्जस्वन्तमा रवध्वं *.*।

३ का. * हनड्वाहौ यंजात राशिर्वाहनौ अधाष् * . . . . . . वहत्तमश्विना;
गघ मा. * * कीलालसिहा . . . . .।
द्र. मा. प्रथमार्धान्ते दण्डद्वयमस्ति। मन्त्रान्ते एको दण्डः।

४ का. अभिहितः * धानेन विभुष् * धर्ता . . . . खल .;
ख-ग उ. * विभु *। * * यज्ञे;

५ का. स्रुचासंपनी सृणीका परिष्कृत। * सं नोतारो * साद्धविष्मतिः;
मा. सृत आसन * शृणीकाः . . . . . .।
कीलाशा * * विजदा. . . . . .।।
म. सृच * * शृणीकाः . . . .। * * * विजद. . . . . .।।

इहेन्द्र मुष्टी वि सृजस्व पूर्णाविह सौमनसः समृध्यताम्।
हुतादो ये च गन्धर्वास्त इह स्फातिं समा वहान्।।६।।

अतिपश्यो निचायक इडुकः पक्वमा भर।
ईशाना गन्धर्वा भुवनस्य सर्व आ वहन्तु खले
स्फातिमिह [1]सूनृतां च।।७।।
आ पश्चादा पुरस्तादोत्तरादधरादुत।
इन्द्रेह वसोरीशानः खले स्फातिं समा वह।।८।।

स्फातिमिन्द्रः खले बह्वीमिहोत् प्राण उत् पृणत्।
स्फातिं मे विश्वे देवाः स्फातिं सोमो अथो भगः।।९।।

स्फातिर्मे अस्तु हस्तयोः स्फातिर्यत्र परारभे।
शतहस्तेदमुत् पृण समुद्रस्येव मध्यतः।।१०।।

---

६ का. . . . . .मुष्टिर्ध्य . . . . . होतारो * * . . . हि * ममावहः।
कख मा. . . . * * सृजसु पर्णाविह * *।
७ कख का. * नृचायक यडूकष् . . . . .।
ख उ. * . . . . भरः।
गघ का. * * * सवहन्तु . . . . . सौनृतां च।
उ. . . . . . . सुनृताञ्च।।
८ का. . . . . . . . पुरस्तादुत्तरा . . . .।
इन्द्राय . . . . . .हां;
ग मा. इहेन्द्र वशोरी . . . . .;
९ ख-घ का. . . . प्राणमुत् *। स्फाति * * देवा * * * *।
मा. . . मिहो * * पुणत। * * * देवा * * ऽथो *।।
घ म. * * ऽथो * ।।
१० ख-ग का. . . . . . . मारारभे। शतहस्तेनमुत् *;
ख मा. स्फातियत्र *।

इह मे भूय आ भर यथाहं कामये तथा।
यथेदमुदिव स्फायातै त्रय इव हस्तिनः सह।।११।।

८.१२

स्वाद्वीं त्वा मित्रावरुणा स्वाद्वीं देवी सरस्वती।
स्वाद्वीं त्वा अश्विना सुरे कृणुतां पुष्करस्रजा।।१।।

यामसिञ्चन् सौधन्वना विश्वे देवा मरुद्गणाः।
यामश्विनासिञ्चतां सा सुरा बहुधावतु।।२।।

स्वादोः स्वादीयसी भव मधोर्मधुतरा भव।
यथर्श्यस्येयमारिश्येवा त्वं सुभगे भव।।३।।

अभ्राज्ञातं वर्षाज्ञातमथो जातं दिवस्परि।
अथो समुद्राज्ञातं तत् सुरादरणं भव।।४।।

---

११ क का. * * भूया *;
गघ का. यथेयमुद्य * त्रैव * * z१z
ग मा. . . . . . . स्फ्यायाति;

८.१२.१ कख का. नास्तीदं पादद्वयम्। ख मा. स्वादीं * *।
ग का. स्वद्विंयं ता * *; मा. स्वादीं * * *;

२ कख का. . . . . . .सौधन्विना * * मरुद्गणा
क मा. . . . . . सौधन्वाना;
घ का. मा मुना *।

३ क का स्वादो स्वादीयमी * ; मा. स्वादो * *;
म. स्वादो (→:) स्वादीअ (→य) सी *;
गघ का. अयत्रृष्येस्ययवमार्ष्येवाक्त्यं * *।
मा. यथर्श्वस्येयमा . . . . .।।
द्र. < यथा ऋश्ययस्य इयम् आर्शी ?

४ कख का. अभ्राजातं वर्षाजातंमथो * विदम्परि।
घ का. * सुरादगणं *। मा. * सुरादणं *।।

नाडी नामासि जनुषा सा सुरादरणी भव।
सखा हि भद्रस्त आसीद् वृक्ष(:) स्वादुविकङ्कतः।।५।।

असुरस्त्वौर्ध्वनभसश्चकार प्रथमः सुरे।
सुरे दासस्य त्वा गृहे शिरश्चान्धश्च चक्रतुः।।६।।

निष्पुष्पकं कशीकाया निर्धारायाः सुरामुत।
उदेहि वाजिनीवति किमङ्कतिष्विच्छसि।।७।।

इमे ते जन्या आसते गम्भीरा अभिधृष्णवः।
सुरे देवि परि प्रेहि मादयन्ती जनंजनम्।।८।।

यस्या गृह्णन्ति स्थालेन गामश्वं धान्यं वसु।
सा सुरा वहुधावतु।।९।।

कख पै.८.८.६क,९कआचरन्तीः पर्वतेभ्यः खनमाना अनभ्रयः।
यासां समुद्रे संस्थानं यासां नास्ति निवेशनं
तास्ते ददतु बुद्बुदम्।।१०।।

---

५ ख-घ का. * सुराधरणी *। * * भद्रस्थासी वृक्ष स्वादुविकंगत।
गघ मा. * ही . . . . . . .वृक्ष स्वादुविकंकंतः।।
६ का. . . . . . . . स्तऊर्ध्वनभसश्चकार * स्वरे।
* दासश्चि * * . . सिरश्चान्धस्य चक्रतु।
कख म. . . . . . श्चकारः * *।
७ खग का निर्धाराया . . . . .। उदीहि * . . . मंकती . . . ।
८ कख का. किमेतंजन्यासते गस्तीराभिवृष्णव।
घ मा. मादयन्ति *।।
९ क का. अस्या गृह्णा *;
ख मा. गामस्वं * *।
१० ख का. * अनभ्रय।
ङ का. . . . . .वुद्दुदं; मा. . . वदतु वुदुयुदं।।
म. . . . . . वुदुवुदं।। द्र. ९ग-१०ख पुनर्लिखितम्।

इदं कोदचेमां सुरा यां हृदा कामयामहे।
तां मे भगस्तामश्विना तां मा बट् सरस्वती। ।११। ।

अयं देवो मयूलशः सा सुरादरणं ददत्।
संस्रवणात् प्रस्रवणाद् गिरिभ्यस्पर्याभृतः।
मध्ये शतस्य मष्टिष्कोऽनड्वानिव मेहतु। ।१२। ।

८.१३

(ऋ.४.५८; काठ. ४०.७)

समुद्रादूर्मिर्मधुमाँ उदार-
दुपांशुना सममृतत्वमानट्।
घृतस्य नाम गुह्यं यदस्ति
जिह्वा देवानाममृतस्य नाभिः। ।१। ।

---

११ क का. * कुरुचेमां सुरां; मा. इदं कोद-दचेमा * ;
गघ का. तावन्म . . . . .तावन्मा वड् * ।
घ मा. तां वट * ।
१२ कख का. * * मयूलषश् श्वशुरादरणं * ।
मा. * * मयुलशः * * * ।
ग का. * परिस्रवणा ;
घ उ. गिरिभ्यःस्पर्या . . ।
ङच का. * * मप्सिष्को नड्वानिम * z२z
मा. * * मष्टिष्को (?). . . . . । ।
म. * * मुष्टिष्को . . . . . । ।
८.१३.१ का. . . . दुर्मिमधुमां. . . . मानत्; उ. . . . . मधुमाङ्.
ख म. * स्यम . . . ।

वयं नाम प्र ब्रवामा घृतस्या-
स्मिन्यज्ञे धारयामा नमोभिः।
उप ब्रह्मा *शृणवच्छस्यमानं
चतुःशृङ्गो ऽवमीद् गौर एतत्। ।२। ।

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आ विवेश। ।३। ।

त्रिधा हितं पणिभिर्गुह्यमानं
गवि देवासो घृतमन्वविन्दन्।
इन्द्र एकं सूर्य एकं जजान
वेनादेकं स्वधया निष्टतक्षुः। ।४। ।

एता अर्षन्ति हृद्यात् समुद्राच्-
छतव्रजा रिपुणा नावचक्षे।
घृतस्य धारा अभि चाकशीमि
हिरण्ययो वेतसो मध्य आसाम्। ।५। ।

---

२ का. ह्वयंनामा * * * . . . नवोभिः। * व्रह्माश्छृणवश् * * वमीद् गोर *।
ग उ * * शृणुवत् सस्यमानं;
घ मा. * वमी * *। ।

३ कख का. * शृङ्गस्त्रयो * * द्वि * * *. *।
उ. * * * ऽस्य * * * * * ऽस्य।

४ क का. * हिकं. . . . .;

५ का. * * * समुद्राश् * निपुणा *। * * * चाकशीसि * रितसो * *;
घ मा. * * * मदृध्य *। ।

सम्यक् स्रवन्ति सरितो न धेना
अन्तर्हृदा मनसा पूयमानाः।
एते अर्षन्त्यूर्मयो घृतस्य
मृगा इव क्षिपणोरीषमाणाः।।६।।

सिन्धोरिव प्राध्वने +शूघनासो
वातः प्रमीयः पतयन्ति +यह्वाः।
घृतस्य धारा अरुषो न वाजी
काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः।।७।।

अभि प्रवन्त+ समनेव योषाः
कल्याण्यः स्मयमानासो अग्निम्।
घृतस्य धाराः समिधो नसन्त
ता जुषाणो हर्यति जातवेदाः।।८।।

---

६ कख का. * * * * देवा . . . . .सूयमानाः;
खग उ. न्तहृदा * *। * ऽर्षन्त्यूर्मयो *;
द्र. मन्त्रान्ते का. ओँ मृग इव क्षिपणोरीषमाणास्;
उ. छेदलक्ष्म।
७ का. . . . . . रिवं * सूघनासो वातःप्रिमयष् * यह्वां * * अर्षो *
* * भिर्मर्त्यूर्मिभिष् *;
उ . . . . . शुभनासो . . . . जिह्वाः।
८ क का, मा. * प्रवन्ति . . .; म. * प्रवन्तः . . . .;
ख का. * सयमानासो *। उ * * ऽग्निं।
ग का. * * * नसन्ति;
गघ मा. * धारा * * * युषाणो * * ।।

कन्या इव वहतुमेतवा उ
अञ्ज्यञ्जाना अभि चाकशीमि।
यत्र सोमः सूयते यत्र यज्ञो
घृतस्य धारा अभि तत् पवन्ते।।९।।

अभ्यर्षत+ सुष्टुतिं गव्यमाजी-
मस्मासु भद्रा द्रविणानि धत्त।
इमं यज्ञं नयत देवता नो
घृतस्य धारा मधुमत् पवन्ते।।१०।।

धामन्ते विश्वं भुवनमधि श्रित-
मन्तः समुद्रे हृद्यन्तरायुषि।
अपामनीकात् समिथाद् य आभृत-
स्तमश्याम+ मधुमन्तं त ऊर्मिम्।।११।।

---

९ का. * * वातमतेतवा *। अन्यजाना * चाकशीति।
मा. * * . . तुमेतवा इ् * * चाकंशीमीमि।

१० का. अभ्यर्ष * गव्यमाजमस्सासु . . . .। . . . . प्लवन्ते।
क उ. अभ्यरुषत * *; घ मा. * * मधुमधुमत् *।।

११ क का. . . . . . शृत- ; ख मा. * * हद्यन्त-।
गघ का. . . . . . समिधाद्याभृतस्तपश्यामि * कुरूर्मिम् z३z
घ उ. -स्तमशाम मधुमन्त उर्मि।।

८.१४

(ऋ.१.९५)

द्वे विरूपे चरतः स्वर्थे
अन्यान्या वत्समुप धापयेते।
हरिरन्यस्यां भवति स्वधावाञ्
शुक्रो अन्यस्यां ददृशे सुवर्चाः।।१।।

दशेमं त्वष्टुर्जनयन्त गर्भ-
मतन्द्रासो युवतयो विभृत्रम्।
तिग्मानीकं स्वयशसं जनेषु
विरोचमानं परि षीं नयन्ति।।२।।

त्रीणि जानात् प्रति भूषन्त्यस्य
समुद्र एकं दिव्येकमप्सु।
पूर्वामनु प्रदिशं पार्थिवाना-
मृतून् प्रशासद् वि दधावनुष्ठु।।३।।

---

८.१४.१ क-ग का. * विरूप चरत . . . . वत्ससुप * । . . . . . स्वधावां;
ख-घ मा. ऽन्याऽन्या . . . . . । हरिरण्यसां * स्वधावान् सुक्रो ऽन्यसां
* * । ।
म. ऽन्यान्या . . . . । . . . . स्वधावान् * ऽन्यस्यां * * । ।

२ का. . . . त्वाष्टुर्जनयन्त . . . . . * विभृतं ।
* सुयशसं * * * धीं * ।

३ क मा. * जातात् परि भूषंत्यस्य; म. * * * भूषंत्यस्य;
घ मा. . . . प्रशास * . . . वनष्टु । । म. . . . . . * . . . वनष्टु । ।
का. -मृभून् * * . . . . . z

क इमं वो निण्यमा चिकेत
वत्सो मातृर्जनयत स्वधाभिः।
वह्वीनां गर्भो अपसामुपस्थान्
महान् कविर्निश्चरति* स्वधावान्।।४।।

आविष्ट्यो वर्धते चारुरासु
जिह्मानामूर्ध्वः स्वयसामुपस्थे।
उभे त्वष्टुर्बिभ्यतुर्जायमानात्
प्रतीची सिंहं प्रति जोषयेते+।।५।।

उभे भद्रे जोषयेते न मेने
गावो न वाश्रा उप तस्थुरेवैः।
स दक्षाणां दक्षपतिर्बभूवा-
+ञ्जन्ति यं दक्षिणतो हविर्भिः।।६।।

---

४ क उ. * * * निण्र्ण्यमा *
कख का. * * * * . . . चिकेतु * मातृञ् जनयति;
द्र. ख-घ का. 'स्वधाभिः। . . . . . निश्चरति' इति नास्ति।
घ उ. * कवि नि. . . . .।।
५ का. * व-वर्धते . . . जिह्मानामूर्ध्व स्वयशामु. . .।
* . . . विभ्यन्तर्जायमात् प्रतीचीं * * जोषयते।
क मा. आविष्ट्यतो * रारुरासु ; म. आविष्ट्यतो * . . . . ;
घ मा. * सिहं * योषयेते।। म. * * * योषयेते।।
द्र. < घ. . . . . स्वपसामुपस्थे?
६ का. . . . वाग्रा * तस्थुरेवै। * दक्षिणां . . . . . भूवा युञ्जन्ति
* * *;
क उ. * * योषयेते * *;
गघ उ. . . . भूवांयन्ति * * *।।

उद् +ययंमीति सवितेव बाहू
उभे सिचौ यतते भीम +ऋञ्जन्।
+उच्छुक्रमत्कमजते सिमस्मान्
नवा मातृभ्यो वसना जहाति।।७।।

त्वेषं रूपं कृणुत उत्तरं यत्
संपृञ्चानः सदनं गोभिरद्भिः।
कविर्बुध्नं परि +मर्मृज्यते धीः
सा देवताता समितिर्बभूव।।८।।

उरु ते ज्रयः पर्येति बुध्नं
विरोचमानं महिषस्य धाम।
विश्वेभिरग्ने स्वयशोभिरिद्धो-
ऽदब्धेभिः पायुभिः पाह्यस्मान्।।९।।

धन्वं स्रोतः कृणुते गातुमूर्मिं
शुक्रैरूर्मिभिरभि नक्षति क्षाम्।
विश्वा सनानि जठरेषु धत्ते-
ऽन्तर्नवासु चरति प्रसूषु।।१०।।

---

७ का. * यंयमी . . . . सम यजते * रुञ्जन्।
उश्छुक्रमस्मद्ध्रुमजते समस्मा * * नसना *।
क मा. * यंयमिति . . . .; म. * यंजमिति. . . . .;
खग उ. * * * रञ्जन्। उछुक्रम . . . .;

८ ख मा. * सदनः. . .।
गघ का. कविव्रध्वं * समृज्यते धीस्मा * सवितुर्बभूव।
ग उ. . . . . मर्मिये धीः;

९ का. * * * पतेषु बध्नं * महिषस्व *।
. . . राग्ने स्वयशोरिद्धो . . . . पात्वस्मान्।

१० क का. * * कृणते गार्भमूर्मिं ; उ * श्रोतः * . . . .;
घ का. तुन्नवासु * * z

एवा नो अग्ने समिधा वृधानो
रेवत् पावक श्रवसा वि भाहि।
तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः। ।११। ।

८.१५

यो जामदग्न्य इह कौशिको य
आत्रेय उत काश्यपो यः।
भरद्वाजा गोतमा ये वसिष्ठा-
स्तेभ्यः प्र ब्रूम इह किल्बिषाणि। ।१। ।

अगस्त्ययः कण्वाः कुत्साः प्रस्रवणा
विरूपा गर्गा मुद्गला +यस्काः शूनकाः।
संकृतयो ब्राह्मणा ये न +द्रुग्धा-
स्तेभ्यः प्र ब्रूम इह किल्बिषाणि। ।२। ।

---

११ कख का. एव * * समिध घृणानो * पावकश् * * *।
ख उ. * * शवसा * *।
८.१५.१ क का. * * * कौशिक; द्र. 'य' इति नास्ति।
उ * जामदग्निय * *;
ग का. भारद्वाजा गौतमा यं . . . . ब्रूम * किल्विषाणि।
मा. भरद्वाजो गोतमो वशिष्ठा-; म. * * * वशिष्ठा- ;
२ का. * काण्वष्कुत्सापस्रवणा विश्वरूपाः * * अयस्काः
शौनकास् * व्राह्मणा * * दुग्धास्तद्यः * ब्रूम * किल्विषाणि z
क मा * कण्वा * *; म. * * * प्रश्रवणा;
खग उ . . . . जस्काः *। संहृदयो व्राह्मणे * * दृग्धा-;
घ मा . . . * वृम * *। ।

यो नोत्तिष्ठाद् ब्राह्मणे नाधमाने
मान्द्येन दृप्त उत धैर्येण।
विश्वे देवा उपद्रष्टारो ऽस्य
तस्मिन्विषं सं नयान् किल्बिष्यम्।।३।।

या रोपयः किल्विषे ब्राह्मणस्य
यानि चैनांसि वहुधा दुष्कृतानि।
अनुतिष्ठन् प्रोक्त आत्मनि तं नि धत्ते
तथा तद्देवा उत वेशयन्ति।।४।।

नाश्नीयान्न पिवेन्न शयीत*
न *निंसीत जायां नोत पुत्रम्।
व्रह्मकिल्बिषे प्रोक्त
उदेव तिष्ठेत् स ऋतस्य पन्थाः।।५।।

शतर्चिनो माध्यमा ये महर्षयः
क्षुद्रसूक्तानामुत या प्रजेह।
ऋषीणां यानि जनिमानि विद्म-
स्तेभ्यः प्र ब्रूम इह किल्बिषाणि।।६।।

---

३ का. * नोतिष्ठाद् ब्राह्मणो * नान्येन तृप्त * *
* * * त्र * इषं * नयां किल्विष्यं।

४ का. * रोपयं किल्विषे व्राह्मणस्या थानि जीनांसि * *।
अनुतिष्ठं प्रोक्तात्मानु * * * तस्मै . . .।
ख मा. . . . . दृष्कृतानि।

५ का. नाश्नीयां न पिवेयं नशैत * निंशै(भु→)तु . . . .
व्रह्मकिल्विषे प्रोक्तौदेव तिष्ठे स्व रितस्य पन्था;
कख . उ. . . . .शैन्न निंशित * (मा. जायान्) . . .।

सोदर्याणां पञ्चदशानां शतानां
त्रयस्त्रिंशदुदशिष्यन्त देवाः।
एकस्मिन्विद्धे सर्वे ऽरुप्यं
तद् ब्राह्मणे किल्बिषमन्वविन्दन्।।७।।

तस्मै स द्रुह्याद्य इदं नाय-
द्यो नोत्तिष्ठाद्यो न वदाता अस्मिन्।
ब्राह्मणस्य किल्बिषे नाथितस्य
सोदर्यतामिच्छतो[+] ब्राह्मणेषु।।८।।

उत्तिष्ठद् ब्राह्मणाः सं वदध्वं
जीतं याचाम पुनरैतु सर्वम्।
इन्द्राग्नी विश्वे देवा-
स्ते मे जीतं पुनरा वर्तयन्तु।।९।।

स दीर्घमायुष्कृणुते
स प्रजायै चिकित्सति।
यो ब्राह्मणस्य ब्राह्मणो
हूतो अन्वेति किल्बिषे।।१०।।

---

७ ख-घ का.....शदुतशिष्यन्तु *.....त्वद् ब्राह्मण किल्विषमन्वविन्दं।
ग मा.... न्विद्धे * रूप्यं। म.... न्विद्धे * *;

८ क-ग का. * तद् द्रुह्याद्दीदं ... नोतिष्ठाद्यो नो जातास्मिन्। ब्राह्मणस्य किल्विषं *;
क उ. * * दृह्याद्य *....;

९ का...... * विदध्वं * याचमि .. जितं .. वर्धयन्तु z
ख म. * याचामि(→म) .....;

१० क-ख का. * ..... ष्कृणोति सुप्रजाये जिगिश्छति।
ख म. * * चिकिछ(→त्स)ति।
घ का. हुतो न्रतु किल्विषे।
मा. * अन्येति किल्विषे।।

नास्य प्रजां शर्वो हन्ति
न रुद्रो हन्ति नाशनिः।
यो ब्राह्मणस्य ब्राह्मणः
सत्ये वदति किल्बिषे।।११।।

तं सोमपीथो जुषते
नृचक्षा ग्रावभिः सह।
यो ब्राह्मणस्यास्तां हृदः
सूर्य इवापालुपत्तमः।।१२।।

य उत्थाय किल्बिषे
ब्राह्मणस्यान्नसीच्छन्नवायति।
उभे एनं द्यावापृथिवी सं तपता-
मथैत्वगतस्य पन्थाम्।।१३।।

**इति तृतीयोऽनुवाकः**

---

११ ख-घ का. * * * नाशनि z यो व्रह्मणस्य * सत्यं * किल्विषे।
गघ मा. * व्राह्मस्य * * * किषे।। म. * व्राह्म (+ण)स्य * * * *।।
१२ का. त्वं * जुगुथे नृचक्षाद् * * * व्रा-व्राह्मणस्या . . . . सूर्यैवापा . . . .;
कख मा. * सोमपिथो * * श्रावभि *। म. * सोमपिथो * * * *।
घ उ. * इवापालपत्तमः।।
१३ का. * * किल्विषे व्राह्मणस्यांनमैश्छंनवायते उतैनं * सन्तप्तांमथैत्वक्तस्य * z५z अनु ३z
ख मा. . . . सीतूसन्न . . . ।
मा. . . संतप इति तृतीयपादसमाप्तिः।

## ८.१६

१क,ग,२क,ग३क,ग नव च या नवति-
शौ.६.२५.३,२,१ श्चारूढा वक्षणा अनु ।
इतस्ताः सर्वा नश्यन्तु
नुत्ताः पुत्थज्ञो मया । ।१ । ।

सप्त च याः सप्तति-
श्चारूढा वक्षणा अनु ।
इतस्ताः सर्वा नश्यन्तु
नुत्ताः पुत्थज्ञो मया । ।२ । ।

पञ्च च याः पञ्चाश-
श्चारूढा वक्षणा अनु ।
इतस्ताः सर्वा नश्यन्तु
नुत्ताः पुत्थज्ञो मया । ।३ । ।

---

८.१६.१ का. -श्चरूढा * नु यदस्तस्सर्वा णिश्यंत्य * प्रत्थज्ञो मयः;
ख मा. -श्चारुढा वक्ष्णा * । म. . . . . वक्ष्णा * ।
घ मा. नुत्ता पृत्थज्ञो * । ।
२ का. * ज यस् . . . . . * नु । यदस्तस्सर्वा णिश्यंत्यानुत्ताष्प्रत्थज्ञो मयः ;
उ. * * याः (मा. या) सप्ततिश्च । ।
३ का. * ज (→न्या) या पञ्चशश्चारूढा * नु । यदस्तास्सर्व नश्यन्त्यनुत्ताष् प्रत्थज्ञो मयः;
ख-घ मा. -श्चारुढा * * । . . . . . पृत्थज्ञो * । ।

तु.पै.४.७.६, ऊरुभ्यां ते ऽष्ठीवद्भ्यां
६.३.१३ पार्ष्णिभ्यां भंससः।
स्त्रिया जार इव
पुत्थङ्गीं प्र मृणीमसि।।४।।

अनुसृत्तां गहनेषु
ध्रूक्ष्णां पापीं शिमिद्वतीम्।
तामेतां दस्यूनां दासीं
प्र दहातश्चुकाकणि।।५।।

या स्त्रीणां पुत्रसदनं
केवटानुपसर्पति।
तामेतां दस्यूनां दासीं
प्र दहातश्चुकाकणि।।६।।

प्र पतातः सुकटनाळि
सुषेः कुषीतको यथा।
स्रक्वे ते तिप्रं धक्ष्यामि
सा नशिष्यसि पुत्थगि।।७।।

---

४ का. * द्वे * पर्ष्णिभ्यां भसमः * जारैव पुत्थगीन * *।
कख मा. उरुभ्यां * * पार्षिभ्यां *।
गघ मा. * * * पृत्थङ्गीं * *।। म. * यार * * * *।
५ का. अनसृत्तां अहनेषु पूक्ष्णां पापीयां शमिद्वतीं . . . तस्यूनां * * दहतश्चुकाकणि।
क मा. अनुसुत्तां *; ग म. . . दाशीं;
६ का. नास्त्ययं मन्त्रः।
७ का. * पताति सुकङ्गालि शुकेष्कुकीतको *। स्वक्वे * त्रिपुं धुक्षामि * * पुत्थगी।
कख मा. * * सुकुटाळि सुषे * *।
गघ उ. श्रक्के * * * * नसिष्यसि *।।

यदास्याः स्त्रक्वे दहे-
द्यदा मूर्धानमग्निना।
अथैषा दस्यूनां दासी
पुत्थगि नि लयिष्यते।।८।।

संवत्सरमचरो
असुरेभ्यः प्रतङ्किनी।
यत्र क्षेत्रस्य दुर्गन्धि
तत्त एतन् न्यञ्चनम्।।९।।

नैतत्तव मातरंस्था
न त एतन् न्यञ्चनम्।
अस्माकमेतद्वीरेभ्यो
देवैः प्रजननं कृतम्।।१०।।

---

८ का. . . . . . सुक्के दहेभ्यदा . . . . .। तामेता तस्यूना दासीं प्रत्थगे नलयिष्यते।

क उ. . . . . श्रक्वे . .;

ग मा. . . . . . * दासि ; उ. . . . ळयिष्यते।।

९ का. . . . . . मजरो सुरेभ्यषू पतंक्रिमीत्। * * * उत्तेतं न्यंचनं;

क उ. सम्वत्सरमचरो ;

ख म. * प्रतंकिनी।

घ उ. . . एत *।।

१० कख का. . . . . मातृणं स्थां न तेतन्यंचनम् ;

ख उ. * * एत *।

द्र. < १०क स्यान् ?

गिरौ ते ऽश्मपुत्र-
मुदकं हिमवत्सु ।
तत्रोपप्रस्कद्य नृत्य
जामियूथेषु पुत्थगि । ।११ । ।

स त्वं गोभिरश्वैः
प्रजया प्रतरं भव ।
यो मा तत्र प्राहैषी-
र्यत्र जीवन्ति भद्रया । ।१२ । ।

८.१७

(शौ.१६.१६)

मित्रः पृथिव्योदक्राम-
त्तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत
*सा वः शर्म च वर्म च +यच्छतु । ।१ । ।
वायुरन्तरिक्षेणो[दक्रामत् . . . . .] । ।२ । ।
सूर्यो दिवो[दक्रामत् . . . . .] । ।३ । ।

---

११ क का. गिरो तेस्मि पूत-; मा. * * . . . पुत्रंमुदकं * ।
गघ का. . . . . . . . नृतुप्रजामि यूथेग पुत्थगी ।
घ मा. . . . . . . पृत्थगि । । ।

१२ ख-घ का. * प्रजननं * । * * * प्राहीषी यत्र जीवंतु भद्रयः z१z
गघ मा. * * * प्राहैषी यत्र * * । ।

द्र. १२ख < प्रतरणं?

८.१७.१ का. . . . . * * * व । . . विशत् * * विशतु श्रावश् * * * *
यश्छतु ।

घ उ. शा . . . यछतु । ।

२ का. . . . . . क्षेणोस्;

३ का. * दिवश्;

चन्द्रमा नक्षत्रैरु[दक्रामत् . . . .]।।४।।
सोम ओषधीभिरु[दक्रामत् . . . . .]।।५।।
यज्ञो दक्षिणाभिरु[दक्रामत् . . . . .]।।६।।
समुद्रो नदीभिरु[दक्रामत् . . . . .]।।७।।
ब्रह्म ब्रह्मचारिभिरु[दक्रामत् . . . . .]।।८।।
इन्द्रो वीर्येणोदक्रामत्तां[पुरं . . . . .]।।९।।
देवा *अमृतेनोदक्रामन् तां[पुरं . . . . .]।।१०।।
प्रजापतिः प्रजाभिरुदक्राम-
त्तां पुरं प्र णयामि वः।
तामा विशत तां प्र विशत
सा वः शर्म च वर्म च यच्छतु+।।११।।

---

४ का. * त्रैरु।
५ का. * ओषधीभृत्;
६ का. * दक्षिणाभृत्; मा. नास्त्ययं मन्त्रः।
७ का. * नदीभृत्;
८ का. * ब्रह्मचारिभृत्;
१० का. * मृतेनोदक्रामन् तां पुरं प्र णयामि व। ते मा विशन्तु ते मा प्र विशन्तु ते वश्चर्म च वर्म् च यश्छतु।
क उ. * मृतेनोदक्रामन्ताम्।।
११ का. प्रजापतिः। . . . . . व। . . . . . विशन्तु ता * विशन्तु * वश् * * * * यश्छतु z२z
घ उ. शा * * * * * यछतु।। द्र. मा. पत्रस्य वामतः 'अथर्वाङ्गीरसं सूक्तं निळरुद्रं स्ततैव च। तथापराजितादेवि मधूसूक्त तथैव च। तथैव स्यान्तिकाध्याय अथर्वस्योत्तरे पठेत्।'

८.१८

संयुज्यन्तः प्रकृषन्तो
यद्वो देवा उपोचिरे।
तामेभ्यः सत्यामाशिष-
मिन्द्र खल्वां समर्धय।।१।।

अनड्वाहः सत्यावानः
सीरं कृणोतु मे वचः।
यत्राहैतद्धिताय ते
तत् पर्जन्यो (ऽ)भि वो वृषत्।।२।।

दिव्या आपो वः शक्वरी-
रनु वि यन्तु गह्वरे।
ऊर्जस्वतीर्घृतवतीः पयस्वती-
र्दृशे भवत मा गुहा।।३।।

---

८.१८.१ क का. सव्यऽजन्तष् प्रकृषन्त;
गघ का. . . . . . सत्यामाशिमिन्द्र * समृद्धयः;
घ मा. . . . . . समर्धये।।
२ खग का. * शृणोतु * *। अत्राहीतद्धिजायते;
ख उ. शीरं * * *।
घ मा. * पर्यन्योभि * *।।
३ का. * पो व . . . रनु मन्तु *। ऊर्जस्वती घृतवतीष् . . . .
भवथ * *।
ख म. . . . . . * यन्तु *।
ग मा. ऊर्जस्वतीः घृतवतीः . . . तीर्दशे * *।।

पै.८.१२.७ग उदेहि वाजिनीवती
पूर्णपात्रा त्विषीमती।
दुहाना पूषरक्षिता
काममेषां समा पृण। ।४। ।

इयं सीता फलवती
+शतवल्शा वि रोहतु।
इयं सहस्रभोगा
अस्या इन्द्र उपावतु। ।५। ।

कौ.२०.५ अश्विना फालं कल्पयता-
मुपावतु बृहस्पतिः।
यथासद्बहुधान्य-
मयक्ष्मं बहुपूरुषम्+। ।६। ।

यद्वो देवा उपोचिर
इह भूयः स्यादिति।
इह तामुत्पृणां वयं
देवीमुप ह्वयामहे। ।७। ।

---

४ का. . . . . . वाजिनीवति * * * पूषरक्षता। . . . . पृणः;
५ कख का. अर्हिं * * शतवलशं * *;
ख उ. शतवल्लिशा * *।
घ का. स्या * *।
६ का. * * कल्पयेतामुपावतु * यथामद्बहुधान्य . . . . . बहुपौरुषं।
घ मा. -मयक्ष्मां वहूपूरुषं। । म. . . . वहुपुरुषं। ।
७ क का. . . . . . उपोशिरे। मा. . . . . . उपेचिर;
ख उ. * भूय . . .।

इद म उत्पृणात्
स्फातिं म उत्पृणादिति।
राशिं मे वर्धयादिति।।८।।

स्फातिकारो बहुकारः
स्फिरस्फोष्टायमक्षितः।
खलो ज्येष्ठो विभुः प्रभुः।।९।

तस्मिन्धान्यं+ न्युप्यते
यवो व्रीहिरथो तिलः।
तस्य गृह्णीत यत्कृतं
परिक्षाय चतुःशतम्।।१०।।

शर्कारिवन्मयारव
चक्रीवत्किं च यद्दृषे।
तद्वै स्फातिरुपायती
सर्वमेवाति रुच्यते।।११।।

---

८ कख का. * व . . . . . * व . . . . .।
९ का. स्फातिं चकारो बहुकार . . . यमक्षिकः;
ग का. नास्त्ययं पादः।
द्र. ख < स्फिरः स्फेष्ठोऽयमक्षितः?
तु. पा. ६.४.१५७
१० क का. अस्मिंधांनुप्यते;
कख उ. तस्मिं धान्य * * . . . . तिळः।
११ का. शर्कार्यवन् नयावश्चक्रैवृत् किञ्च . . . .। . . . रिच्यसि।
ख मा. . . . यदृशे। म. . . . . यद्दृशे।
द्र. कख पाठः सन्दिग्धः।

महाञ्जने परा जहि
सहस्रापोषमर्दय।
बह्वी न ओषधे भव
समुद्रस्येव संस्रवः।।१२।।

८.१६

आज्यादजः समभव-
द्वेशेभ्य ओदना इमे।
तानपश्यद्बृहस्पतिः
स वै पञ्चौदनो ऽभवत्।।१।।

चतुर्धैतां समभर
ओदनांस्त्वं बृहस्पते।
अज आज्याज्जातः
स एषां पञ्चमो ऽभवत्।।२।।

धूमेन दिवमाप्नो-
त्यन्तरिक्षमुतोष्मणा।
दिश आप्नोति चक्षुषा
अजः पञ्चौदनः सवः।।३।।

---

१२ का. सहंजने * * . . . . षमन्दये।
* नोषधी * . . . . संस्रव z३z
ग मा. * * षेधे *;

८.१६.१ खग का. * * यये नातिपश्यन्वृ . . . * * पंञ्चोदनो *।
घ मा. * * पञ्चोदनो * । उ. ऽ नास्ति।

२ का. चतुर्ध्रियतां . . . भव। ओदनस्त्वं *।
* ज्याज्ञातस् * * * भव
ख मा. ओदनास्त्वं *। द्र. उ. ऽ नास्ति।

३ कख मा. * दिवमाप्नोतित्यन्त . . . .।
ख का. त्यन्त्यरिक्षमधोष्मणा। दिशाप्नोतू * * पञ्चमोदनस्यवः

या ते माता यस्ते पिता
भ्रातरो ये च ते स्वाः।
अजं पञ्चौदनं पक्त्वा
सर्वे तमुप जीवत।।४।।

शौ.१८.३.७२. ये ते पूर्वे परागता
अपरे पितरश्च ये।
तेभ्यो घृतस्य कुल्यैतु
शतधारा व्युन्दती।।५।।

ये सर्वदा ददति
ये वा पचन्त्योदनम्।
ते वै यमस्य राज्या-
दुत्तरे लोक आसते।।६।।

नातिरात्र आप्नोति
नैनमाप्नोत्युक्थ्यः।
नाग्निष्टोम आप्नो-
त्यजं पञ्चौदनं सवम्।।७।।

---

४ का. यत् * * यत् * * * यश्च मे स्वा।
* पञ्चोदनं * * . . . जीवित।

५ का. यत् * * * परे . . . . .। * * कुल्लीतु शतधारां विनृतीं ;
घ मा. शतधाराय व्यिुन्दती।।

६ का. * * ददत्ये * रचरन्त्योदनं . . . . . लोकासते।
क मा. * * वदति;

७ का. नातिरात्राप्रोतु . . . . नाग्निष्टोमाप्रोत्यजं * *;

दशरात्रेण सम्मितो
द्वादशाहेन कल्पते।
दीर्घसत्रेण सम्मितो
ऽजः पञ्चौदनः सवः।।८।।

तेषां बर्हिष्यं सर्वं
यन्नष्टं यच्च म्रियते
यच्च स्तेनो ऽपाजति।
येषां पञ्चौदनः सवः।।९।।

शौ.९.५.२७ या पूर्वपतिं वित्त्वा-
थान्यं विन्दतेऽपरम्।
पञ्चौदनं च तावजं
पचतो न वि *योषतः।।१०।।

२८ समानलोको भवति
पुनर्भुवापरः पतिः।
अजं पञ्चौदनं
दक्षिणाज्योतिषं ददत्।।११।।

---

८ का. * सम्यतो * *। दीर्घमात्रेण सम्यतो;
ग मा. दीर्घशत्रेण *;
द्र. मा. दीर्घशत्रेण सम्मितो द्वादशाहेन कल्पते इत्यधिकम्।

९ का य एषां * * . . यश्च स्ययतं यश्च * पायति य एषां पञ्चमो भव।
ख मा. . . . . म्रियेते।

१० का. * पूर्वं पतिं वित्वा यथान्नं * परम् * दनंच तावतं * * व्यांचतः। (मु. . . . व्यांशतः।)
कख मा. * पूर्वपति वित्वाधान्यं * परं। म. . . . वित्वा . . . * परं।
घ उ. * नि वि योखतः।।

११ ख-घ का. पुनर्भवापरष् * * चपञ्चोदनं दक्षिण्यज्योतिषं * Z४Z
मा. पुनभुवापरः *। * पञ्चोदनं दक्षिणां ज्योतिषं *।।

८.२०

सूर्यो मा वर्चसोक्षतू-
क्षतामश्विनोभा।
आदित्य ऊर्ध्व उच्चरन्
स उ मा वर्चसोक्षतु।।१।।

वर्चसा मां पितुरग्नि-
र्वर्चसा मा बृहस्पतिः।
सुरायाः सिच्यमानायाः
कीलालवर्चसेन मा।
तेन मामश्विनोभा
उक्षतां पुष्करस्रजा।।२।।

वर्चस्वन्मे मुखमस्तु
रोचमानं विषासहि।
तन्मा हिरण्यवर्चसं
कृणोमि पश्यतां प्रियम्।।३।।

---

८.२०.१ का. ** वर्चसोकृतूकृताम . . .। ** उत्तरं असौ मा . . . .।
क मा. ** वर्च्चसोक्षतु -;
घ मा. . . . वर्च्चक्षतु।।
२ क-ग मा. ** पितुरग्निवर्च्चसा माद् वृहस्पतिः। * सिच्यमानयाः ;
ग म. * शिच्यमानायाः;
घ-च का. * सा * मासश्विनोभा। * पुष्करस्रज।
३ का. वर्चस्वान्मे सुखमस्तु ** । योमा ** पश्यता *।
ख उ. * विषासहिः।

मधोरहं मधुतरो
मधुघान्मधुमत्तरः।
मामनु प्र विशतु वर्च
ऋषभो [+]वाशितामिव।।४।।

इदमाञ्जनमानजे
वर्चस्यमा कनिक्रदम्।
यथा क्रनिक्रदश्चराणि
वर्चसा च भगेन च।।५।।

वर्चसाग्निमा दधति
वर्चसोदेति सूर्यः।
यावद्वर्चो गोहिरण्यस्य
तावन्मे वर्चो भूयात्।।६।।

यावत्त्वं देव सूर्य
उद्यन्नभि विपश्यसि।
तावन्मा वर्चसाभि वि पश्य।।७।।

---

४ कख मा. . . . . . मधुत्तरो मधुघानमधु . . .।
ख-घ का. मधुमां *। . . . प्र विशन्तु * * ऽवाषितामिव।
घ उ. र्षभो वासितामिव।।

५ क-ग का. यदमांजनमानमवर्चस्वसा *। * कनिक्रदश्चराणि;
घ मा. वर्च्चसाच् * * *।।

६ खग का. वर्चसोयदति * . . . . गोर्ह्धिर्हिरण्यस;
ग < गोर्हिरण्यस्य।

७ का. . . . . . सूर्योघन्नभैवपश्यसि। . . . . र्चसाभ्यव *;
मा. यवत्वं * * . . . . विपश्यतिसि।। . . . . वर्च्चसा * *।।

पूर्णो भगस्याहं भूत्वा-
रुक्षं वर्चसो रथम्।
स मा वहतु सर्वदा-
युष्मन्तं सुवर्चसम्।।८।।

भगेनाहं परिहितो
वर्चसा द्रविणेन च।
यथा चराणि सर्वदा
रोचमानं विभावसु।।९।।

एवा मा भग आगम-
देवा मा वर्च आगमत्।
एवा मा तेज आगम-
देवा मा यश आगमत्।।१०।।

हिरण्ययेन चक्रेण
भगस्यापिहितो गृहः।
तं व्युब्जामि ब्रह्मणा
तस्य मे दत्तमश्विना
दत्तं मे पुष्करस्रजा।।११।

इति चतुर्थोनुवाकः

इत्यष्टम एकादशर्चः काण्डः समाप्तः।

---

८ क-ग का. पर्णो . . . . उक्षं * *। * * * सर्वदा।

९ का. भभगेनाहं * * * *। * * * * विभावसुः

१० का. यवा * भगागमदेवा * वर्चागमत् * * तेजागमदेवा * यशागमत्;

११ क-ग का. हिरण्येन . . . पिहतो * * युगूजांपि *;
ङ का. * * पुष्करस्रजः z अनु ५ zz इत्यथर्वणिकपैप्पलादशाखायां
अष्टमष्काण्डस् समाप्तः zz
काण्डान्ते उ. ।।२०।।ऋ।।अ४।। एकादर्शर्चकाण्डः समाप्तः।

# नवमः काण्डः

## ९.१

## (शौ. ५.२७)

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा
शोचींष्यग्नेः।
द्युमत्तमा सुप्रतीकस्य सूनोस्तनूनपादसुरो
विश्ववेदाः।।१।।
देवो देवेषु देवः पथो अनक्ति मध्वा घृतेन।
मध्वा यज्ञं नक्षति प्रोणानो नराशंसः +सुकृद्देवः
सविता विश्ववारः।।२।।
अच्छायमेति+ शवसा घृतेनेड़े वह्निं नमसाग्निम्।
स्रुचो अध्वरेषु प्रयत्सु।।३।।
स यक्षदस्य महिमानमग्नेः स इन्मन्द्रासु प्रयत्सु।
वसोश्चेतिष्ठो वसुधातमश्च।।४।।

---

काण्डारम्भे का. नवमंआरम्भष्कृताः z ओँ नमो नारायणाय z ओँ नमशृशारिकाभगवत्यैः ओँ नमस्सरस्वत्यैः zz zz ओँ . . . .;
उ. ओँ ......

१ ख का. . . . . . शुचींष्यग्नेः * * . . . नूनपादम्भसुरो विश्वेवेदाः;
क-ग मा. उर्द्ध्वा * * . . . । द्युत्तमा * . . . .;

२ का. * देवषु * * युक्त * * । * * * * नुराशंसस्सुक्षद्देवस् * *;
गघ मा. * * नक्षतित् प्राणानो * सकृद्देवः * * । ।
ग म. * * नक्षतित् *;
द्र. मा. २ख घृतेन इत्यतो द्वौ दण्डौ।

३ का. अश्छायमेति * घृतेन ईडे * नमसाग्निं * ध्वरेषु। प्रयुत्सु;
क उ. अछायमेति . . . .;
ग उ. शृचो * * । ।

४ का. सुवेक्षतस्य . . . . मग्ने स्वेनमिन्द्रसु प्रयुत्सु। वसुश्चेतिष्ठो . . . . . ।
ख मा. * इम्मिन्द्रासु * ।

द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः।
उरुव्यचसो धाम्ना पत्यमानाः।।५।।

ते अस्य वृषणो दिव्या नु योना।
उषासानक्तेमं यज्ञमवतामध्वरं नः।।६।।

दैवा होतार इममध्वरं नो अग्नेर्जिह्वेमभि गृणीत।
कृणुता नः स्विष्टिम्।।७।।

तिस्रो देवीर्बर्हिरिदं *सदन्त्विड़ा सरस्वती मही।
भारती गृणाना।।८।।

तन्नस्तुरीपमद्भुतं* पुरुक्षु।
त्वष्टा सुवीर्यं रायस्पोषं वि स्यर्त नाभिमस्मे।।९।।

वनस्पते अव सृजा रराणः त्मना देवेभ्यः।
अग्निर्हव्यं शमिता सूदयाति।।१०।।

---

५ का. * . . रन्यस्य विश्वेद् * ददंतेग्नेः। उरुव्यचस्व * पच्यमाना;
ग मा. उरूव्यचसो * * ।

६ का. * स्य * * न * । उषसानक्तेसं . . . . . * ;
मा. * * वृषणोष * * योनाः।

७ खग का. अग्नेर्जिह्वे भि गृणीतः * न * ;
मा. अग्ने जिह्वेमभि * ।

८ का. * . . . . सदंत्विडा * । महा * * ; कख उ. . . . सदंत्विड़ा . . . ।

९ क का. तंनस्तुरीषमद्भुतं *; मा. तं नस्तुरीयमद्भूतं * ।
म. तंनस्तुयीयमद्भुतं * ।
ख मा. * सूवीर्यं . . . . .;
ग का. * श्वत नाभिमस्महे।

१० का. * व * * सुमना * । . . . . * सूदयति;
मा. * * * रराण * * । । म. * * * रराण * * ।
ग मा. अग्नि हव्यां समिता * ।

अग्ने स्वाहा कृणु जातवेद इन्द्राय भागम्।
विश्वे देवा हविरिदं जुषन्ताम्।।११।।

६.२

(शौ. ५.२६)

यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह
वो युनक्तु।
युनक्तु देवः सविता प्रजानन्नस्मिन्⁺
यज्ञे सुयुजः स्वाहा।।१।।

इन्द्र उक्थामदानि यज्ञे अस्मिन्
प्रविद्वान् युनक्तु सुयुजः स्वाहा।
छन्दांसि यज्ञं मरुतः स्वाहा
मातेव पुत्रं पिपृतेह युक्ताः।।२।।

---

११ क का. * * कृणुहि . . . . . '
ग उ. * * हविरुदं *।।
द्र. मन्त्रसंख्या हस्तलेखेषु नास्ति।
६.२.१ का. यजुंषि * समिस्वाहाग्नेष् . . . . * * * * * प्रजानन्यस्मिन् * सयुज * ।
क मा. यजुंषि * * . .; म. यजु (→जूं)षि * * . . . .;
गघ मा. * देवः प्रजाननस्मिन् * षुयजः * ।।
म. * * * प्रजाननस्मिन् * * *।।
२ का. * युकृथामदानि * * * प्रनक्तु सयुजस् *। * * * *। . . . पिपृतेष्यकृत्व;
क म. * उक्थाम (→व) दानि * * ;
ग उ. * यज्ञे (→ज्ञं) * * ;

प्रैषा ᵏनिविद आप्रियो यजूंषि शिष्टाः
पत्नीभिर्वहतेह युक्ताः।
एयमगन् बर्हिषां प्रोक्षणीभिर्यज्ञं तन्वाना
अदितिः स्वाहा।।३।।
विष्णुर्युनक्तु बहुधा तपांस्यस्मिन् यज्ञे
सुयुजः स्वाहा।।४।।
त्वष्टा युनक्तु बहुधा नु रूपाण्यस्मिन् यज्ञे
[सुयुजः स्वाहा]।।५।।
इन्द्रो युनक्तु बहुधा वीर्याण्यस्मिन्
[यज्ञे ......]।।६।।
सोमो युनक्तु बहुधा पयांस्यस्मिन्
[यज्ञे ......]।।७।।
भगो युनक्त्वाशिषो न्यस्मां अस्मिन् यज्ञे
सुयुजः स्वाहा।।८।।

अश्विना ब्रह्मणेतमर्वाग्
वषट्कारेण यज्ञं वर्धयन्तौ स्वाहा।।९।।

---

३ का. ऍषानविदाप्रियो **। ... वर्तेहि युक्ता येमगं * प्रोक्षणेभिर्यज्ञं * दितिस् *। मु. वैप्तानविदाप्रिय ...
क उ. प्रैषामि विद आप्रिय; ख मा. शिष्टा ... ।
द्र. ३घ म. मन्त्रान्ते एको दण्डः।
४ का. .... * उपास्मिन् * सयुज * ।
५ का. *** वि रूपास्मिन्;
७ मा. *** पत्यांस्यस्मिन्।
८ का. * ..... न्यस्मास्मिन् * सयुज *।
ख मा. 'यज्ञे' इति नास्ति।
९ मा. अस्वना ....;

बृहस्पते ब्रह्मणेह्यर्वाङ्
यज्ञोयं स्वरितं यजमानाय धेहि स्वाहा।।१०।

६.३

आपः पुनन्तु वरुणः पुनात्वयं च यः पवते
विश्वदानीम्।
यज्ञो भगो अधिवक्ता विधर्ताग्निश्च नः पावयेतां
सूर्यश्च।।१।।

गघ
कौ.३३.६ कख
ऋ.१०.६७.२०कख
दशशीर्षो दशजिह्व आ रभे वीरको भिषक्।
मा ते रिषं खनिता यस्मै च त्वा खनामसि।।२।।

दशरात्रे किलासस्य वीरुधा वेद भेषजं।
इतस्तदभ्रियाखनं किलासं नाशयामि ते।।३।।

अपूस्वन्या वि होहति +धन्वन्यन्याधि तिष्ठति।
किलासमन्या नीनशद् वर्चसान्या समुक्षतु।।४।।

---

१० का. * व्राह्मणोष्यर्वान् यज्ञं वयं . . . . . Z२Z

६.३.१ का. * * * . . त्वय * * * *। * * * धिवन्ताग्निश्च * * सूर्यस्य।
घ उ. . . . . . पावयतां सूर्यश्च।।

२ कख का. * . . . जिह्वा * वीरुको *।
ग उ. * * र्षं * ;
घ का. स्मै * * *।

३ का. * णकिलमस्य * * * यतस्तुदभ्रियाखनं * * *।
ग मा. इतस्तवभ्रि . . . . .; म. इतस्त XX भ्रि . . .;

४ मा. . . . . . विरोवि * धन्वन्याधि *। किलामन्या नीनशर्द्वर्चसान्या
* ।।
ख म. धन्वन्याधि *।
का. धत्वंनन्याधि *।
घ का. . . . . समञ्जतु।

आज्येन घृतेन जुहोमि किलासभेषजम्।
वीरुधामग्रेः सङ्काशे किलासं नानु विद्यते।।५।।

पिशङ्गरूपो भवति कल्माषमुत संदृशि।
किलास नश्येतः परः प्र त्वा धक्ष्यामि वीरुधा।।६।।

यानि पृथगुत्पतन्ति नक्षत्राणीव संदृशि।
किलासं सर्वं नाशयन्नोघ इवाभ्येमि वीरुधा।।७।।

यदि वा पुरुषेषितात् किलास पर्याजगन्।
नमो नमस्यामो देवान् प्रत्यक्कर्तारमृच्छतु[+]।।८।।

शीर्ष्णस्ते स्कन्धेभ्यो ललाटात् परि कर्णयोः।
ओषध्या वर्षजूतया किलासं नाशयामि ते।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः।।९।।

पै.४.७.२कख ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्।
[ओषध्या वर्षजूतया किलासं नाशयामि ते।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः]।।१०।।

---

५ ग का. वीरुधानग्रेस् संकाशे;
घ मा. कीलासं . . . . .।।

६ कख का. पिशङ्गरूपय * क-कल्माषसुत *।
घ का. * * दक्षामि *; मा. * * धक्षामि *।।

७ गघ का. * * नाशयंनोभीवाद्येम *;

८ ख का. * पर्याजगं ; म. * पर्याजगत् (→न्?)।

९ क का, मा. . . . स्कन्देभ्यो;
ग का. 'वर्षजूतया' इति नास्ति।
ङ का. शस्ता वर्णाइत्यनरातिस्सहोषधी;
द्र. ङ तुल. शौ.१.२३.२ ग आ त्वा स्वो विशतां वर्णः।।

१० क का. ग्रीवाभ्यस्ता *;

अंसाभ्यां ते दोर्भ्यां बाहुभ्यां परि हस्तयोः।
[ओषध्या वर्षजूतया किलासं नाशयामि ते।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः]।।११।।

पृष्टिभ्यस्ते पार्श्वाभ्यां श्रोणिभ्यां परि भंससः।
[ओषध्या वर्षजूतया किलासं नाशयामि ते।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः]।।१२।।

पै.४.७.६कख *ऊरुभ्यां ते ऽष्ठीवद्भ्यां
पार्ष्णिभ्यां प्रपदाभ्याम्।
ओषध्या वर्षजूतया
किलासं नाशयामि ते।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः।।१३।।

६.४

सहैव वो हृदयानि सह विज्ञानमस्तु वः।
सहेन्द्रो वृत्रहा करत् सह देवो बृहस्पतिः।।१।।

---

११ क मा. असांभ्यान् * *; म. अंसाभ्यान् * *;

१२ ख का. * सस।

१३ का. ऊरूभ्यां द्वे ष्ठीवद्भ्यां * प्रापदाभ्यां * * * नाशयाम *। शस्ता वर्णा इत्यनरातिस्सहोषधी।
मा. उरुभ्यान् ते ष्टीवद्भ्यां; म. उरुभ्यान् * * ;
ग मा. किलाशं * * ।

द्र. १०-१३ का. हस्तलेखे एवं पुनर्लिखितम् —
ग्रवाभ्यस्त उष्णिहाभ्यष् कीकसाभ्यो अनूक्यात्
अंसाभ्यां ते दोभ्यां बाहुभ्यां परि हस्तयोः।
पृष्टिभ्यस्ते पाश्वभ्यां श्रोणिभ्यां परि भंससे।
ऊरूभ्यां द्वे ष्ठीवद्भ्यां पार्ष्णिभ्यां प्रापदाभ्यां।
ओषधा वर्षजूतया किलासं नाशयामसे।
शस्ता वर्णा इत्यनुरोतिस्सहौषधि z३z

६.४.१ गघ का. सेन्द्रो * * * * * । उ. . . . . * * सहि * *।।

समानमस्तु वो हृदयं समानमुतो वो मनः।
समानो अग्निर्वो देवः सह राष्ट्रमुपाध्वम्।।२।।

सं जानीध्वं सहृदयाः सर्वे संमनस स्थ।
नष्टो वो मन्युर्जीर्णेर्ष्या सह जीवाथ भद्रया।।३।।

यथा पुत्रः प्रवावदः पितृभ्यां वदति प्रियम्।
एवा यूयमन्योऽन्यस्मै जिह्वया वदत* प्रियम्।।४।।

सहैव वो धान्यानि समानाः पशवश्च वः।
सह पृथिव्यां वीरुधः सह वः सन्त्वोषधीः।।५।।

सह दीक्षा सह यज्ञो विवाहो वः सहासति।
सह प्रफर्वा नृत्यन्तु सह व स्त्रिय आसताम्।।६।।

सहैव वो वीर्याणि सहान्यान् रन्धयाध्वै।
सह पतत्रिणीमिषुमन्यस्मै हेतिमस्यत।।७।।

---

२ खघ　का. . . . . रो * समानमग्निर्वो * सा . . . .।
द्र.　का. 'समाना हृदयं मनः पाठः', मु. 'समानं हृदयं मन इत्यपि पाठः' इति लिखितं दृश्यते।
३　का. * * सहहृदयात् * संमनमस्तव। * * . . जीर्णेत्रृष्यात् *। * भद्रयः;
क　मा. सत्र् * संहृदयाः; म सत्र् * *;
४ कख　का. * * प्रवावद * वदतु *।
गघ　का. नास्ति। मा. * . . मन्योऽस्मै * वदति *।।
घ　म. * वदति *।।
६　का. . . . सहामतिः * * नृत्यन्ति * * * सतां।
७　का. सहै * * सात्यानि * सा . . . . मन्यस्सै हेतिसस्यत;
घ　मा. . . . . हेतिमश्यत।।

सं वस्यामि समितिं मधुना वाचमाञ्जिषम्* ।
युष्माकमन्ये शृण्वन्तूदितं सङ्गते जने । ।८। ।

युष्मान् मित्रा वृणतां युष्मान् प्रतिजना उत ।
युष्मात् ज्ञातित्वं प्रेप्सन्त्यमृतं मर्त्या इव । ।६। ।

सं समिधः समाकरं सह यूथा गवामिव ।
समानमस्तु वो मनो ज्येष्ठं विज्ञानमन्वित । ।१०। ।

तु. छा.म.ब्रा. इदं यदेषां हृदयं तदेषां हृदये भवत् ।
१.३.६ अथो यदेषां हृदयं तद् वेषां हृदि श्रितम् ।
समानमस्तु वो मनः श्रेष्ठं विज्ञानमन्वित । ।११। ।

इदं यदेषां मन एषां यानि मनांसि च ।
सध्र्यगिन्द्र तत् कृणु रथे पादाविवाहितौ । ।१२। ।

---

८ कख का. * वश्यामि सुमतिं * . . मांरिरषं;
उ. सम् * * * . . मांजिषं । द्र. < * वः स्यामि ?
गघ मा. . . . मन्व्ये शृण्वन्तु दितं * * । ।
घ का. . . . . सङ्ग्थे * । ।
६ का. युष्मान * वृणुतानिष्मान * * । युष्मै * प्रेष्ठंत्वमृतं मर्त्यायच ।
द्र. ६ग < युष्माँ उ. . . . ?
१० ख का. सा * . . . . ।
घ का. * . . नमन्वतः;
द्र. १० क म. * समिद्धः . . . . ? अक्षरचिह्नं कीटदष्टम् ।
११ क का. यदिं . . . . *;
गघ का. * . . . हृदं तदेषां * श्रुतं ।
च का. * . . नमन्वतः;
द्र. मा. प्रथमयोः पादयोर्मध्ये 'मधुनावाचमांजिषं' इति पठितम् ।
१२ क-ग का. यदिंयदेषं * * * * * मध्रियगेन्द्र तश्कृणु;

९.५

(शौ. १९.६)

सहस्रबाहुः पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम्।।१।।

त्रिभिः पद्भिर्द्यामरोहत् पादस्येहाभवत् पुनः।
तथा व्यक्रामद् विष्वङ् अशनानशने अनु।।२।।

तावन्तो अस्य महिमानस्ततो ज्यायांश्च पुरुषः।
पादस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।।३।।

पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्।
उतामृतत्वस्येश्वरो यदन्येनाभवत् सह।।४।।

यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य किं बाहू किमूरू पादा उच्येते।।५।।

---

१ ख का. सहस्राक्षास् *।

२ क मा. * पद्भिधाम . . . .;
गघ का. * व्यक्रामुद् विष्यं अशनाशयन्।

३ क का. * स्य . . . . . . .;

४ ख का. * * यश्च भव्यं।
ग मा. . . . . . त्वस्येस्वरो;
घ का. यदन्येनाभवत् सहः;

५ ख का. * व्यमकल्पयन्;
घ का. . . . . पादावुच्येते। मा. किमरु * *।।
म. किमुरू * *।।

ब्राह्मणोऽस्य मुखमासीद्
बाहू राजन्योभवत्। .
मध्यं तदस्य यद् वैश्यः
पद्भ्यां शूद्रो अजायत।।६।।

विराड्ग्रे सममभवद् विराजो अधि +पूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः।।७।।

यत् पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यं ग्रीष्म +इध्मः शरद्धविः।।८।।

तं यज्ञं प्रावृषा प्रौक्षन् पुरुषं जातमग्रशः।
तेन देवा अयजन्त साध्या वसवश्च ये।।९।।

तस्मादश्वा अजायन्त ये च के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः।।१०।।

---

६ क का. * * मुखमासीत;
ग का. * तदस्तु * *;
घ उ. * * ऽजायत।।
७ का. * समभरद् * * पौरुषात्। * * अभ्यरिच्यत * . . . पुरा।
खग उ * धि पुरुषः। * अत्यरुच्यत;
८ घ का. * इध्माश् . . . .।
मा. * इध्म शर्द्धविः।। म. * इध्म . . . .।।
९ कख का. . * प्रावृषात् प्रौक्षं * जातमक्रमः;
खग मा. * जातमग्रसंशः। * * अजयन्त;
ग म. * * अजय(→यज)न्त;
१० ख का. * * * चोभयदतः;
ग मा. * * यज्ञिरे तस्मा;

तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दो ह जज्ञिरे तस्माद् यजुस्तस्मादजायत।।११।।

तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशून् तांश्चक्रे वायव्यानारण्यान्
ग्राम्याश्च ये।।१२।।
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्।।१३।।

मूर्ध्नो देवस्य बृहतोऽंशवः सप्त सप्ततीः।
राज्ञः सोमस्याजायन्त जातस्य पुरुषादधि।।१४।।

चन्द्रमा मनसो जातश्चक्षुः सूर्यो ऽजायत।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत।।१५।।

---

११ खग मा. रुचः * यज्ञिरे। * * यज्ञिरे * ;
१२ ख उ. * पुरुषदाज्यं।
ग का. पशूस्तां चक्रिरे *;
द्र. ग < पशूंस्तांश्चक्रे . . . .?
१३ कख का. सप्तास्यास्सन् . . . स्त्रि * समिधाष् *;
ग का, मा. देवा यज्ञं *;
१४ का. * दवस्य वृहतो अंसवस्ससती राजस्सोमस्या . . . . zz ५ zz अनु १ zz
ख मा. शवः * सप्तती।
१५ का. नास्त्ययं मन्त्रः।
गघ मा. * . . . प्राण मुखादग्नि . . . . .।।

नाभ्यां आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्राङ् तथा
लोकाँ अकल्पयन्। ।१६। ।

इति प्रथमोऽनुवाकः

६.६

इमां खनाम्योषधिमदृष्टहननीमहम्।
अश्वस्यावो ददाति त्वा वैरूपो वाजिनीवति। ।१। ।

नादृष्टा वो जिह्वाः सन्ति न दन्ता हन्वोरधि।
नापि मध्यं नो शिरस्ते यूयं किं करिष्यथ। ।२। ।

कौ.११६.७द्र. इन्द्रामित्रा इन्द्रहता न व इहास्ति न्यञ्चनम्।
इन्द्रो वः सर्वासां साकं शक्रस्तृणेढु वृत्रहा। ।३। ।

---

१६ का. नास्त्ययं मन्त्रः।
क मा. * आसीदन्तरिक्ष;
गघ मा. * . . . . श्रोत्रांङ् * लोकाङ् * । ।५। ।ऋ१६। ।अ१। ।
म. * . . . . . * * लोकाङ् *। ।ऋ१६। ।अ१। ।

६.६.१ कख का. * खनास्योष . . . . .ष्टमहनीमहं।
ग मा. अस्वस्यावो * *; < अश्वः श्यावः ?

२ का. * हंनोरधि . . मध्यन्यं . . . . * * करिष्यतः zz zz औं ते यूयं किं करिष्यतः;
द्र. उ. मन्त्रान्ते काण्डिकाभागसूचकं लक्षणमङ्कितम्।

३ का. औं इन्द्रामित्रा इन्द्रंहता नू वह्यास्ति नुञ्चनं * * * * चक्रस्तृणेषु *;
गघ मा. * * सर्वासा * . . . स्तृणेतु * । । म. . . . . . स्तृणेढु → तु * । ।

अश्वतराँ अयःशफान् यानिन्द्रो अधितिष्ठति।
तैर्वोपि नह्येय ते मुखान्युदरसर्पिणः।।४।।

अपिनह्यमदृष्टानां मुखं पादा दृतेरिव।
उतैषां जिह्वा निष्कर्ता निर्दन्ता हन्वोरधि।।५।।

अवधिषमसृगादां नि क्रोड़ादा अलिप्सत।
अभैत्सं+ सर्वेषामाण्डानि ये अदृष्टाः पृथिवीक्षितः।।६।।

रिश्यासः पौरुषासो दर्भासो +वैरिणा उत।
पै.५.३.३घ मौञ्जा अदृष्टाः सैर्याः सर्वे साकं नि जस्यत।।७।।

अदृष्टानां सप्त जाता पृथिवी न शिशे मही।
तानिन्द्रो बाहुभ्यां *सर्वाञ्छक्रो अपावयत्।।८।।

ये वः सन्ति सप्त जाता अदृष्टाः पुरुषादिनः।
+ग्राव्णांशूनिव सोमस्य तान् सर्वान् प्र मृणीमसि।।९।।

---

४ क का. अश्वतरां। * या इन्द्रो * त्वैर्वो * नह्ये * . . न्यदुचसर्पिणः;

५ का. अपिनद्धमदृष्टना * पाद . । . * जिषून्ता न दन्ता हंनोरधि।

६ का. अवधिकमसृगादा न्य * लिप्सत। अभीत्सं . . षामांत्वानि * दृष्टाष्पृथिवीक्षिकः;

ग मा. अभैछं सर्वेमा . .; म. अभैछं . . . . .;

७ कख का. ऋष्यासष्पौरुषाक्षो * वीरणा *;

ख उ. * वैरुणा *।

घ का, मा. * * * जस्यच।।म. * * * जस्यच (→त)।।

८ ख का. * नि षसेमही।

घ का. सर्वांशक्रोनुपावपत्।

मा. सर्वांछक्रो *।। म. सर्वांच्छक्रो *।।

९ का. वयस्यन्तु * * दृष्टाष्पुरुषादिस। ग्राव्णांसूनिव * तयाहं * * * ।

गघ मा. ग्राव्णांशून इव * तान * * *।

म. ग्राव्णांशून इव * * * * *।।

य आत्मजा ये वस्तिजा य ऋषा य उ तोदिनः।
तेभ्यः खनाम्योषधिं येभ्यो बिम्बीवधः कृतः।।१०।।

अदृष्टेभ्यस्तरुणेभ्यो युवदूभ्य स्थविरेभ्यः।
आहार्षमुग्रामोषधिं येभ्यो बिम्बीवधः कृतः।।११।।

ये च दृष्टा ये चादृष्टास्तितीलाः+ शलुनाश्च ये।
तानग्ने सर्वान् सं दह क्रिमीननेजतो जहि।।१२।।

६.७

शीतिजला इति शीता वाता उपा वान्तु।
हिमेनाग्निरावृतो हिमेनाग्निः परीवृतः।।१।।

य(त्) त्वा देवा अपारुन्धन्ना समुद्रमधावयः।
हिमो जघान गोअजं हिमो अक्षं हिमश्छदिः।।२।।

---

१० कख का. आत्मजा * * रुषा * * तोदिम; म. . . . * रुषा . . . ।
ग मा. तेभ्य . . . . .;
घ का. तेभ्यो * कृत।
११ ख-घ का. धवभ्य * अहर्षमु . . . तेभ्यो * कृत z
ग मा. आहार्षमुग्रामो-मोषधिं;
१२ का. . . . . . स्तितीलाम्भ्यलुनांश्च *। तेनाग्ने * सन् * . . . ननेजितो * z१z
कख मा. ये त * * चादृष्टा . . . . . शनुनाश्च *।
घ मा. क्रीमीननेजतो *।।
६.७.१ का. शीतजलायत * वात * गन्तु . . . . ग्निनावृतो . . . . . परीवृता;
२ का. त * * उरुन्धंनात् समुद्रियमजावयः * * वो जं * वक्षं हिमत्सति।

हिमादधि प्र यामसि हिमे अद्य विमोचनम्।
यमवटं शतदरमवैन्ध सप्तवध्रये।।३।।

अवका तत्र रोहतु खदे परि बिलं तव।
अर्चिष्टे अग्रे प्रथममङ्गारौं अपरौं उत।।४।।

गृभ्णामि ब्रह्मणा नाम धामधाम परुष्परुः।
शीतिका नाम ते माता जलाषो नाम ते पिता।।५।।

इह त्वमन्तरा भव बाहीकमस्तु यद्रपः।
हिमे जातोदके वृद्धा सिन्धुतस्पर्याभृता।
तया ते अग्रभं नामाश्वमिवाश्वाभिधान्या।।६।।

आमा नामास्योषधे तस्यास्ते नाम जग्रभ।
अगस्त्यस्य पुत्रासो मा वि धाक् पुरुषान् मम।।७।।

---

३ ख-घ का. * ग्य *। हिमवटं शधरनर्धेन्द्रस्सप्तवध्रे।
४ ख का. खले * * *। . . . . .
मा. * * विलन्तव। म. * * विळन्तव।
घ का. . . मङ्गारां अपरां उत।
मा. . . . . मङ्गारात्तमपरात्तं उत।।
म. . . . मङ्गाराङ् अपराङ् उत।।
५ कख का. गृब्णामि * * धामधा परुष्परुः;
ख मा. * परुस्परुः।
६ क मा. * . . . . . . भ;
ख का. बाहीकुमस्तु यद्रपा;
घ का. . . . स्पर्याभृत।
च का. . . वाश्वापिधान्या;
७ ख का. तस्यास्त * जग्रभः।
घ का. * * धातु * * ।

मा नो अग्ने तन्वं मा वासांसि रीरिषः।
यं त्वा समुद्रज वयमारोहाम् स्वस्तये। ।८। ।

दिवस्तारा अवापद्रन् धारात् समुद्रिया अपः।
हिरण्यकुम्भो हरितो (ऽ)वकाभिः परिवृत-
स्तेनाग्निं शमयामसि। ।६। ।

शमयाम्यर्चिरग्नेः शिवस्तपतु मा वि धाक्।
गृभीते द्यावापृथिवी गृभीतं पार्थिवं रजः। ।१०। ।

नि मुञ्जेषु यदुदकं नि नड़ेषु यदन्तरम्।
यत् समुद्रे यत् सिन्धौ तेनाग्निं शमयामसि। ।११। ।

वेतसस्यावकाया नड़स्य वीरणस्य च।
रोहितकस्य वृक्षस्याग्निं शमनमुद् भरे। ।१२। ।

आयतीरुदहार्यो वि ते हरन्तु यद्रपः।
परायतीः परावतः परा हरन्तु यद्रपः। ।१३। ।

---

८ खग का. सा वासंस्य *। * ता * . . . .;
ग मा. नान्त्वा समुद्रय . . . .; म. यन्त्वा समुद्रय . . . .;

६ कघ का. दिवस्तादा वापद्वुन् * * अप हिरणकुम्भो * * । परिवृते . . . ग्रीं * ।

१० का. . . . र्चिरग्ने शिषस्तस्तु * * धा;

११ क उ. * वंयेषु . . . .;
ख का. * नद्रे(→भ्रे) षु . . . . . ।
घ का. तेनाग्न्यं * ।

१२ क का. वेतमस्यावकाया; मा. वेतसस्यावकायां;
घ का. रोहीतक...स्याग्नि शमनमुद्धरे।

१३ का. आयती उतजार्यो * * * येद्रपः * परावतं * वहन्तु यत्तपः;

शौ.६.१०६.३कख हिमस्य त्वा जरायुणाग्रे परि व्ययामसि।
शीतिके शीतमित् करो हिमिके हिममित् करः। ।१४। ।

६.८

अक्षण्वता लाङ्गलेन पद्वता पतयिष्णुना।
लाङ्गूलगृह्य[+] चर्कृषुर्वृकेण[+] यवमश्विना। ।१। ।

शौ.६.३०.१, देवा एतं मधुना संयुतं यवं
छा.म.ब्रा.२.१.१६ सरस्वत्यामधि वणावचर्कृषु[+]ः।
इन्द्र आसीत् [+]सीरपतिः शतक्रतुः
कीनाशा आसन् मरुतः सुदानवः। ।२। ।

हिरण्ययं कलशं सुदानवो दिव्यया सरघया कृतम्।
अव भृतमश्विना यवं तद् युवं मधु चक्रथुः। ।३। ।

---

१४ का. . . . . . पर *। * शीतिमित् *हिमके. . . . . किर z२z

६.८.१ का. अकृण्वता * * पथयिष्णुना। लाङ्गूलगृह चरक्रषुर्वृकेणैवमश्विना।

क मा. अक्षण्यता लाङ्गलेन;

गघ मा. लाङ्गूळमृह्यचकृषुवृकेण . . . . . . । ।

म. लाङ्गूळमृह्यचकृषु . . . .। ।

द्र. १ग पा. २.१. ७२ काशिका द्र.।

२ का. * * * संयुक्तं * . . . त्यामधु मणावचरक्रषु। * * सेरपतिश् * * मन् * *; ख उ. . . . चकृषुः।

ग मा. * आसीच्छीरपतिः *;

म. * आसी छीरपतिः *;

३ क का. हिरण्मयं कलमं *; द्र. ख का. 'सरघया' इति नास्ति।

द्र. ३ग-४ख 'यवं' इत्यतः - 'मश्विना' इत्यवधिको भागो नास्ति।

क्रिशावेतदजयतमश्विना सारघं मधु।
ततो यवो व्यरोहत् सो (ऽ)भवद् विषदूषणः।।४।।

तु.पै.६.११.११कख युवार्वान् +सरघायाः प्रखिद्य मध्वाभरत्।
[ततो यवो व्यरोहत् सो .......]।।५।।

यद् वृकं मधुपावानमवामयतमश्विना।
[ततो यवो .........]।।६।।

कैरण्डा नाम सरसो वृकस्य वम्या अधि।
ततो यवो व्यरोहत् सो (ऽ)भवद् विषदूषणः।।७।।

यदस्य भरथो मधु सरघा सथ्वच्छिनत्+।
सद्यस्तदर्वतो युवं पुनरा दत्तमश्विना।।८।।

यो यवं दिगृधविद्धो अहिदष्ट उपासरत्।
तीर्थे रध्रमिव मज्जन्तं उत्तं भरतमश्विना।।९।।

---

४ गघ का. ** विरोहत् ** विषदूषणा;

५ का. यवार्यायां सरघायष्पृषायमश्वाभरत्।
मा. ... सरघाया प्रक्षिद्य .....।।
म. ..... सरघाया * .....।।

६ का. ** ... वानसवावयत्तमश्विना।
ख मा. ..... मयतमस्विना।।

७ का. ** सरथो * संस्याधि। * यतो विरोहत् ** विषदूषणाः;
द्र. मा. ७-८ मन्त्रयोर्मध्ये ५-६ पुनर्लिखितौ।

८ कख मा. यवस्य *** सथ्वछिन्नत्।
म. ...... सथ्यछिनत्।
ख-घ का. ...... सत्कश्छनत् (सर्थश्चरत्-बेरेट्) सद्यस्तुसर्वतो * .
..... धत्तमश्विना।

९ कख का. * वं * हिदेष्टेपाचरत्;
घ का. ..... मश्विनाः z ३z

यं वहन्त्यष्टायोगाः षड्योगा यं चतुर्गवाः।
स ते विषं वि बाधतामुग्रो मध्यमशीरिव।।१०।।

६.६

पै.८.३.११　यस्य यव प्रसर्पस्यङ्गमङ्गं परुष्परुः।
तस्माद् यक्ष्मं वि बाधस्वोग्रो मध्यमशीरिव।।१।।

+शकलं च न् ते यवान्या रुहन्त्योषधीः।
यव इद् यावयाद्घोरश्वात् पुरुषाद् विषम्।।२।।

यवो राजा यवो भिषक् यवस्य महिमा महान्।
यवस्य मन्थं पपिवानिन्द्रश्चकार वीर्यम्।।३।।

आ भरामृतं घृतस्य पुष्पमा भर।
अनभ्रिखात ओषध इदं दूषय यद् विषम्।।४।।

---

१०　का. सयं . . . . . योगा * * चतुर्गवा। सर्वे * * * धातामुग्रो . . ।
क　मा. * वहंत्य . . . . .; म. * वहंत्व . . . .;
ख　उ. * यञ् *।
द्र.　६.८.१० = का.६.६.१
६.६.१　का. यस्यैव . . . . . . * विषं * बाधस्व उग्रो . . . . .।
२　का. शकंलं * * * युवान्यान् हन्त्योषधीः यवैद्यावयायद् . . .;
क　उ. शकळं * * * *;
३ क　का. * * * भिषग्;
गघ　मा. * * पपिवांनि . . . . . .।।
४ ख-घ　का. * . . . रभ। अनभ्रिषातोषधै * दूष * * ;

य आयन्ति दिग्धविद्धाः शूद्रा राजन्या उत।
चक्षुर्मे सर्व आदृश्य ते यन्त्यगदाः पुनः।।५।।

९.१०

पै.५.१७.८ङ जीवातवे न मर्तवे शिरस्त आ रभामहे।
२.२.३गघ द्र. रसं विषस्य नाविदमुद्नः फेनमदन्निव।।१।।
भूम्या मध्याद् दिवो मध्याद् भूम्या अन्तादथो दिवः।
मध्ये पृथिव्या यद् विषं तद् वाचा दूषयामसि।।२।।

अश्वत्थे निहितं विषं कपाले निहितं विषम्।
शिलायां जज्ञे तैमातः प्रथमो विषदूषणी।।३।।

विषस्याहं वैन्दकस्य विषस्य दार्व्यस्य च।
अथो विषस्य स्वैलस्य समानीं वाचमग्रभम्।।४।।

तदिद् वदन्त्यर्थिन उत शूद्रा उतार्याः।
विषाणां विष्वगर्थानां सर्वथैवारसं विषम्।।५।।

---

५ का. इ हायन्तु दिग्धविद्धा * * *। . . . सर्वादृश्य * यंतुकदा * z४z

९.१०.१ ख का. शिरस्ता *।
घ का. -मुध्नष् . . . . . .;
मा. . . . फेननमदन्निव।।

२ कख का. * * * मध्या * त्वादथो *;

३ क-ग का. * निहतं * * निहतं विषम् शिलायां * *;
खग मा. * निहिते *। * यज्ञे *;

४ का. . . . वैर्दकस्य * दाल्भ्यस्य *। * * मैत्रस्य सामानीं . . .।
ग मा. * * स्व्यैलस्य;

५ कख का. . . . . . वदंत्वर्थित * * उतार्य
क उ. . . . वदंत्यर्थिन;
ग मा. विषाणा *; का, म. * विश्यगर्या(का. र्ता)नां;

ख पै.५.८.२ख　परुषस्त्वामृतकर्णो विष प्रथममावयत्[+]।
यथा ह तं नारोपयस्तथास्यरसं विषम्।।६।।

यद् वो देवा उपजीका उद्देहं शुषिरं ददुः।
पै.५.८.८गघ　तत्रामृतस्यासिक्तं तद्यकारारसं विषम्।।७।।
पै.४.१६.६कख　शकुन्तिका मे अब्रवीद् विषपुष्पं धयन्तिका।
न रोपयति न मादयत्यरसं शार्वीयं विषम्।।८।।

अत्यपप्ताम दुर्गाणि शारीः शकुनयो यथा।
इहेन्द्राणीं वरुणानीं सिनीवालीं क्रकोढ्याम्।
ग्राह्यं शूरपुत्रां देवीं याचामो विषदूषणम्।।६।।

---

६　का. पुरुषस्त्वामृतकण्वो * प्रथममावयम्। * तन्वारोपयस्तथा . . . . .।

७　का. * * * उपचीका उद्वेहं शुशिरं दधुः तत्रा मृतम्यासिक्तं उश्चाकारा . . . . .;

कख　मा. यम् * * * . . . विदुः।

क　म. यम् * * *;

८　का. शकुन्तिक * व्रवीद् * * * * * सादयत्यरसं सार्व्यं * z

ख　मा. विषपुष्पन्दयन्तिका। म. विषपुष्पन् *।

द्र.　८घ < शार्वेयं?

६ कख　का. अभ्यपप्तानि * सारीश् * * । . . . . . * * क्रकोष्यां गृहौं * देवं * *।

गघ　मा. . . . . . वरणानीं शिनिवालीं *;
म. . . . . शिनीवालीं *;

च　मा. जाचामो *।।

आलकं व्यालकं व्यावं जाल्म जिगीमहे।
जरद्विषं युवाभिषक् वयमित् सासहामहै।।१०।।

पै.१९.२३.९ अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत्।
कख पै.३.४०.६ अस्थुर्विषस्यारोपयो (ऽ)नड्वाहः क्रिशा इव।।११।।

यावत् सूर्यो वितपति यावच्चाभिविपश्यति।
तेनाहमिन्द्रदत्तेन कृणोम्यरसं विषम्।
तद्विषमरसं विषमधोभागरसं' विषम्।।१२।।

९.११

मातरिश्वा समभरद्धाता समदधात् परुः।
इन्द्राग्नी अभ्यरक्षतां त्वष्टा नाभिमकल्पयत्।।१।।

---

१० ख-घ का. यावं जाल्प *। चरद्विषं यवाभिषग् वयमिच्छासामहे;
ख मा. * जीगीमहे। म. * जी(→जि)गीव(→म) हे।
ग उ. * जुवाभिषक्;
द्र. १० कख मा. 'व्यावं' इति पादचिह्नम्। म. 'व्यालकं' इति पादचिह्नम्।
ग तु. ९.९.३क।
११ क का. अस्ता द्यौरयात् . . .; उ. अस्थाद्यौ . . .;
गघ का. अस्थुर्विश्वस्यारोपयो * कृषा यवः;
द्र. ११घ < कृशा *?
१२ क मा. याव * * ;
खग का. यावश्चाभिवपश्यति। . . . मिन्द्रतत्तेन;
ङच का. उद्विषमरसं विषमधोभागेरसं * zz५z
उ. . . . . . . . . . . विषमथोभागरसं *।।१०।।ऋ।।
९.११.१ क उ. * समभवद्;
ख का. * समधात् *।

भवस्त्वा अभ्यरुक्षद् रुद्रस्ते अंसुमाभरत्।
रात्री त्वाभ्यगोपायत् सा त्वं भूते अजायथाः।।२।।

द्यौष्ट आयुर्गोपायदन्तरिक्षमसुं तव।
माता भूतस्य भव्यस्य पृथिवी त्वाभि रक्षतु।।३।।

यां त्वा देवाः समदधुः सहस्रपुरुषं सतीम्।
सा देवी त्वमस्येदमपाज व्यजा विषम्।।४।।

याः पुरस्तात् प्रस्यन्दन्ते दिवा नक्तं च योषितः।
आपः पुरु स्रवन्तीस्ता उ ते विषदूषणीः।।५।।

आतपस्ते वर्षमासीदग्निश्छायाभवत्तपः।
उलूबं ते अभ्रमासीत् सा त्वं भूते अजायथाः।।६।।

---

२ का. भगस्त्वा भ्यनक्षद् . . . असुमाभरत् रात्रीस् . . . पाय * * *
अजायताम्।
ख मा. ऋद्रस्तेयंसुमा . . .। म. ऋद्रस्ते . . . .।
३ कख का. द्यौष्टायुर्गोपायदन्तरिक्षममुं *।
मा. . . . आयुरगोपा . . . . . मसुन्तव।
म. . . . . . . मसुन्तव।
४ का. * * * समदुदुस् सहस्व . . . . . * * जेवि त्तमस्येजमपाज .
. . . . . .;
५ गघ का. * पुरस् . . . . . उ भे विषदूषणी।
घ मा. * * * विषदूषणी।।
६ का. आतष्पस्ते . . . . . . . भवत्तमः। उत्वं * . . . . . .
अजायताम्।।

गन्धर्वस्ते मूलमासीच्छाखा+ अप्सरसस्तव।
मरीचीरासन् पर्णानि सिनीवाली कुलं तव।।७।।

अजरा देवा अदधुरमृतं मर्त्येष्वा।
तस्यैतदग्रमा ददे तदु ते विषदूषणम्।।८।।

पै.८.८.९कख द्र. अनभ्रौ खनमानं विप्रं गम्भीरे अपसम्।
भिषक् चक्षुर्भिषक् खने तदु ते विषदूषणम्।।९।।

याः पुरस्ताद वितिष्ठन्ते गावः प्रव्राजिनीरिव।
अमृतस्येव वा अस्यथो हास्यरुन्धती।।१०।।

पै.९.८.५कख द्र. यो मयः सरघायाः प्रखाय मध्वाभरत्।
ततो यवः प्राजायत्सोभवद् विषदूषणः।।११।।

---

७ कग का. . . . . . मासीश्छाखा पूसरस्तव।
. . . चीरासं पूर्णानि;
कख म. . . . मूळमासीछाखा . . . .।
मा. . . . . मासीछाखा . . . .।
घ उ. शिनीवाली कुळं *।।
८ कख का. * * ददुरमृतं . . .।
ग मा. तस्वैतदग्रमा *;
९ कख मा. अनभ्रयं (→भ्रौ) * * गंभीरे *।
ख म. * गंभीरे *। का. * * पूसं
ग मा. भिषत्कचक्षुभि . . . .*;
१० क का. * * वितिष्ठन्ति;
गघ का. . . . * स्यतो . . . . .;
११ का. * * * स्वरघाया पृषाय . . . . .। * * प्रजायतस्सो * विमदूषणा।
गघ मा. * * प्रजायत् * * विषणदूषणः।।

यवस्यैतत् पलालिनो गोधूमस्य तिलस्य च।
व्रीहेर्यवस्य दैव्येन कृणोम्यरसं विषम्।।१२।।

तु.पै.६.७.२,३ महीं योनिं समुद्रस्यान्वविन्दन् ऋतायवः।
तां देवा गुह्यामासीनां समुद्राच्चिदुदाभरन्।।१३।।

समुद्राच्चिदुदाभृत्य तामु पुष्कर आ दधुः।
अस्याः पृथिव्या देव्याश्चक्षुराकाश्यमसि
विषदूषणम्।।१४।।

इति द्वितीयोऽनुवाकः

## ९.१२

क,ग
शौ.१५.१७.८,९ द्र. समानमर्थं पर्यन्ति देवा रूपंरूपं तपसा वर्धमानाः।
यदादित्यमभिसंविशन्ति तदेकं रूपममृतत्वमेषाम्।।१।।

देवो देवेभिरा गमन् महान् नो अतिथिष्पिता।
स प्रैति जातवेदसमेकरूपो गुहा भवन्।।२।।

---

१२ मा. यस्यैतत् पळाळिनो * तिळस्य *।
म. . . . . पळाळिनो * तिळस्य *।
खग का. गोदूमस्य * *। . . . वस्य वसदैवेन;

१३ का. मही योन्यो . . द्रस्यान्ननिर्दंनृचायव।
* * . . मामीनां समुद्राश्च उदाभरं।

१४ कख का. समुद्राश्च उदाभृत्य उताम पुष्करा ददुः;
ख मा. . . पुस्कर * *।
घ उ. -राकास्यमसि *।।११।।ऋ।।अ२।।

१ का. . . . . पार्यन्ति * रूपोरूपं * वर्धमाना।
उदादितामभिमंविषन्ति तदेको . . . . . .;
ग म. . . . त्यमभिशंविशन्ति;

२ का. * . . रागमं मंहं * अदितिष्पिता सुप्रीत . . . . . * भवं;
ख मा. * * अतिथिप्सिता।

आतिथ्यमग्निं निरपप्तदेव
उभयेभिः पितृभिः संविदानः।
महान् नु मर्त्य उप भक्षं नागन्
संगृभ्यादित्या(न्) न्यविष्ट वह्निः। ।३। ।

त आ विशन्ति पुरुषं शयानं
प्राणा निविष्टा न ससन्त्येनम्।
ते नो रात्र्या सुमनस्यमाना
अह्ना रक्षन्त्यहृणीयमानाः+ । ।४। ।

पशुभ्यो नः पशुपते मृड सर्व सं वृह आयताम्।
मा नः प्राणेषु रीरिषः। ।५। ।

वायुः सत्ये अधि श्रितः प्राणापानावभिरक्षन्।
सं प्रजा ऐरयदिमाः* । ।६। ।

---

३ क का. . . . . थ्यमग्रिरवतुदेव;
ख मा. उभेयेभिः * सम्विदानः। म. * * सम्विदानः।
गघ का. * मरीया उपभक्षमागं मंगुर्भादित्यां निविष्ट * ;
४ का. ता * * * * निष्ट्वा निषसन्त्येनं * * * . . . मानाः अह्ना रक्षांत्वहृणीयमानां।
ख उ. * * * ससंत्येनं।
घ मा. अर्हा रक्षंत्यर्ण्णीयमानाः। ।
म. * रक्षंत्यर्ण्णीयमानाः। ।
५ का. * * पशुपतये मृडस् * स्योनिर्हायतां * * प्राणेपु * ;
द्र. ख < शर्व।
६ का. * * धिश्रुतः प्राणापानामभिरक्षं प्रदायुरेदिमां।
ग उ. * * यैरयदिमाः। ।

देवा यत्ताः प्रजापतावादित्याश्च येमिरे।
पूषा रश्मिष्वायत आदित्यो विष्णुराक्रमे
स रोहं दिवि रोहति।।७।।

खशौ.५.२५.५ ख प्रजाद्देवाः सवितुः सवे त्वष्टा रूपाणि पिंशतु।
अञ्जन्तौ मधुना पयो (ऽ)तन्द्रं यातमश्विना।।८।।

विश्वे देवाः प्र यातनादित्यासः सजोषसः।
पुरः पश्चात् स्वस्तये।।९।।

ब्रह्म वर्म बृहस्पतिः संगवो नोऽभि रक्षतु।
देवो देवैः पुरोहितः।।१०।।

मरुतो वृष्ट्या न आ गत सत्यधर्माण ऊतये।
अपराह्णेषु जिन्वत।।११।।

इन्द्रो राजा दिवस्पतिरहर्विमाय तिष्ठति।
स न इमाः कल्पयाद् दिशः।।१२।।

---

७　　का. * यत्ता . . . तासादित्याश्च *। * रश्मिषु यत्तादित्यो . . .
. . स्व * दिव *।

८　　का. प्रयातुदेवस् सवितु सर्वे * * * अंजन्तो * * अतन्द्रं यातुमश्विनां;
क　म. '-दूदे' इति अस्पष्टम्।

१०　ख　उ. सङ्गवो * * *।
ग　का. * * पुरोहिता।

११　क　का. * वृष्ण्या नागमत्;
ख　मा. * उतये।
ग　का. * जिन्धतः;

१२　　का. * * दिवस्परिरहन् मिमाय तिष्ठसि * नैमाष् * * Z9Z
ग　मा. श * * * विषः।। म. श * * * *।।

६.१३

(शौ.५.३०.१-१०)

आवतस्ते परावतः परावतस्त आवतः।
*इहैव भव मा नु गा मा पूर्वाननु गा गतानसुं
बध्नामि ते दृढम्।।१।।

यत्त्वाभिचेरुः पुरुषः सो यदरुणो जनः।
उन्मोचनप्रमोचने उभे वाचा वदामि ते।।२।।

यद् *दुद्रोहिथ शेपिषे स्त्रियै पुंसे अचित्त्या।
(उन्मोचन .........)।।३।।

यदेनसो मातृकृताच्छेषे पितृकृतादुत।
उन्मोचप्रमोचने उभे वाचा वदामि ते।।४।।

---

१ ख-ङ का. . . . . . आवत। इहेव * * * ग मा पूर्वां अनु * गता।
नमुं * * दुढं।
ग-ङ मा. इहै * * * * * पूर्वानुनु गा तानसुं * * *।। म. इहै * . .
.।।

२ कख का. यस् . . . . . . . . दनः; उ. य त्वाऽभिचेरुः . . . . .।
घ का. उभयवादा * *।
प्र. < यदरणः?

३ का. य दद्रोहित * स्त्री * चित्या z
क मा. य दृद्रोहिथ शेपिसे; म. य दृद्रोहिथ *; ख उ. . . . अचित्या।।

४ का. . . . . मातरिकृताश्छेषे पितृषुतादुत। *। उभय * * *।
कख म. . . . . . मातृकृताछेषे . . . .।
ग मा. उन्मोचनप्रमोचन;

यत्ते माता यत्ते पिता जामिर्भ्राता च सर्जतः।
प्रत्यक् सेवस्य भेषजं जरदष्टिं कृणोमि त्वा।।५।।

एह्येहि पुनरेहि सर्वेण मनसा सह।
दूतौ यमस्य मानु गा अधि जीवपुरा इहि।।६।।

अनुहूतः पुनरेहि विद्वानुदयनं पथः।
आरोहणमाक्रमणं जीवतोजीवतो (ऽ)यनम्।।७।।

मा बिभेर्न मरिष्यसि जरदष्टिर्भविष्यसि।
निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव।।८।।

शीर्षरोगो अङ्गरोगो यश्च ते हृदयामयः।
यक्ष्मः श्येन इव प्रापप्तद् वाचा नुत्तः परस्तरम्।।९।।

ऋषी बोधप्रतीबोधावस्वप्नो यश्च जागृविः[+]।
ते ते प्राणस्य गोप्तारो दिवा नक्तं च जाग्रतु।।१०।।

---

५ का. . . . जामनूभ्राता * सर्जत। * छेवस्य भेष * * ते।
ख मा. जामिभ्राता * * ।

६ का. येहियेहि . . . . * सनसा *। शतो * सानु * धि * हि।
घ मा. * जीवपुनरा *।।

७ क-ग का. अनुहतः. . . . . . . . णसाक्रमणं;

८ क का. सा बिभेन्न परिष्यसि;
गघ का. निर्वोचमं यक्ष्मसङ्गेभ्यो * * ।

९ का. शीर्षरोगमङ्गरोगं . . . हृदयामय। ययक्ष्म श्येनैव प्रापत्ततद् *
* परस्तं;

१० कख मा. * वोधः प्रति (→ती) वोधावस्वप्नो . . यागृविः।
म. * वोधः प्रतिवोधा . . . . . . यागृविः।
खघ का. . . . . . जागवि। * * प्रणम्य * * स्वप्नं * * z२z
घ उ. * नक्तञ्च जाग्रतुः।। १३।।ऋ।।

६.१४

(शौ.५.३०.११-१७)

अयमग्निरुपसद्य इह सूर्य उदेतु ते।
उदेहि मृत्योर्गम्भीरात् कृच्छाच्चित्तमसस् परि।।१।।

नमो यमाय नमोऽस्तु मृत्यवे
नमः पितृभ्य उत ये नयन्ते।
उत्पारणस्य यो वेद तमग्निं तत् पुरो दधे।।२।।

ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बलम्।
शरीरमस्य सं विदां तत् पद्भ्यां प्रति तिष्ठतु।।३।।

प्राणेनाग्ने चक्षुषा सं सृजेमं समीरय तन्वा सं बलेन।
वेत्थामृतस्य मा मृत मो षु भूमिगृहो भुवत्।।४।।

मा ते प्राण उप दसन्[+] मापानो अपि धायि ते।
सूर्यस्त्वाधिपतिर्मृत्योरुदायच्छाति रश्मिभिः।।५।।

---

१ गघ का. . . . . त्योर्गम्भीरत् कृश्छाश्चित्तमसस् *।

२ का. * * नममो * * * पितुर्भ्यः * * नयन्ति। उत्पारिणस्य * * त्वमग्निं पुरो *।

३ गघ का. . . . . . सं विदा * * * ष्यतु।
ग मा. . . . . स विद्वां;

४ क-ग का. प्राणेनाग्नय * * . . . . समीरय। * * सृजनेन वोत्थामृतस्य * * ;
गघ मा. वेथामृतस्य * * * सु * भूवत्।।
घ म. * सु * *।।

५ का. * * * * दसं . . . प धाय * ।
. . . . पतिर्मर्त्योरुदायश्छाति *।
क उ. * * * * सदन्;
घ मा. रुदायछाति *।।

इयमन्तर्वदत्युग्रा जिह्वा पनिष्पदा।
तया रोगान् वि नयामः शतं रोपीश्च तक्मनः।।६।।

अयं लोकः प्रियतमो देवानामपराजितः।
यस्मै त्वमिह जज्ञिषे दिष्टः पुरुष मृत्यवे।
तस्मै त्वानु ह्वयामसि मा पुरा जरसो मृथाः।।७।।

६.१५

(शौ.५.१७.१-७.१०,११,१२गघ)

तेऽवदन् प्रथमा ब्रह्मकिल्बिषे
ऽकूपारः सलिलो मातरिश्वा।
+वीडुहरस्तप उग्रं मयोभुव
आपो देवीः प्रथमजा ऋतस्य।।१।।

सोमो राजा प्रथमो ब्रह्मजायां
पुनः +प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसी-
दग्निर्होता हस्तगृह्या निनाय।।२।।

---

६ का. इमंतर्वद . . . . * मणिष्पदा तातयारोमं * नयासः।
* रोमीघ्र उक्सना।
द्र. क मा. र्वदत्यू इति पादोऽवसितः।
७ ग का. तस्मै . . . . . *; मा. * . . . . यज्ञिषे;
ङच का. * त्वानि ह्वेयामसि * * * मृधा z३z
६.१५.१ क का. तं वदं प्रथा व्रह्मकिल्विषे;
गघ का. वीडूहरस्तप * * अपोपो * * *;
ग मा. विडुहरस्तप * मयोभूव; म. विडुहरस्तप * * ;
२ का. * * * व्रजायां * प्रायश्छद् * अन्वन्तित्वा * मित्त्रो . . . .
हस्तगृह्या *।

हस्तेनेव ग्राह्य आधिरस्या
ब्रह्मजायेति चेदवोचत्।
न दूताय प्रह्ये तस्थ एषा
तथा राष्ट्रं गुपितं क्षत्रियस्य।।३।।

यामाहुस्तारकां विकेशीं
दुच्छुनां ग्राममवपद्यमानाम्।
सा ब्रह्मजाया प्र दुनोति राष्ट्रं
यत्र प्रापादि[+] शशः कल्कुषीमान्।।४।।

ब्रह्मचारी चरति वेविषद्विषः
स देवानां भवत्येकमङ्गम्।
तेन जायामन्वविन्दद् बृहस्पतिः
सोमेन नीतां जुह्वं न देवाः।।५।।

देवा एतस्यामवदन्त पूर्वे
सप्तर्षयस्तपसे ये निषेदुः।
भीमा जाया ब्राह्मणस्यापनीता
[+]दुर्धां दधाति परमे व्योमन्।।६।।

---

३ क का. हस्तैनैव * आदि . .
गघ का. * * प्रह्या तस्त * * राष्टे * *
ग उ. * * * * एषां

४ का. . . . . . विकेशी डतुप्रा गाममवपभ्यमाना * * प्र तिनोतु * * * शमु उलकखीमां

५ कख का. * * वेविशद्विषस् * * भावत्ये . . . .
ख मा. * देवाना . . . . .।
घ का. * निहतां * * *; उ. * * * जुह्वन् * * ।।

६ का. * . . स्यापजयंतु * . . . . स्तपस्ते * * * * ब्रह्मणस्यापिनिहिता दुग्धां ददाति * * ।
घ मा. दूर्द्धा ददाति * * ।। म. दूर्द्धा दधा (→दा) ति * * ।।

ये गर्भा अवपद्यन्ते जगद् यच्चापलुप्यते।
वीरा ये हन्यन्ते मिथो ब्रह्मजाया हिनस्ति तान्।।७।।

x　सर्वे गर्भाः प्रव्यथन्ते कुमारा दशमास्याः।
गघ शौ. १२　यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया अचित्त्या।।८।।

शौ.१०　पुनर्वै देवा अददुः पुनर्मनुष्या उत।
राजानः सत्यं कृण्वन्तो ब्रह्मजायां पुनर्ददुः।।९।।

तु.शौ.११　योपुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम्।
ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते।।१०।।

९.१६

शौ.५.१७.१८　न तत्र धेनुर्दुहे नानड्वान् सहते धुरम्।
विजानिर्यत्र ब्राह्मणो रात्रिं वसति पापया।।१।।

शौ. ५.१९.१५　न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति।
नास्मै समितिः कल्पते न मित्रं नयते वशम्।।२।।

---

७　　का. य * वपभ्यन्ते * यश्चापि . . . । * * हन्योन्ते * * * ताम्।
　ग　मा. * जे * * ; म. विरा * * * ;
८　　का. सर्व * * * * दशमास्या अस्मिन् * निरुद्ध्यते * दित्या;
　　उ. . . . अचित्या ।।
९　ग　मा. राजान * * ;
　गघ　का. * * कृण्वानो ब्रह्मजायांन . . . . . .।
१०　ख-घ　का. कृत्वा देवैर्नकिल्विषं * पृपृथिव्या भक्तोभगां . . . . Z४Z
　ख　उ. * देवीर्निकिल्विषं।
९.१६.१　क　का. * * धेनुद्रोहे;
　गघ　का. विजानियत्र ब्राह्मणो रातिं * *।
　ग　मा. विजानियत्र *;
२　खघ　का. ब्रह्मज्यामभि *। आस्मै * *;

असृङ्मती चरति ब्रह्मजाया
आशा लिम्पन्ती प्रदिशश्चतस्रः।
यः क्षत्रियः पुनरेनां ददाति
स दिवो धारां धयति प्रपीनाम्।।३।।

यो (ऽ)पुनर्दाय ब्रह्मजायां राजा
तल्पे निपद्यते।
दुर्योणा अस्मा ओषधीर्याः काश्चाभि-
विपश्यति।।४।।

विषमश्नात्यपां विषमश्नाति वीरुधाम्।
यो ब्रह्मजायां न पुनर्ददाति
तस्मै देवाः सुदिहं दिगृधमस्यां।।५।।

शौ.५.१७.८ उद्यत् पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः।
ब्रह्मा चेद्धस्तमग्रहीत् स एव पतिरेकधा।।६।।

---

३ का. असुङ्मती * व्रह्मजायां शालंपङ्क्तीष् . . . * * . . . ददातु
* * दारां ययातु प्रपीणां।
ग उ. य * . . . . *;
४ का. * . . . . . । * * कल्पे न पद्यते। दुर्योणो स्मा . . धीर्या
काश्याभिवपश्यती;
घ मा. -र्या . . . . . । ।
द्र. घ पाठाः सन्दिग्धाः। द्र. वै.प.को.१.३५७[@]
क म. 'ज्या' इत्युपरि।
५ कख का. . . . मुष्णात्यपा . . मुष्णाति *;
घ का. * * सुधियं . . . । म. नष्टाक्षरो लेखः।
६ क-ग का. तत् पदयो दिश * * व्राह्मणा . . चेद्धमग्रहीत्;

६ ब्राह्मण एव पतिर्न राजा नोत वैश्यः।
तत् सूर्यः प्रब्रुवन्नेति+ पञ्चभ्यो मानवेभ्यः।।७।।

६.१७

(१-४,६-१०शौ.५.१८.१-७,१३-१४)

नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे।
मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम्+।।१।।

+अक्षद्रुग्धो राजन्यः पाप आत्मपराजितः।
स ब्राह्मणस्य गामद्यादद्य जीवानि मा श्वः।।२।।

निर्वै क्षत्रं नयति हन्ति वर्चो
ऽग्निरिवारब्धः प्र दुनोति राष्ट्रम्।
यो ब्राह्मणं देवबन्धुं हिनस्ति
न स पितॄणामप्येति लोकम्।।३।।

---

७　　का. व्राह्मणेव पतिन्न * . . . . वैश्यत् * * प्रव्रुवन्नयतु . . . z५z
　ग　मा. * * प्रव्रुवेन्नति; म. * * प्रव्रूवन्नेति;
६.१७.१　　का. . . . . * * ददुस्तुभ्यं * * * * * * * नाड्याः;
　क　उ. नेतान् * * *; ख मा. * * अर्त्तवे। म. * * अन्तवे।
　घ　मा. . . . अनाढ्यां।। म. . . . अनादयां → ढ्यां।।
२　　का. अक्षदुग्धो * पापान्ममपराजितः। * * गामधतद्व्य * म श्वा;
　क　मा. अक्षदृगृधो *; म. अक्षदृगुधो *;
३ कख　का. . . . . . * * हन्त * ग्निर्वालब्धः पृतन्नोतु *।
　ख　उ. अग्निरिवारब्धः * * *।
　घ　का. त स्य . . णामप्येतु *।

देवपीयुश्चरति मर्त्येषु गरगीर्णो भवत्यस्थिभूयान्।
यो ब्राह्मणं मन्यते अन्नमेव स विषस्य पिबति
तैमातस्य।।४।।

शौ.५.१८.६द्र. विषं स पिवति तैमातं पश्यन्नग्निं प्र सीदति।
यो ब्राह्मणस्य सद्धनमभि नारद मन्यते।।५।।

शतापाष्ठां नि गिरति तां न शक्नोति निष्खिदम्।
अन्नं यो +ब्रह्मणां मन्यः +स्वाद्वद्मीति मन्यते।।६।।

य एनां हन्ति मृदुमन्यमानो
देवपीयुर्धनकामो न चित्तात्।
*सं तस्येन्द्रो हृदये अग्निमिन्ध
उभे एनं द्युष्टो नभसी चरन्तम्।।७।।

---

४ कख का. देवपीयूंश्चरति * गरगीर्त्यो . . . . . भूयां
खग मा. * . . त्यस्तिभूयान्। * * * अन्वमेव;
घ का. * * पिवति तैमातस्या;

५ गघ का. * * श्रद्धनमभि नार *;

६ का. सतापाष्ठा * षीदत * * शिखनोत निष्किदं अन्न * व्रह्मणा नन्दस्साद्मनमीत *।
ख मा. * * * निपूखिदं।
गघ उ. * * ब्राह्मणां * स्वादूदमीति *।।
द्र. ग < * * * मन्दः?

७ का. * * हन्य मृद * देवपीबनकामो * चिन्ता सन्तश्चे अन्धो * अग्निबन्धो उभैनं दध्ये * *।
क उ. * एनान् * * *;
ग उ. सन् . . . . .;
घ मा. * * दुष्टे (?) * *।।

न ब्राह्मणो हिंसितवा अग्नेः प्रियतमा तनूः।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः+।।८।।

अग्निर्वै नः पदवायः सोमो दायाद उच्यते।
जेता +अभिशस्तेन्द्रस्तत् सत्यं देवसंहितम्।।९।।

आविष्टिताघविषा *पृदाकूरिव चर्मणा।
सा ब्राह्मणस्य राजन्य तृष्टैषा गौरनाद्या।।१०।।

## ९.१८

(१-३,५,६ = शौ.५.१८.८-११,१५; ७-१० = शौ.५.१९.१-३,७)

इषुरिव दिग्धा नृपते पृदाकूरिव गोपते।
सा ब्राह्मणस्येषुर्दिग्धा तया विध्यति पीयकः।१।।

---

८ ख का. ग्रेष् * * ;
घ का. * स्याभिशस्तिपात्। उ. * अस्याभिशस्त्याः।।
९ क का. . . . . पदवाय;
गघ का. जयताभिशस्त इन्द्रस्तत् * * ।
उ. * अभिशस्त्वेन्द्रस्तत् * * ।।
१० का. . . ष्टितघहविषा प्रजाकूरिव शर्मणा।
ब्राह्मणस्य . . न्यस्तृपूसीषा गौरनाड्यः z९z
ग उ. < प्रदाकू . . . ।
घ मा. तृष्टेषा . . . .।।
९.१८.१ ख उ. प्रदाकूरिव * ।
गघ का. * . . . स्येषुन्दिग्धा * विध्यतु पीतया।

तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो
यामस्यन्ति शरव्यां न सा मृषा।
अनुहाय तपसा मन्युना चोत
दूरादव भिन्दन्ति ते तया।।२।।

जिह्वा ज्या+ भवति +कुल्मलं वाङ्
नाडीका दन्तास्तपसा सुदिग्धाः।
तेभिर्ब्रह्मा विध्यति देवपीयून्
+हृद्‌बलैर्धनुर्भिर्देवजूतैः।।३।।

x ये ब्राह्मणं हिंसितारस्तपस्विनं
मनीषिणं ब्रह्मचर्येण श्रान्तम्।
अवर्तिमद् भविता राष्ट्रमेषां
तमसीव निहितं नानु वेत्ताः।।४।।

---

२ क मा. तीक्ष्णेशवो * *;
२ का.तीक्ष्ण इषवो व्रह्मणा हेतिसन्तो यामस्सन्ति शर्व्यां नि * मृषां। अनूहायति * * . . ? दरादभिन्दन्ति * * ।
३ का. * भ्या * कुन्मलं * नडीका दन्ता * सिदिग्धा . . . व्राह्म विधातु देवपीयं निर्जलै वनुर्भिर्देवजूतेः;
क, उ. * ह्या * कुल्मणं * ;
ख मा. नाका . . . . . . .।
ग मा. . . . . . . विद्ध्यति देवपींयु (→यू) न्;
म. . . . . . . विद्ध्यति * ;
घ मा. हृद्‌वलैर्धनुभिर्देवयूतैः।।
म. . . . . धनुर्भिर्दे . . . . . ।।
४ गघ का. अवन्तिमद् * . . . . . . तपसैव निहतं . . . वेतु ;
घ मा. . . . . निनिहितं . . * ।।

ये सहस्रमराजन्नासन् दशशता उत।
ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन्।।५।।

गौरेव तान् हन्यमाना [+]वैतहव्यौं अवातिरत्।
ये केशरप्राबन्धायाश्चरमाजामपेचिरन्।।६।।

अतिमात्रा अजायन्त नोदिव दिवमस्पृशन्।
भृगुं हिंसित्वा माहीना असंभव्यं पराभवन्।।७।।

ये बृहत्सामानमाङ्गिरसमार्पयन् ब्राह्मणं जनाः।
येत्वस्तेषामुभयादन्नविस्तोकान्यावयत्।।८।।

ये ब्राह्मणं प्रत्यष्ठीवन् ये चास्मिच्छुक्लमीषिरे।
अस्रस्ते मध्ये कुल्यायाः केशान् खादन्त आसते।।६।।

---

५　　का. * . . . मराजंनाशं * दुत
　　तेभ्यष्प्रव्रवीमि त्वा * पराभुवं;

६　　का. . . . . . तां हन्यमनो वैतव्यां इवाचरत्।
　　* . . . प्रापुंदायश्चरुमादा उपेचरं;
　ख　उ. वैतहव्यां . . . . .।

७　　का. अभिमात्रा जायन्ति नोदिवि दिवि पस्पृशं
　　सृग हिंसत्वा व्रह्मीममुंभव्यं पराभुवं।
　ग　मा. * * माहीनां ;

८　　का. * * . . . . . समाल्पयं * * ।
　　तेत्वक् स्तोकामुभयादनूयत्स्तोकान्यामयत्।
　ग　मा. * . . . संमार्पयन् * जना। ? पेत्व . . न्नर्विस्तो . . .।।

९　　का. * * प्रत्युष्ठीवं यश्चास्मै शुल्कमीशिरे।
　　अस्रस्ते * * केशानखादन्तासते।
　ख　मा. चेरास्मिच्छुक्लमीषिरे।
　घ　मा. केशनखादन्त *।।

अष्टापदी चतुरक्षी चतुःश्रोत्रा चतुर्हनुः।
द्विजिह्वा द्विप्राणा भूत्वा सा राष्ट्रमव धूनुते।।१०।।

६.१६

शौ.५.१६.४ ब्रह्मगवी पच्यमाना यावत् साभि विजङ्गहे।
तेजो राष्ट्रस्य निर्हन्ति न वीरो जायते पुमान्।।१।।

x आक्रमणेन वै दैवा द्विषन्तो घ्नन्ति +पूरुषम्।
स्तेयादं ब्रह्मज्यं क्षेत्रे चानृतवादिनम्।।२।।

१० विषमेतद् देवकृतं राजा वरुणो अब्रवीत्।
न ब्राह्मणस्य गां जग्ध्वा राष्ट्रे जागार कश्चन।।३।।

८ तद् वै राष्ट्रमा स्रवति भिन्नां नावमिवोदकम्।
ब्राह्मणो यत्र जीयते तद्राष्ट्रं हन्ति दुच्छुना+।।४।।

---

घ का. * राष्ट्रमवि * z७z
मा. * . . . धूनते।।

६.१६.१ कख का. * पश्यमाना * . . वजंगहे।
गघ मा. * * निरिहन्ति नि * * *।। म. * * निरिहन्ति * * * *।।

२ ख-घ का. * * पौरुषं तेआजं व्रह्मजं * ता अनृत . . . .।
ख उ. द्विशन्तो * पुरुषं।

३ क मा. विशमेतद् * ;
गघ का. ते * * दुग्ध्वा * जागर . . .। मा. * * * * * जागर . . .।।

४ घ का. . . . . . हवि दुश्छुना।
द्र. घ का. 'आ स्रवति छिन्नां नावमिवोदकं। ब्राह्मणो यत्र जीयते तद्राष्ट्रं' इत्यधिकं पठितम्।
मा. तदाष्ट्रं भन्ति दुत्सुना।। म. . . . . . * दुत्सुना।।

शौ.५.१८.१२ एकशतं वै जनता भूमिर्या व्यधूनुत।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन्।।५।।

यामुदाजनृषयो मनीषिणः
श्रमसातां बृहतीं देवजूताम्।
सा ब्रह्मज्यं पचति पच्यमाना
राष्ट्रमस्य बृहती यच्च वर्चः।।६।।

वाचा ब्राह्मणमृच्छति जामि हन्त्यचित्त्या।
मित्राय सत्ये द्रुह्यति यं देवा घ्नन्ति पूरुषम्+।।७।।

९.२०

+एकपाच्छन्द एककामं च।
तदाप्नोति चाव च रुन्धे प्रथमया रात्र्या
प्रथमया समिधा।।१।।

---

५ का. * * जवता . . . द्विधूनतष्
प्रजा हिंसत्वा व्राह्मीममूंभव्यं पराभुवं।

६ कख का. यामुदाजंगृ . . . शपुसातां * *।
क मा. . . . . . मनीषणः;
घ का. . . . . . यश्च वर्चः। उ. . . . . वृहति . . . .।।

७ कख का. * व्राह्मणमिश्छति जामियं हन्ति चिभ्या;
उ. * व्राह्मणमृछति * हंत्यचित्या।
ग मा. मित्रा असत्ये द्रूह्यति;
घ का. * * * पौरुषम् z८z उ. यन् * * पुरुषं।।

९.२०.१ का. एकपाश्छन्द एककासूञ् * त आप्नोति . . . राल्या * * ;
मा. एकपाछन्द एककामुञ् *। म. एकपाछन्द एककामञ् *।

+द्विपाच्छन्दो द्विपदश्व पशून्।
तदाप्नोति चाव च रुन्धे द्वितीयया रात्र्या
द्वितीयया समिधा।।२।।
त्रील्लोकानूत्रीं लोकपतीन्।
तदाप्नोति चाव च रुन्धे तृतीयया रात्र्या
तृतीयया समिधा।।३।।
+चतुष्पाच्छन्दश्चतुष्पदश्च पशून्।
तदाप्नोति चाव च रुन्धे चतुर्थ्या रात्र्या
चतुर्थ्या समिधा।।४।।
पञ्च दिशः पञ्च प्रदिशः।
तदाप्नोति चाव च रुन्धे पञ्चम्या रात्र्या
पञ्चम्या समिधा।।५।।
त्रैष्टुभं छन्दो विराजं स्वराजं सम्राजम्।
तदाप्नोति चाव च रुन्धे षष्ठ्या रात्र्या
षष्ठ्या समिधा।।६।।

---

२ का. द्विपाश् . . . . चव . . . . रात्या * * z
उ. द्विपाछन्दो . . . .।।
द्र. २-११ उ. 'तदाप्रोति चावच' इत्यूह्यम्।
का. सर्वत्र 'रात्या' इति।
३ का. त्रिपाश्छन्दस्त्रींश्च लोकान् स तदाप्नोति . . . . .।
द्र. < +त्रीलँ लोकांस्त्रींश्च लोकपतीन्+?
४ का. पूर्वमन्त्रोक्ता एवापपाठाः।
५ का. * * * प्रेदिशस्;
६ का. त्रैष्टुभंश् . . . . . .;

सप्त प्राणान् सप्तापानान् सप्त ऋषींश्च।
तदाप्नोति चाव च रुन्धे सप्तम्या रात्र्या
सप्तम्या समिधा। ।७। ।
ओजश्च तेजश्च सहश्च बलं च।
तदाप्नोति चाव च रुन्धे अष्टम्या रात्र्या
अष्टम्या समिधा। ।८। ।
अम्भश्च महश्चान्नं चान्नाद्यं च।
तदाप्नोति चाव च रुन्धे नवम्या रात्र्या
नवम्या समिधा। ।९। ।
ब्रह्म च क्षत्रं चेन्द्रियं च ब्राह्मणवर्चसं च।
तदाप्नोति चाव च रुन्धे दशम्या रात्र्या
दशम्या समिधा। ।१०। ।
विश्वावसू च सर्ववसू च।
तदाप्नोति चाव च रुन्धे एकादश्या रात्र्या
एकादश्या समिधा। ।११। ।
पाङ्क्तं छन्दः प्रजापतिं संवत्सरम्।
तदाप्नोति चाव च रुन्धे द्वादश्या रात्र्या
द्वादश्या समिधा। ।१२। ।

इति तृतीयोऽनुवाकः

---

७　का. * प्राणां . . प्रानां * र्षींश्च . . . . चाव चा . . .;
मा. * * सप्तपानान् . . . . . . . । ।

८　उ. . . . . वलञ्च। . . . . । ।

९　म. . . सहश्चान्नं चान्नाद्यञ्च। . . । । मा. . चान्नाद्यञ्च . . । ।
का. . . . . महश्चअन्नं च अन्नाद्यं च . . . . ।

१०　मा. * * क्षेत्रं चेन्द्रियञ् . . । म. * * * चेन्द्रियञ् . . . . ।

११　क　का. . . . वसु . . . वसु *

ग　मा. एकादशा * * * । । का. * रात्यैकादश्या *;

१२　का. पाङ्क्तंश्छन्दः . . . . . चाव रुन्धे * रात्या * * Z९Z
मा. ? पांक्तं . . . . । . . । ।२०। ।ऋ। ।अ३। ।

६.२१

यो वा एकशरावं निर्वपेदेकर्षिमेवानु निर्वपेत्।
एष वा एकर्षिर्यदग्निः।
एकर्षिं चैव लोकं चाव रुन्धे
एकर्षिरिव तपत्येकर्षिरिव दीदायैकर्षिरिवान्नादो
भवति य एवं वेद।
स य एवं विद्वान् प्राश्नीयादेतामेव देवतां
मनसा ध्यायेद्
एकर्षेस्त्वा चक्षुषा पश्याम्येकर्षेस्त्वा हस्ताभ्यामा रभ
एकर्षेस्त्वास्येन प्राश्नाम्येकर्षेस्त्वा जठरे सादयामीति।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति।।१।।

यो वै द्विशरावं निर्वपेत् प्राणापानावेवानु निर्वपेत्।
एतौ वै प्राणापानौ यन्मातरिश्वा चाग्निश्च।
प्राणापानौ चैव लोकं चाव रुन्धे ज्योग् जीवति सर्वमायुरेति

---

का. ओँ * * * . . . . . . * * एकऋषिर्य . . . . एकऋषिं . . . . ।
* ऋषिरिव . . . ऋषिरिव दीदाय एकऋषि . . . . . . । * *
वद। स एवं * . . . . . .
एकऋषे . . . . पश्यामि एकऋषेस्त्वा हस्ताभ्यामा रभेदेक
ऋषेस्त्वास्यनु . . म्येकऋषेस्त्वा * साधयामीति * * . . . . .
प्राश्नींया . . . . * ;

१[१] मा. * * निववेदेक . . . . . . ।

१[३] मा. एकर्षि चैव . . . . . . . .; म. एकर्षिञ्चैव . . . .;

१[४] मा. . . . . . हस्ताभ्यामा रभे एक . . . . . ।।

२[१,२] का. वै * . . . . . पानावेववानु . . . . . * पेदेते वे . . . . .;

२[३] मा. * . . . . लोकंञ् . . . . . . यः। म. * . . . लोकञ् . .
. . यः।
का. . . . . . . यः ;

न पुरा जरसः प्रमीयते य (एवं वेद। स य एवं विद्वान्)
प्राश्नीयादेते एव देवते मनसा ध्यायेत्
प्राणापानयोस्त्वा चक्षुषा पश्यामि
प्राणापानयोस्त्वा हस्ताभ्यामा रभे
प्राणापानयोस्त्वास्येन प्राश्नामि
प्राणापानयोस्त्वा जठरे (सादयामीति।
स यथा . . . . . . . . )।।२।।

यो वै त्रिशरावं निर्वपेत् त्रीण्येव त्रिकद्रुकाण्यनु निर्वपेत्।
एतानि वै त्रीणि त्रिकद्रुकाणि यदृचः सामानि
यजूंषि ब्राह्मणम्।
ब्रह्म चैव लोकं चाव रुन्धे
ब्राह्मणवर्चसी भवति य (. . . . . . . .)
प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्
ब्रह्मणस्त्वा चक्षुषा पश्यामि
ब्रह्मणस्त्वा हस्ताभ्यामा रभे
ब्रह्मणस्त्वास्येन प्राश्नामि
ब्रह्मणस्त्वा (जठरे . . . . । स यथा . . . . .)।।३।।

---

२[४] का. . . . देतामेव देवतां . . . त्व . . . रभेत् . स्त्वास्यनु . . . .z

द्र. मा. सर्वत्र 'प्राणापानयस्त्वा' इति।

३ का. यथा पूर्वमन्त्रे तथैव सजातीयाः अशुद्धयः अकिञ्चित्करत्वान्नोद्ध्रियन्ते।

द्र. ३[१] का, म. 'यो' इति नास्ति। एवमुपान्तिमं यावत्।
मा. * * * निर्वपे त्रिण्येव . . . . .।
म. . . . . . त्रिण्येव . . . . .।

३[४] मा. प्राशीयादेतामेव . . . . .।

द्र. उ. वर्गीयवर्णपराणामनुस्वाराणां परसवर्णो ऽतो न सर्वत्र दर्शितः। तेऽपि न भूयिष्ठाः।

यो वै चतुश्शरावं निर्वपेच्चतस्र एवोर्वीरनु निर्वपेत्।
एता वै चतस्र उर्वीर्यद्दिशः।
दिशश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मै दिशो दिशां प्रियो भवति
य (एवं . . . . . . . । . . . . . . . विद्वान्)
प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्दिशां त्वा चक्षुषा
पश्यामि दिशां त्वा हस्ताभ्यामा रभे
दिशां त्वास्येन प्राश्नामि दिशां त्वा . . . .।
(स यथा . . . . . . . . . .)।।४।।

यो वै पञ्चशरावं निर्वपेद् वैश्वानरमेव पञ्चमूर्धानमनु निर्वपेत्।
एष वै वैश्वानरः पञ्चमूर्धा यद् द्यौश्च पृथिवी च
मातरिश्वा चाग्निश्चादसावातपन्[१]।
वैश्वानरं चैव लोकं चाव रुन्धे
वेश्वानर इव तपति वैश्वानर इव दीदाय वैश्वानर इवान्नादो भवति
(य . . . . . . . . । . . . . . . .)
प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्
वैश्वानरस्य त्वा चक्षुषा पश्यामि
वैश्वानरस्य त्वा हस्ताभ्यामा रभे
वैश्वानरस्य त्वास्येन प्राश्नामि

---

४[५] उः . . . . प्राश्नीयादेता एव * * . . . . . .
५[२] मा. 'वै' इति गलितम्।
उ. . . . . . मातरिश्वाचा . . . दशावातपन्।
का. पृथिवी च रसावतिपं।
द्र. का. 'मातरिश्वा चाग्निश्चा-' इति गलितम्।

वैश्वानरस्य त्वा . . . . . . . . ।
(स यथा . . . . . . . .)।।५।।

यो वै षट्शरावं निर्वपेत्
पङ्क्त्याद्भ एव देवाननु निर्वपेत्।
एते वै षड्यावानो देवा यदृतवः।
ऋतूंश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मा ऋतवो न ऋतुष्वावृश्चत
ऋतूनां प्रियो भवति य ( . . . . । . . . . )
प्राश्नीयादेता एव देवता मनसा ध्यायेद्
ऋतूनां त्वा चक्षुषा पश्याम्यृतूनां त्वा हस्ताभ्यामा रभ
ऋतूनां त्वास्येन प्राश्नाम्यृतूनां त्वा . . . . . . ।
(स यथा . . . . . . . . .)।।६।।

यो वै सप्तशरावं निर्वपेत्
सप्त ऋषीनेवानु निर्वपेत्।
एते वै सप्त ऋषयो यत् प्राणापानव्यानाः।
सप्तर्षींश्चैव लोकं चाव रुन्धे ज्योग् जीवति
सर्वमायुरेति न पुरा जरसः प्रमीयते य ( . . । . . . )
प्राश्नीयादेता एव देवता मनसा ध्यायेत्
सप्तर्षीणां त्वा हस्त्याभ्यामा रभे
सप्तर्षीणां त्वास्येन प्राश्नामि

---

६[1] का. . . . षड्याम्न . . . ;
६[2] मा. * * षड्यावावानो . . . . . . ।
६[3] का. . . . नर्तुष्वावृश्चतु . . . ;
६[4] मा. 'ऋतुनां' इति पाठो दृश्यते।
७[1] का, मा. . . . . निर्वपि सप्त . . . . ।

सप्तर्षीणां त्वा . . . . . . . ।
(स यथा . . . . . .) ।।७।।

यो वा अष्टशरावं निर्वपेद्
विराजमेवाष्टापदीमनु निर्वपेद्।
एषा वै विराडष्टापदी यद् द्यौश्च पृथिवी
चापश्चौषधयश्च
वायुश्चान्तरिक्षं च सूर्यश्च चन्द्रमाश्च।
विराजं चैव लोकं चाव रुन्धे
विराजत्यस्मिंश्च लोके अमुष्मिंश्च
वैराजर्षभ इत्येनमाहुर्य ( . . . . । . . . .)
प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्
विराजस्त्वा चक्षुषा पश्यामि
विराजस्त्वा हस्ताभ्यामा रभे
विराजस्त्वास्येन प्राश्नामि विराजस्त्वा . . . . . . ।
(स यथा . . . . . . .)।।८।।

---

७[३] का. सप्तर्षीश्चैव . . . . रुन्धे सप्तर्षिरिव तपति सप्तर्षिरिव दीदाय सप्तर्षीवान्नादो भवति यष् ;

७[४] मा. . . . . ध्याये . . . .।।

८[१,२] का. . . . दीरनु * . . . दिर्यद् . . .

८[२,३] का. 'वायुश्चा . . . . रुन्धे' इति गलितम्।

८[२] उ. * * . . . . . य द्यौश्च . . . . ;

८[२] मा . . . . सूर्यश्चन्द्रमाश्च।

८[३] उ. . . . . लोके अमुस्मि (म. ←ष्मि) श्च;

८[३] मा . . . . . . नमाहुयः।

८[४] मा. प्राश्नीयामेतामेव * * * . . . . ।

द्र. का. अपरे च पाठभेदाः शोधार्हाः सन्ति।

योै वै नवशरावं निर्वपेन्नवयान्न एव
देवाननु निर्वपेत्।
एते वै नवयावानो देवा यन्मासाः।
मासश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मै मासा मासां प्रियो भवति य (. . . । . . .)
प्राश्नीयादेता एव देवता मनसा ध्यायेन्
मासां त्वा चक्षुषा पश्यामि
मासा त्वा हस्ताभ्यामा रभे
मासां त्वास्येन प्राश्नामि
मासां त्वा . . . . . . . ।
(स यथा . . . . . .)।।९।।

यो वै दशशरावं निर्वपेदिड़ामेव धेनुमनु निर्वपेत्।
एषा वा इड़ा धेनुर्यद् यज्ञः पशवः।
इड़ां चैव धेनुं यज्ञं च लोकं च पशूंश्चाव रुन्धे
कल्पन्ते *अस्मा *इड़ इड़ां प्रियो भवति
य (. . . । . . .)
प्राश्नीयादेतामेव देवतां मनसा ध्याये-
दिड़ायास्त्वा चक्षुषा पश्यामीड़ायास्त्वा हस्ताभ्यामा रभ
इड़ायास्त्वास्येन प्राश्नामीड़ायास्त्वा . . . . . . ।
(स यथा . . . . . .)।।१०।।

---

९[१] का. . . . . न्नवयाम्न . . . ;

९[३,४] का. सर्वत्र 'मासां' इत्यत्र 'मासानां' इति।

९[४] मा. मासा त्वास्येन * * * ।।

१० का. वै * निर्वपे डामेव . . . निर्वपेदेष वावाविडा . . . * पशव * . . . धेनुं च * * * * पशूश्चाव * * स्मै इडो * * * यषू . . . . रभेदिडाया . . . zz

१०[३] उ. 'कल्पन्ते . . . . . भवति' इति गलितम्।

यो वा एकादशशरावं निर्वपेद्
रोहितमेवानु निर्वपेत्।
एष वै रोहितो यदिन्द्रः।
इन्द्रं चैव लोकं चाव रुन्धे
इन्द्रियावी प्रिय इन्द्रस्य भवति य ( . . . । . . .)
प्राश्नीयादेतामेव देवतां मनसा ध्याये-
दिन्द्रस्य त्वा चक्षुषा पश्यामीन्द्रस्य
त्वा हस्ताभ्यामा रभ
इन्द्रस्य त्वास्येन प्राश्नामीन्द्रस्य त्वा . . . .।
(स यथा . . . . . . .)।।११।।

यो वै द्वादशशरावं निर्वपेद् विश्वामेव देवाननु निर्वपेत्।
एते वै विश्वे देवा यदिदं सर्वम्।
विश्वांश्चैव *देवाल्लोँकं चाव रुन्धे
कल्पन्ते अस्मै विश्वे देवाः प्रियो विश्वेषां देवानां भवति
य एवं वेद।
स य एवं विद्वान् प्राश्नीयादेता एव देवता मनसा ध्यायेद्
विश्वेषां त्वा देवानां चक्षुषा पश्यामि
विश्वेषां त्वा देवानां हस्ताभ्यामा रभे

---

११ का. . . . रोहितामेवानु निर्पपेदेष * * यदिन्द्र . . . . रुन्धे कल्पन्ते स्मै इन्द्रियावै प्रिये इन्द्रश्च भवति यष् . . . . रभेदिन्द्रस्य . . . . त्वा जठरे zz

१२[१] का. * * * * विश्वाम्नि एव . . . र्वपेदे . . . . . . .;
मा. * * द्वादसशरावं निर्वपे . . . . . देवमनु . . . . . .।

१२[२] मा. विश्वाश्चैव देवाल्लोकं . . .; म. . . . . देवाल्लोकं . . . .;

१२[३-५] का. . . . देवलोकं . . . . . * स्मै . . . ।

विश्वेषां त्वा देवानामास्येन प्राश्नामि
विश्वेषां त्वा देवानां जठरे सादयामीति।
स यथा हुतमिष्टं प्राश्नीयादेवैनां प्राश्नाति।।१२।।

९.२२

इमां मात्रां निर्वप ओदनस्य तस्य पक्ता
मुच्यतां किल्बिषेभ्यः।
अभिद्रोहादेनसो दुष्कृताच्च पुनातु मा
पवनैः पवित्रः।।१।।
भद्रौ हस्तौ भद्रा जिह्वा भद्रं भवतु मे वचः।
मह्यं पवित्रमोदनं ब्रह्मणा निर्वपामसि
हस्ताभ्यां निर्वपामसि।।२।।

यन् मयि गर्भे सति माता चकार दुष्कृतम्।
अयं मा तस्मादोदनः पवित्रः पात्वंहसः।।३।।

शौ.१०.५.२२कख　यदर्वाचीनमेकहायनादनृतं किं चोदिम।
(अयं . . . . . . . . . )।।४।।

---

स एवं * प्राश्नीयादेतामेव देवतां * * . . . . . रभेद् . . . . * *
देवानां त्वा . . . * * हुममिष्टं . . Z१Z
मा. . . . . . . विश्वेशां * * . . . . * * * देवानास्येन * * *
. . . . . . . . . .। यसयथा . . . . ।।२१।।ऋ।।१२।।
द्र.　१२[१] < विश्वाँ एव . . . . .। ?

९.२२.१　क-ग　का. * सातां . . . . . . पन्था * * . . . दुष्कृताश्च ;
गघ　मा. . . . . दुस्कृताच * ना * * ।।
२　ङ　मा. नास्त्ययं पादः।
३　क　का. यन्मे * *;
ग　का. * * तास्मादोदनः;
४　का. यदुर्वाचीनमैकहाय . . . . * चोदिमः

यद् दुष्कृतं यच्छमलं+ यदेनश्चकृमा वयं।
(अयं . . . . . . . . . . .)।।५।।

यन् मातरं यत् पितरं यद् वा जामिं जिहिंसिम।
(अयं . . . . . . . . . . .)।।६।।

यन् मातृघ्ना यत् पितृघ्ना भ्रूणघ्ना यत् सहासिम।
(. . . . . . . . . . . . . . . . .)।।७।।

शौ.७.६५.३क श्यावदता कुनखिना स्तेनेन यत् सहासिम।
(. . . . . . . . . . . . . .)।।८।।

शिशुन्धानां पूंश्चलानां तक्ष्णां यदन्नमाशिम+।
(. . . . . . . . . . . .)।।९।।

यदपामपजह्मिम निमज्य पपिमोदकम्।
( . . . . . . . . . . . . . .)।।१०।।

---

५ क मा. * * यच्छमळं; म. * * यछमळं;

६ ख का. यद्राजामद्रियंशिसः;

७ का. * * * पितृघ्न * * सहाशिमः;

ख उ. भृणघ्ना * . . . .;

८ का. च्यावदता * * यश्चहाशिमः;

९ का. शुशुण्डानां पौश्चलानां तत्कृणां . . . . माशिमः;

ख मा. तक्ष्णा . . . मासिम।। म. * . . . मासिम।।

१० का. . . . मपिजहुर्मुन्मृज्य पपिसोदकम् Z१Z

मा. यदसामप यह्मिं निमज्यंमपिमोदकं।।२२।।ऋ।।

द्र. का. काण्डिका अत्र समाप्ता। बैरेट्महोदयेन तथा न गणितम् असमाप्तैव काण्डिकेति मन्यमानेन।

९.२३

यत् क्रुद्धा मन्युतो वयं ब्राह्मणस्य निजग्मिम
पदा वा गामुपारिम ।
(. . . . . . . . .)।।१।।

यद् ब्रह्मचर्ये यत् स्नातचर्ये अनृतं किं चोदिम ।
(. . . . . . . . .)।।२।।
शौ.७.६५.३ख   किलासेन दुश्चर्मणा वण्डेन यत् सहाशिमाधाराभिगतेन वा ।
(. . . . . . . . .)।।३।।

यत् क्षेत्रमभितिष्ठाथाश्वं वा यं निरेमिषे ।
(. . . . . . .)।।४।।

यदक्षेषु हिरण्ये गोष्वश्वेषु यद्धने अनृतं किं चोदिम ।
(. . . . . . . . .)।।५।।

सख्युर्जायां स्वां दासीं सूतिकां लोहितावती-
मशुद्धां यदुपेयिम ।
(. . . . . . . . .)।।६।।

---

१ का. यदुकुवामन्यतो * ब्रह्मणस्य निजघ्नुनूसु * * गामुपेदिम ।
क उ. * कृद्धा * * ;
ख मा. व्रह्मणस्य * ;
२ क का. द्वितीयं 'यत्' नास्ति ।
म. * व्रह्मचर्यो * स्नातचर्यो । द्र. अयं लेखकप्रमादः ।
३ खग का. वन्डे * सहाशिमाद् धाराभिषिक्तेन मा ।
४ का. यत्र क्षेत्रमभितिष्ठाताश्वं * * *;
उ. . . . . . * जं * ।।
५ क का. . . . हिरण्यये; मा. यदग्धेषु *;
६ का. चक्षुर्जायां * * * . . . . . . . यदिपेयिम ।
ख मा. सूतीकां . . . . . .;

परिवित्तेन परिविविदानेना-
भ्यवस्नातेन परिभक्षितेन +दिधिषूपत्या यत् सहाशिम।
(. . . . . . . .)।।७।।

यत् कुसीदं विभेजिम द्विमेयं धनकाम्या।
(. . . . . . . .)।।८।।

य(द्) +द्व्येकं य(त्) त्र्येकमुपैकमिति यद् ददौ।
(. . . . . . . . .)।।९।।

य(त्) त्वरमाणाः शबलमपक्वं मांसमाशिम+।
(. . . . . . . .)।।१०।।

९.२४

यदन्नमाशिमा वयमनन्नमन्नकाम्योदरस्याभिशाच्या।
(. . . . . . . . .)।।१।।

---

७ का. परिविद्यष् परिविदानेनाभ्यवस्नातेन परिभक्षतेन द्विदुषूपत्या * *।
ग मा. दंधिषूपत्या * सहासिम। म. दिधिषुपत्या * सहासिम।।
८ का. यदुकुसीदं विमेजम * *;
ख उ. द्युमेयन् *।।
९ का. य द्वयेकं य त्रयेकमुपयैकमिति * *;
उ. यद्येकं यत्र्येक(मा.कं) मुपै . . यद्ददौ।।
१० का. यत्परमाणा शवलमपक्वं मांसमाशिमः। z ३ z
ख उ. * मांसमासिम।।
द्र. का. अत्रापि हस्तलेखे काण्डिकासमाप्तिसूचने सत्यपि बैरेट्-महोदयेन तथा न कृतम्।
९.२४.१ का. . . . . . वयमदन्नम . . . दनस्यापिशाच्या।

यद् विद्वांसो यदविद्वांसो* अनृतं किं चोदिम।
अयं मा तस्मादोदनः पवित्रः पात्वंहसः।।२।।

यद् देवस्य सवितुः पवित्रं
सहस्रधारं विततं हिरण्यम्।
येनेन्द्रमपुननमार्तमर्त्यास्तेनायं मां सर्वपशुं पुनातु।।३।।

येनापुनात् सविता रेवतीरपो
येनापुनीत वरुणः सवाय।
येनेमा विश्वा भुवनानि पूतास्तेनायं मां
सर्वपशुं पुनातु।।४।।

तै.ब्रा. ३.७.१२.५　अति क्रामामि दुरितं यदेनो जहामि रिप्रं
परमे सधस्थे।
येन यन्ति सुकृतो नापि दुष्कृतस्तमा रुहेम
सुकृतामु लोकम्।।५।।

---

२ कख　का. * * यदिविद्वासो * * चोदिमः;
उ. * विद्यांसो यद्विद्यांसो * . . . . ।

३　का. येद् * * * * वितथं हिरण्मयं येनेन्द्रवपुनंनार्तिसर्त्यास्तेनायं * * * ।

ग　मा. येनन्द्रम . . . . . .;
म. . . . . न्द्रमपुंननमार्त्तमर्त्यास्तेनायिं * * * । ।

द्र.　१ मा. मनन्नम् इति पादोऽवसितः।
२क < * * यद् व् अविद्वांसो ?
३ग < येनेन्द्रमपुनन्नमार्त्यमर्त्यास् ?

४ कख　का. . . . . . * रेवतीरथो . . . वरुण स्यवायः;
उ. . . . येनापुनीद् . . . ।

५　का. * क्रामासि * . . . जहामि रिपु * * । येनेन्द्रवपुनं नाति दुरितं यदेनो जहामि रिपुं परमे सधस्ये येनेन्द्रवपुनंनाति दुष्कृतस्थमा * सुकृतासु * ;

मा यक्ष्ममिह +हासिष्ट मा रिफन्तो वि गातन।
अमैव पुण्यमस्तु नो अतृनन्वेति किल्बिषम्।।६।।

इमं पचाम्योदनं पवित्रं पवनाय कम्।
स मा मुञ्चतु दुष्कृताद् विश्वस्माच्चैनसस्परि।।७।।

६.२५

सहस्राक्षं शतधारमृषिभिः पवनं कृतम्।
तेना सहस्रधारेण पवमानः पुनातु मा।।१।।

येन पूतमन्तरिक्षं यस्मिन् वायुरधि श्रितः।
(. . . . . . . . . .)।।२।।

येन पूते द्यावापृथिवी आपः पूता अथो स्वः।
(. . . . . . . . . . . .)।।३।।

---

६ का. * यक्ष्मंमिहामिष्टमारिहन्तो * गातुनः समैव . . . * तृणं नयतु दुष्कृतं;

क उ. * . . . हाशिष्ट;

घ मा. अतृनन्येति *।।

द्र. घ < +अत्रीन् अन्वेतु किल्बिषम्।

७ क मा. पचांमोदनं ; ख का. * पचनाय * ;

ग उ. * * मुञ्चन्तु * ;

घ का. विश्मस्मस्माश्चै . . . * z४z

मा. . . स्माच्चैवसस्परि ।।२४।।ऋ।।

६.२५.१ खग का. . . . पावनं *। तेनातेना *;

२ ख का. * * * श्रुतः;

३ का. येन् पूते द्यावापृथिवी आपष्पूता अथो स्वः।

द्र. अधोरेखाङ्कितान्युदात्तानि।

ख उ * * * स्वः।।

येन पूते अहोरात्रे दिशः पूता उत येन प्रदेशाः।
(. . . . . . . . . . . . .)।।४।।

येन पूतौ सूर्याचन्द्रमसौ
नक्षत्राणि भूतकृतः सह येन पूताः।
(. . . . . . . . . .)।।५।।

येन पूता वेदिरग्निः
परिधयः सह येन पूताः।
(. . . . . . . . . . .)।।६।।

येन पूतं बर्हिराज्यमथो हविः।
(. . . . . . . . . . .)।।७।

येन पूतो यज्ञो वषट्कार उताहुतिः।
(. . . . . . . . . . .)।।८।।

येन पूतौ व्रीहियवौ याभ्यां यज्ञो अधिनिर्मितः।
(. . . . . . . . . . . . . . . . .)।।९।।

---

४ क उ. 'येन' इति नास्ति।
का. . . . . . . प्रदिशः;
५ उ. 'येन' इति नास्ति।
का. * * सूर्याश्चन्द्रमसौ * * * * पूता।
६ क उ. 'येन' इति नास्ति। का. * * . . रग्नयः ;
ख का. * * * पूता;
८ का. * पूतौ * * हुताहुतिः
मा. नास्त्ययं मन्त्रः।
९ का. * * व्रीहियवाभ्यां * अधितिर्मिताः;
मा. 'येन' इति नास्ति।

येन पूता अश्वा गावो अथो पूता अजावयः।
(. . . . . . . . . . . . . . .)।।१०।।

६.२६

येन पूता ऋचः सामानि
यजुर्ब्रह्मणा सह येन पूतम्।
(. . . . . . . . . . .)।।१।।

येन पूता अथर्वाण आथर्वणा
अङ्गिरसो देवताः सह येन पूताः।
(. . . . . . . . . . . . .)।।२।।

येन पूता ऋतवो येनार्तवा
येभ्यः संवत्सरो अधिनिर्मितः।
(. . . . . . . . . . . . . . .)।।३।।

येन पूता वनस्पतयो वानस्पत्या
ओषधयो वीरुधः सह येन पूताः।
(. . . . . . . . . . . . . . .)।।४।।

---

१० का. * * श्वा * * * * Z५Z
मा. 'येन' इति नास्ति। अस्यां काण्डिकायां पादावसानचिह्नं नास्ति

६.२६ उ. एकादशमन्त्रं यावद् 'येन' इति नास्ति।

१ का. * * ऋचास् * यजुर्ब्राह्मण * * * ;

२ का. * पूतानाथर्वाङ्गिरसो * * * पूता।

३ क का. * * * येनान्तवा;
ख उ. * सम्वत्सरो *।।

४ ख का. * वीडधस् * * पूता।

येन पूता गन्धर्वाप्सरसः
सर्पपुण्यजनाः सह येन पूताः।
(. . . . . . . . . . . .)।।५।।

येन पूता नद्यः सिन्धवः समुद्रः सह येन पूतः।
(. . . . . . . . . . . .)।।६।।

येन पूताः पर्वता हिमवन्तो
वैश्वानरः परिभूः सह येन पूतः।
(. . . . . . . . . . . .)।।७।।

येन पूता विश्वे देवाः परमेष्ठी प्रजापतिः।
(. . . . . . . . . . . . . .)।।८।।

येन पूत +स्तनयित्नुरपां वत्सः प्रजापतिः।
(. . . . . . . . . . . .)।।९।।

येन पूतः प्रजापतिर्ल्लोकान् विश्वं भूतं स्वराजभार।
(. . . . . . . . . . . . . .)।।१०।।

---

५ क का. * * गन्धर्वाप्सरोसस्; मु. * * गन्धर्वाप्सरसः;

६ ख का. समुद्रास् * * पूताः;

७ ख का. * परिभवस् * * पूताः; मा. * परिभू * * * ।।

द्र. का. ६ = ७, ७ = ६।

९ का. * पूतस् स्थनयित्नुरपां * * ;
मा. पूत सनइलुरपां * * ।।
म. पूत स्तनइलुरपां * * ।।

१० क का. * * प्रजापतिः लोकं; मा. पूतः प्रजापतिल्लोकान्;

द्र. का. ९ = १०, १० = ९।

येन पूतमृतं सत्यं तपो दीक्षा च पूयते।
(. . . . . . . . . . . . . . . .)।।११।।

येन पूतमिदं सर्वं यद्भूतं यच्च भाव्यम्।
तेना सहस्रधारेण पवमानः पुनातु मा।।१२।।

६.२७
(शौ.५.२०)

उच्चैर्घोषो दुन्दुभिः सत्वनायं वानस्पत्यः
संभृत उस्रियाभिः।
वाचं क्षणुवानो दमयन् सपत्नान् सिंह इव
+ज्येष्यन्नभि तंस्तनीभिः।।१।।

सिंह इवास्तानीद् +द्रुवयो विबद्धोऽभिक्रन्दन्नृषभो
+वाशितामिव।
वृषा त्वं वध्रयस्ते सपत्ना ऐन्द्रस्ते शुष्मो
अभिमातिषाहः।।२।।

---

११ ख का. * * पूतयते।

१२ का. . . . . यश्च भव्यं येन * * * मां z६z

द्र. उ. मा. सप्तममन्त्रं विहायान्यत्र पादावसानचिह्नं नास्ति।

६.२७.१ का. उश्चैर्घोषो * सत्वनाथं * * * * खण्वानो * सपत्नान् सिंहैव द्वेषंनभि तंस्तनयति।

ख मा. * * उश्रियाभिः।

घ मा. * * ज्येष्ठंनभि तंस्तनूभिः।।

२ का. सिंहैवात्तानी द्रवयो * अभिक्रन्दंनृषभो वाशितमिव। नृषा त्व . . . . . सपत्नानिन्द्रस्ते * भिमातिषाहः;

क मा. * . . . . . . . दृदयो * ; म. * . . . . . . धृदयो * ;

ख उ. * * वासितामिव।

संजयन् पृतना ऊर्ध्वमायुर्गृह्या गृह्णानो
बहुधा वि चक्ष्व।
दैवीं वाचमा हुर गुरस्व वेधाः शत्रूणामुप
भरस्व वेदः।।३।।

वृषेव यूथं सहसो विदानो गव्यन्नभि
रुव संधनाजित्।
शुचा विध्य हृदयं परेषां हित्वा ग्रामान्
प्रच्युता यन्तु शत्रवः।।४।।

दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती
नाथिता घोषबुद्धा।
नारी पुत्रान् धावतु हस्तगृह्यामित्री भीता
समरे वधाना।।५।।

---

३ का. संजयं * ऊर्ध्वमायु गृह्या * * * चक्षः z देवीं वाचसा गुरस्सु मेधा शतृणामुप भरस्सु वेदाः (घ मु. शत्रूणामुप . . .);
गघ मा. * . . . . . . गुरस्वे मेधाः शत्रृणामुप * * ।।
घ. म. वे(→मे)धाः . . . . .।।

४ का. . . . * सहसं * गव्यंनभ रोह * सुमा विद्धि * * हुत्वा * * * शत्रवः;
कख मा. . . . जूथं * * * * * ससम्धनाजित्।
म. . . . . . . . . सह(सं→)सो * * * * सन्धनाजित्।

५ क का. दुन्दुभिर्वाचं * * ; उ. * * प्रयतं * ;
ख मा. . . . . . . नाथितो * ।
गघ का. * पुत्रं * हंगृह्यामित्रे भीताः * वधानः;

धीभिः कृतः प्र भरस्व वाचमुद्धर्षय
सत्वनामायुधानि।
अमित्रसेनामभिजञ्जभानो द्युमद् वद
दुन्दुभे सूनृतावत्।।६।।

पूर्वो दुन्दुभे वि षहस्व शत्रून् भूम्याः पृष्ठे
वद बहु रोचमानः।
इन्द्रमेदी सत्वनः सं ह्वयस्व मित्रैरमित्रानव
जङ्घनीहि।।७।।

अन्तरेमे नभसी घोषो अस्तु पृथक् ते ध्वनयो
यन्तु शीभम्।
अभि क्रन्द स्तनयोत्पिपानां श्लोककृन्
मित्रतूर्याय स्वर्धि।।८।।

---

६ का. * * पू भरस्सु . . मुद्धर्षयस्सत्तनामा . . . . अमित्त्रसेनानाम-
भिजजभानो दिमद्वल * *।
कख मा. * * * * वाजिमुर्द्वर्षय . . . . . . .।
म. * * * * वाजिमु . . . . . . . .।
गघ उ. . . . . . . . मभिजंजभानो * * * सुनृतावत्।।

७ क मा. * दुदुभे * * *;
गघ का. इन्द्रसेदीन् * * हुयस्व। अमित्त्रैरमित्त्रानव जंघनीहि;
उ. . . . . . . . . . . जंहनीहि।।

८ का. अन्तरेसो * * * * * द्धनयो * *। * * स्तनयोयत्पिपाना
श्लोककृत्रतुर्याय श्रद्धी।

संक्रन्दनः प्रवेदो धृष्णुषेणः प्रवेदकृद्
बहुधा ग्रामघोषी।
श्रेयो वन्वानो वयुनानि विद्वान् कीर्तिं बहुभ्यो
वि भज द्विराजे।।९।।

श्रेयःकेतो वसुजित् सहीयान्
मित्रं दधानस्त्विषितो विपश्चित्।
+अंशूनिव ग्रावाधिषवणे +अद्रि-
र्गव्यं दुन्दुभे अधि नृत्य वेदः।।१०।।

शत्रूषाण् नीषाड़भिमातिषाहो गवेषणः
सहमान उद्भित्।
वाग्वी मन्त्रं प्र जनयस्व वाजिन्
साङ्ग्रामजित्यायेषमुद्+ वदेह।।११।।

---

९ क का. सङ्क्रन्दनष् प्रस्रवेणो *;
गघ का. श्रयो वध्वानो * * कीर्ति बाहुभ्यो * * * z
ग मा. शेयो * * * * * वित्तय *।।
घ म. * * विभ(ज→)य *।।

१० क का. श्रियष्केतो वसुधिस् *;
गघ का. अँशूनिव श्रावावृषणे द्रिर्गव्यं * * * *;
मा. अशुंन इव * अद्रिर्गव्यं * * * * ।।
म. अंशुन इव * अभिर्गव्यं * * * * ।।

११ का. शत्रूषां णीषाडभिमातिशाहो * सहमानोदभृत्। * मिन्द्रं पृतनयस्सु वाचं सङ्गामजिभ्या एषमुद्वदेहः;
कख मा. * मीषाड . . . . . शवेषणः * ।
गघ मा. * * * * * संग्राम . . . .।।
म. * मन्त्रम् * * * सांग्राम . . . . . .।।

अच्युदच्युत् +समदो गमिष्ठो+ मृधो जेता
पृतनाषाडयोध्यः।
इन्द्रेण क्लृप्तो विदथा निचिक्यद्धृद्द्योतनो
द्विषतां याहि शीभम्।।१२।।

६.२८

(तु.शौ.३.२५)

इमास्तपन्तु त्वौषधीरोषधीनामयं रसः।
अश्वत्थस्ते (ऽ)यं हृद्यग्निर्भूतो व्योषतु
प्र पतातो ममाध्या।।१।।

यथा सूत्रं लाक्षारक्तमाज्येनानुषिच्यते।
एवा ते कामः सर्पत्वन्तरस्थसु मज्ञसु
प्र (. . . . . . .)।।२।।

यथा कुष्ठः प्रयस्यति यथा दह्यते अर्चिषा।
एवा ते दह्यतां मनः प्र (. . . . . . . .)।।३।।

---

१२ का. अभ्युदुश्यन् (मु. अत्युदुच्यन्) समथो गमिष्ठ मधो जयता पृतनाषडयोध्यः * क्लिप्तो वितथा निचिक्युद्युभ्योतनो * * शीतम् Z७Z

क मा. . . . . . . . . समनयोगमिष्टे; म. . . . . . समयोगमिष्टे;

गघ मा. * * * निचिक्यद्धृद्योतनो द्विषणं * * ।।२७।।ऋ।।
म. * * * . . . .द्धृद्योतनो . . .।।२७।।ऋ।।

६.२८.१ क का. . . . पन्त्वोषधी-;

ङ का. * पतानो ममाध्य;

द्र. मा. द्वितीये अर्धे द्वौ पादौ। म. पादावसानचिह्नं नास्ति।

२ का. * सूतं . . . . . . माज्येनानुषिष्यध्यते।
* * काम सर्पन्त्वंत्वर्थसु * प्रा;

कख मा. * * लाक्षारक्तज्येना . . . . .।

पुंसः कुष्ठात् प्र क्षरति स्तोक आधिभिराभृतः।
स ते हृदये वि वर्ततां प्र (........)।।४।।

एष ते स्तोको हृदयं दिग्धेवेषुः प्र पद्यताम्।
अस्राखणं यथेष्वा कामो विध्यतु त्वा मम
प्र (.......)।।५।।

हरित एधि शुष्काक्षः सर्वदा हृदयामयि।
स्त्रियस्ते अन्या माछाञ्छुरथो त्वाशाभि शोचतु
प्र (........)।।६।।

शोचीमदस्तु ते शयनं शोचिमदुपवेशनम्।
शोचीमदस्तु ते मनो यथात्र न रमासा अर्वाची न मनास
प्र (.......)।।७।।

न रमासै सङ्गतेषु शयानं त्वाभि शोचतु।
ग.तु.शौ.३.२५.१क स्तोकस्त्वोत्तुद उत्तुदात् प्र (......)।।८।।

---

४ का. पुंसष्कुष्ठं ** स्तोका धीभिराभृतः **** वर्ततान् मनाधीभिस्तव प्र।

द्र. ४घ उ. 'मन आधीभिस्तव' इति चतुर्थः पादो गलित इति प्रतीयते।

५ ख-ङ का. दिग्देवेषु * पद्यता। अस्त्रखणं यथेष्ठा * विद्यतु तामव प्रा z

६ का. हरितेति ** हृदयामयी त्रिहस्ते अन्यामश्छांसुरथो ... z

द्र. ६ ग माङ्योगिनो लुङः प्रथमपुरुषबहुवचने किंचिद्रूपम्? < मा अच्छांशुः?

७ का. शोचीनुदस्तु ** शोचानुदप ....। शुचीमस्तु ** यथात्व ** वाचीनमनस्स प्रो;

८ का. निर्मामयमंगथेषु चपानं ..*। स्तोकस्तोक उत्तरोत्तर प्रा;

अन्तर्दहति चर्मणो अस्थिमांसेभिराभृतम्।
सर्वान् यज्ञः प्र याशयादैड़ आधिभिस्तव
प्र (. . . . . . .)।।९।।

हृदयेऽधि समिध्यतां स्वैर्मांसेभिरेष ते।
अग्निः कामस्य यो महान् स मह्यं रन्धयन्ति त्वा
प्र (. . . . . . . . .)।।१०।।

६.२६

अश्वत्थमग्निमाज्यं दूतान् कृण्वे मनोजवान्।
अग्निश्चरुमिवार्चिषा कामो विध्यतु त्वा मम
प्र (. . . . . . .)।।१।।

शयानमग्न आसीनमश्वत्थश्च सवासिनौ।
चरन्तमुपतिष्ठन्तं ममाधिभिर्वि+ विध्यतं
प्र (. . . . . . . . .)।।२।।

---

९ कख का. अन्तर्महतु * स्थिवांसेभि . . . . . . ;
घ का. -दिडाधीभिस्तव * ;
ग म. * मज्ञः * . . .; < सर्वान् मज्ज्ञः प्र यासयाद् ?
१० कख का. * तु समृदुध्यतां श्वैदांसेभिरेष * ।
घ का. * * रुन्धयातु * प्राः z८z
६.२६.१ कख का. अश्वमग्निमाज्यं द्रतानि * मनोजवां।
ङ का. प्रः z
२ क-ग का. . . . मग्रामीनमश्वत्थस्य * चरतुमुपतिष्ठन्त;
मा. मश्वस्थत्यशमवाशिनौ।
म. . . . सवाशिनौ।
घ का. समाधीभिर्वि विदूध्यतं;

चरन्तं त्वा तिष्ठन्तमासीनमपि संसदि।
रेष्मा तृणमिव मथ्नातु दहन् कामरथो मम
प्र (. . . . . . . . .)।।३।।

यथेन्द्रायासुरानरन्धयद् बृहस्पतिः।
एवा त्वमग्ने अश्वत्थानमून् मह्यमिहानय
प्र (. . . . . . .)।।४।।

अहं ते मन आ दद ऐडेन सह मेदिना।
देवा मनुष्या गन्धर्वास्ते मह्यं रन्धयन्तु त्वा
प्र (. . . . . .)।।५।।

यथा अश्वत्थस्य पर्णानि नेलयन्ति कदा चन।
एवासौ मम कामेन माव स्वाप्सीत् कदा चन
प्र पतातो ममाध्या।।६।।

---

३ का. चरन्तिं स्थ . . न्तमासीदमुप संसति। * तृणमेव मत्त्वातु वहं
* * प्रा z

४ कख का. . . . . . . . नरुन्धयतु * ; मा. . . .. . यानरन्धयद् * ;
गघ का. * . . . . . मूनमयमि . . . प्राः ;
मा. * . . .. . . अश्वथामुं . . . . .।।
म. * . . . अशवत्थामुं . . . ।।

५ कख का. * * मना दधे गुडेन * * ।
क उ. अहन्ते * * * ;
घ का. * * रन्धयातु * प्रः;
द्र. मा. पञ्चमो मन्त्रः पुनर्लिखितः।

६ कख का. * श्वत्थस्य * नीलयन्ति * * ।
ख उ. नेळयन्ति * * ।
घ मा. . . स्वाप्सी * * ।
ङ. का. * . . . पमाध्यः

कुष्ठं तपन्ति मरुतः स्वाध्यन्दुरआजानं
स्वरयन्तो अर्चिषा।
यथा न स्वपात् कतमच्चनाहरैव
+गच्छान् ममाध्या।।७।

इति चतुर्थोऽनुवाकः

।। नवमो द्वादशर्चकाण्डः समाप्तः ।।

---

७ का. * तपन्त * साध्यं द्वराजानं * * * नस् * कतमश्चनाहवैव गश्छान् ममाध्याः zzzz अनु ६zz इत्यथर्वणिकपैपलादशाखायां नवमष्काण्ड समाप्तः zz

घ मा. . . . . पन्थान् ममाध्या ।। २९ ।। ऋ।। अ ।। द्वादशर्च्चकाण्डः समाप्तः।।

म. म. . . . . . गछान् . . .।। २९ ।। ऋ ।। अ ।। द्वादशर्च्चकाण्डः समाप्तः।।

# दशमः काण्डः

## १०.१

हा अम्ब तेजने धेनो लम्बनस्तनि।
न तद्विदो यदिच्छसि+ यदु वित्तं न तद् घसः।।१।।

पै.५.१.३ग-च पुत्रो यस्ते पृश्निबाहुस्तमु त्वं सामनं कृधि।
अथो दुहितरं नम्रीमथो त्वं सामना भव।।२।।

असामे कुरमे नैगूरस्य स्वसः।
अराते निर्ऋते अमते स्नुहिते।।३।।

परेत कस्तुपकं वः पुनर्ददामि।
यो वो न वेद तं हत तस्यातु परि शिश्न्यम्।।४।।

तस्यात्तु पुत्रान् भ्रातृंश्च तस्य गोष्ठं वितावत।
यश्च सतो नास्ति वाकी यश्चासावहविर्गृहः।
दुर्णाम्नीस्तत्र गच्छत+ तत्र सर्वाः परेतन।।५।।

---

आरम्भे का. अथ दशमस्यारम्भः zz zz ओं नमो नारायणाय z ओं . . . . . .।

१ का. हास्व * * *। * . . . . . यदश्छसि। यद * * * *।

२ का. . . . . पृछिबाहुमस्तकं * *। * * नतेमथो * * *।

३ का. * कुरुमै नगुरस्य श्वसाराते निन्दते मते * ।
उ. . . . . . . . स्तुहिते।।

४ का. * कस्तूपकं * * यो न वेहद त्वं हद तस्यास्तपतु सिष्णिहं।

५ क का. तस्याधि * * * ; मा. तस्यातु * * *;
ग-ङ का. यस्य सोत * * र्यस्यामावाहवि . . . दुन्नाम्नीश् तत्र गश्छतु;
ङ उ. दुर्ण्णाम्नीस्तत्र गछत;
४घ, ५क < तस्यात्त ?

पै.२.४.३ परि धामान्यासामाशुर्गाष्ठामिवासरम्।
अजैषं सर्वानाजीन् वो नश्यतेतः सदान्वाः।।६।।

*अन्तश्चरां कोशेचरामथो गोष्ठावचारिणीम्।
अथो +याः स्वप्ने पश्यामस्ता इतो नाशयामसि।।७।।

कण्वा या गर्दभीव निभसत् सूकरीव।
तस्यै प्रति प्र वर्तय तप्तमश्मानमासनि।।८।।

यो मर्या अभिगच्छात् स्त्रियं कस्तुपस्तोपिनीम्।
कस्तुपमस्या आच्छिद्याथैनां चातयातै
परमां चित् परावतम्।।९।।
या भद्रा या शिवा योर्जा पयसा सह।
अग्निष्टा अस्माकं गृहे गार्हपत्यो नि यच्छतु+।।१०।।

इदं वो देवः सवितेदं देवो बृहस्पतिः।
इदं वो विश्वे देवा अवसानमयुक्षत।।११।।

---

६ का, उ. परिधामानीत्येका।।

७ का. अन्नश्वारान ..... गोष्ठान्विचारिणीं। * यस् * पश्यामि ता इत *।

क उ. अनुश्चरां .....;

ग उ. * या * *;

८ ख-घ का. निर्धजत् ... तस्ये * * *। ..... नमासिनीं।

ग मा. .. मस्मानमासनि।।

९ का. * निर्या भिगश्छात् प्रियं कस्तौपस्तौषिनीं कस्तौपमस्याश्छिद्या- त्थैनां *। * चेत् परावतां;

ङ मा. परमाञ् चित *।। म. परमाञ् * *।।

१० क का. * * यां *;

गघ का. अग्निष्ट्वा स्माकं * * * यश्छतु। उ. ... यछ्तु।।

११ घ का. वसानमजुक्षात्।

काठ.३८.१२ परि प्रागाद् देवो अग्नीरक्षोहामीवचातनः।
सेधन् विश्वा अप द्विषो दहन् रक्षांसि विश्वहा।।१२।।

ऋ.१०.१५५.५ परीमे गामनेषत पर्यग्निमहृषत।
शौ.६.२८.२ देवेष्वक्रत श्रवः क इमां आ दधर्षति।।१३।।

१०.२

त्वयीन्द्रियं त्वयि वर्चस्त्वं धर्मपतिर्भव।
त्वमुत्तरो भ्रातृव्येभ्यस्तव लक्ष्मीः पयस्वती।।१।।

तवैतामश्विना +हवं तव राष्ट्रं दिवि श्रितम्।
त्वमायुष्मान् सपत्नहोत्तरो द्विषतो भव।।२।।

तीक्ष्णशृङ्ग ऋषभः समुद्र इवाक्षितोदकः।
त्वं सहस्रवीर्यस्तव बाहू गवांपती।।३।।

भ्रातृव्यश्च सपत्नश्च यस्त्वामित्रो जिघांसति।
श्रियं त्वं सर्वेषां तेषामादायोग्रो वि धारय।।४।।

---

१२ क मा. परी * * *;
घ का. दहनोक्षांसि *।
१३ का. पर्यमे . . . . . . महर्षत। . . ष्वक्रतश् * * * गा * z१z
१०.२.१ खग मा. * धर्मपति भव। . . . . भ्रातृवेभ्यस्;
ग का. त्वमुतरो *;
२ कख का. भवेतामश्विना वहं * * * श्रुतं;
क उ. . . . . . . हवन्;
३ का. तीक्ष्णशृङ्गो वृषभस् समुद्रैवाक्षतोदक त्वं। सहस्रवीर्यास्तवा बाहो *;
घ मा. गवांपर्तीं ।। म. गवांपर्तीं।।
४ का. . . . सपुत्रश्च यस्त्वाशत्रो *। श्रियन्तं सर्वेषां ददातु य इवं वेद z श्रियन्तं सर्वेषां मादायोगृह * *;

त्वं वशी सत्याकूतः सत्यधर्मा गवेषणः।
नाष्ट्रास्त्वं सर्वास्तीर्त्वा भ्रातृव्याणां श्रियं वृह।।५।।

तुभ्यं सं यन्तु वलयस्तुभ्यं शुल्कः प्र वीयताम्।
तुभ्यं विराट् पयो दुहां त्वां वाञ्छन्तु विशो महीः।।६।।

वाञ्छतु त्वा बृहद्राष्ट्रं त्विषिस्ते मुख आहिता।
त्वं देवानां भव प्रियस्त्वयि गावो अधि श्रिताः।।७।।

त्वयीन्द्रियं त्वयि वर्चस्त्वयि यज्ञो अधि श्रितः।
तवा यन्तु हवं देवास्त्वं प्रियो बृहस्पतेः।।८।।

अग्नीषोमा पवमानो विराड् देवी पयस्वती।
अतन्द्रं सर्वे रक्षन्तु राष्ट्रं तेनपवाद्यम्।।९।।

अग्निरिव तृणं प्र दहौघः कूलमिवा रुज।
श्रियं भ्रातृव्याणामा दत्स्वाण्डीकमिवाधि
पुष्करात्।।१०।।

---

५ का. *। * सत्याकूतिस् * गवेषिणः
अनाष्ट्रास्त्वं सर्वास्तीत्वा * * रुह।

६ का. तुभ्यां श्रयन्तु . . . . शुल्का * दीयताम्
* * * रुहां * * विषो मही z
ख मा. . . . . शुक्लः * *।

७ कख का. वाञ्छन्ति * * द्विषिस्तेषां सुखाहित।
क मा. * * वृहदाष्ट्रं;
घ का. * * * श्रुत।

८ ख-घ का. -स्त्वं * * श्रुतः . . . . . * देवीस्त्वं * हंवृहस्पतिः;
क मा. . . . . त्वयी *;

९ का. * पवमानौ * * *। अतन्ध्रं * * * तेनापदाद्यं;

१० का. . . . . . . * प्रध्यकष् . . . . . *। * . .
णामधस्त्वांडीकमिवादिपुष्करात् z२z गघ उ. * . . . मादत्स्वा (मा.
स्त्वा) ण्डिक . . . ।।२।।ऋ१०।।

## १०.३

अश्व इव रथमा दत्स्व सिंह इव पुरुषं हर।
हस्तीव नड्वलान् भङ्धि भ्रातृव्याणां श्रियं वृह।।१।।

उत् ते कृणोतु कश्यपो ब्रह्म देवैरभिष्टुतम्।
आप्रीतमविराधुकम्।।२।।

एतं खदिरमा हराथो तेजनमा हर।
उतैतं पर्णमा हरा हरानडुहो बलम्।।३।।

इध्मां देवैः +समाभृतांस्तांस्ते प्रादाद् बृहस्पतिः।
ताना धेहि समाहिते (ऽ)ग्नौ सूर्याभिचक्षणे।।४।।

तेभिष्ट्वमुत्तरो भव भ्रातृव्याणां श्रियं वृह।
अथो एषां पयो हर।।५।।

---

१ क का. अश्वैव . . धत्स्व सिंहैव * *।
गघ का. हस्तीवर्वड्वलां भङ्धि * * रुह ;
मा. * नड्वालान् भिङ्धि . . . . .;
म. * * भिङ्धि . . . .।।

२ का. * * कृणो [xxx] पो * ष्टूवतं। आप्रीतमिवराडुकं;
क का. (मु) * * कृणोतु कश्यपो ;
ग उ. आप्रित . . .

३ कख का. * खदिरमा [xxx] र्माहरम्; मु * खदिरमाहाराथो तेजर्माहरम्;
मा. एकं . . . .
गघ का. . . पर्णमाहरादविदुषो गृहं।

४ का. यदिमां देवैस् समांभृतातप्र(नष्टाक्षराणि। मु. तांतेप्रा) दाद्बृहस्पतिः
ताना धंहि * ग्नौ सूर्याविचक्षणे।
मा. * दैवैः समाभृतांस्तास्ते . . . . . सूर्याभिरक्षणेभिचक्षणे।
म. . . . भृतास्तांस्ते . . . ।।

५ क मा. तेभिष्ट्वामुत्तरो *;
ख का. * * रुह।
ग का. * येषां * *; म. * एषाम् * *।।

आदित्या रुद्रा वसव ऋषयो भूतकृतश्च ये।
श्रियं च क्षत्रमोजश्च तुभ्यं देवा असाविषुः।।६।।

वसुरसीन्द्रनामायुष्मान्छतशारदः।
स इन्द्र इव देवेषु त्विषीमान् विश आ वद।।७।।

१०.४

इदं राष्ट्रं प्रथतां गोभिरश्वै-
रिदं राष्ट्रमन्नेनेरया रसेन।
अस्मै षड्डुर्वीरुप सं नमन्तु
सप्तहोत्रा हत शत्रून् सचित्ताः।।१।।

इमे राजान इषुभिर्घ्नन्तु शत्रू-
निमे राजानः समित्यान्यान् वधेयुः।
इमे राजानः पृतनाः सहन्ता-
महं ब्रह्मा विमृधो हन्मि सर्वाः।।२।।

---

६ ग मा. श्रियञ्च क्षत्रमोयश्च; म. श्रियञ्च . . . . .

७ कख का. असुरसीन्द्र . . . . ष्मान् शतशारद।

१०.४.१ ख का. . . . . . . . राष्ट्रमध्येनोरया * ;

ग का. . . . . . संनमन्तु ;

उ. . . . . . सन्नमन्तु ;

घ का. * * सचित्तां।

मा. * हतशतृन् *।।

२ का. इमै * इषिभिर्घ्नन्तु * . . . . समित्यान् वदेयुः। * राजानष्पृतना महन्तामहं ब्रह्मा * हंनि रक्षाः ;

इदं राष्ट्रं क्रतुमद्वीरवज्जिष्णूग्रमिदं राष्ट्रं
गर्दूनुमच्चित्रघोषम्।
अस्मै राष्ट्राय बलिमन्ये हरन्त्वहं देवेभ्यो
हविषा विधेयम्।।३।।

यदि युद्धं यद्यृतितं वो अस्ति देवैनसाद्
यदि वा पित्र्येण।
येनर्त्तीया धेनवो अस्तु तस्मा अहं देवेभ्यो
हविषा जुहोमि।।४।।

यद्वः क्रूरं मनसो यच्च वाचो देवैनसाद्
यदि वा पित्र्येण।
आप इव दुःष्वप्न्यमप तत् स्वपध्वमथानन्दिनः
सुमनसः समेत।।५।।

अपामिव वेगः प्र शृणीत शत्रून् दिशोदिशो
रभमाणाः समेत।
एकव्रता वि धनं भजध्वं पुरोहितेन वो राष्ट्रं
प्रथयन्तु देवाः।।६।।

---

३ कख का. * राष्ट्रं कृतमद्वीरवज्जिष्णु उग्रमिदं * गदमश्चि . . .।
म. . . . . . . . . .गर्दूनुम(चि→) च्चित्रघोषं।
गघ का. अस्मे राष्ट्रा बलमंनेहरंत्वहं * * *।।
मा. * * वलिमनेहरन्तहं * * *।।

४ कख का. * युद्धे यद् मृजतं * स्तु देवैनसद् * * *।
गघ का. * येन ऋत्वियाद् * *;
म. . . . ध्वेनवो *;

५ क का. यद्वष् * मनसा यश्च * देवेनसाद् * * * आपैव दुष्वप्रिमपिदत्
स्ववध्वमथानन्दिनसुसुमनसस् सुमेता.
मा. मन्त्रान्ते दण्डेनैकेन विरामः।

६ कख का, मा. पादद्वयमेतदनुपलब्धम्।
गघ का. * * धिनं भजंत्व * * * प्रप्रथयन्तु *;
मा. . . . . . . . . . पथयन्तु *।।

सम्यग् वो राष्ट्रं सह वो मनांसि
समीचीनाः पशवो विश्वरूपाः।
समीचीनानां वो अहमस्मि ब्रह्मा
सम्यञ्चो देवा हवमा यन्तु म इमम्।।७।।

यथापः समुद्राय समीचीर्वहथ श्रियम्।
एवा राष्ट्राय मे देवाः सम्यञ्चो वहथ श्रियम्।।८।।

संसृष्टं वो राष्ट्रं पशुभिर्गोभिरश्वैः
संसृष्टमन्नेनेरया रसेन।
मया ब्रह्मणा प्रथमानाश्वो वशीयांसः
सदमुग्रा भवाथ।।९।।

बहुर्युवा प्रमृणो धृष्णुरस्तु बहुः कुमारः
प्रतिरूपः पितृणाम्।
सत्यं वदन्तः समितिं चरन्तो मित्रं गृह्णाना
जरसो यन्तु सख्यम्।।१०।।

---

७ ख का. समीचीनां * * ;
ग म, मा. समीचीनानाम् . . . . ; का. . . . नानं वो . . . ;
घ का. * * हवामा * मेयिमम्।
८ कख का. यथापस् . . . . . . र्वहतु *।
गघ का. * राष्ट्रांय * * * वहतु *।
९ कख का. * * * प्रथयन्तु गोभिरश्वैस् . . . मन्येनेरया *।
उ. संसृष्टिम् . . . . . .।
गघ का. मय ब्रह्मणा प्रथमानांसो वशीयांस स्वदमुग्रा *।
१० का. . . र्योवा प्रसृणोधृष्णिरस्तु बहुकुमाराष् पतिरूपाष् पितृणां * वदन्तस् सुमतिं * * * जनसो * सख्यं ;
ग म. सत्यम् * * * .

इह क्षत्रं द्युम्नमुत राष्ट्रं समैत्विहेन्द्रियं
पशुभिः संविदानम्।
अवधुन्वाना अप्रियान् यांश्च द्विष्म इदं राष्ट्रं
प्रथतां सर्वदेव।।११।।

इदं राष्ट्रमिषुमद्वीरवज्रिष्णूग्रमिदं राष्ट्रं
पशुमद् ब्रह्मवृद्धम्।
इदं राष्ट्रं हतशत्रु जिष्णु।।१२।।

सपत्नसाहं प्रमृणमिदं राष्ट्रं दृढमुग्रम्।
साढामित्रमभिमातिषाहं सर्वा जिगाय
पृतना अभिष्टि।।१३।।

१०.५

(शौ.१९.३१)

औदुम्बरेण मणिना पुष्टिकामाय वेधसा।
पशूनां सर्वेषां स्फातिं गोष्ठे मे सविता करत्।।१।।

यो नो (ऽ)ग्निर्गार्हपत्यः पशूनामधिपा असत्।
औदुम्बरो वृषा मणिः सं मा सृजतु पुष्ट्या।।२।।

---

११ कख का. * * * शमीत्विन्द्रियं * संविदानं ;
मा. * * * राष्ट्रंः . . . त्विन्द्रियं * सम्विदानं।
म. . . . . सम्विदानं।
गघ का. मध्नत्वानाप्रियान् याश्च द्विष्मेदं * * सर्वदिव।

१२ कख का. * राष्ट्रं कृतमद्वीर . . . . राष्ट्र * व्रह्मवृद्धं।
ग का. * * हतशत्रू * ;
मा. * * हतशतृ *।।

१३ का. * प्रमृणामीदं . . . . . सर्ग * धृतवा वृष्टिः z ४ z

१ ख का. * वेधसी.
घ का. गोष्ठं * * *।

२ क का. * अग्निर्गार्हपत्यष् ;
घ उ. सम्मृमा * *।।

करीषिणीं फलवतीं स्वधामिरां च नो गृहे।
औदुम्बरस्य तेजसा धाता पुष्टिं दधातु मे।।३।।

यद् द्विपाच्च चतुष्पाच्च यान्यन्नानि ये रसाः।
गृह्ले (ऽ)हं तेषां भूमानं बिभ्रदौदुम्बरं मणिम्।।४।।

पुष्टिं पशूनां परि जग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम्।
पयः पशूनां रसमोषधीनां बृहस्पतिः सविता
मे नि +यच्छात्।।५।।

अहं पशूनामधिपा असानि मयि पुष्टं पुष्टपतिर्दधातु।
मह्यमौदुम्बरो मणिर्द्रविणानि नि यच्छतु+।।६।।

---

३ कख का. करीषिणं फलावतीं . . . . . . गृह।
मा. करीषिणी . . . स्वधामिरात्र् * * *।
गघ का. उदुम्बरस्य * * * * ते।
घ म. आदितोऽलब्धोऽयं पादः केनापि प्रथमपङ्क्त्या वामपार्श्वे लिखितो दृश्यते।

४ का. * द्विपाश्चतुष्पाश्च यान्या ये रसा। गृह्णीयां तेषां भौमानं बिभ्रता उदुम्बरं रमणिं ;
उ. यद्विपाद्य . . . . .।।

५ ख का. * * यश्च धान्यं ;
ग का. पयः। पशूनां . . . ;
घ मा. वृहस्पतिं * * * यछात्।।
म. * * * * यछात्।।

६ कख का. * पशूनामधिपामानि * पुष्टिं पुष्टिपतिर्द . .।
गघ का. "मणिर्द्रविणानि . . ." अलब्धम्।
मा. . . . मणिद्रविणानि * यछतु।।
म. . . . द्रविणा * यछतु।।

उप मौदुम्बरो मणिः प्रजया च धनेन च।
इन्द्रेण जिन्वतो मणिरा मागन् सह वर्चसा।।७।।

देवो मणिः सपत्नहा धनसा धनसातये।
पशोरन्नस्य भूमानं गवां स्फातिं नि यच्छतु[+]।।८।।

यथाग्रे त्वं वनस्पते पुष्ट्या सह जज्ञिषे।
एवा धनस्य मे स्फातिमा दधातु सरस्वती।।९।।

आ मे धनं सरस्वती पयस्फातिं च धान्यम्।
सिनीवाल्युता वहादयं चौदुम्बरो मणिः।।१०।।

---

७ क का. "उप मौदुम्बरो" अलब्धम्।
गघ का. * * मणिरामं सह वर्चसः।
८ का. * मणिसूसपत्नहा * धनसाये।
पशोरन्यस्व भौमानं * * * यश्छतु।
घ उ. . . . . . यछतु।। म. मन्त्रान्ते दण्डेनैकेन विरामः।
९ ख मा. * * जज्ञिसे।
घ का. . . ददाति सरस्वतीं।
१० क का. मे धिनो *;
उ. शिनीवाल्युता . .
घ का. . . चोदुम्बरो *।। ओं अयं चोदुम्बरो मणिः।।
मा. . . यञ्चौदम्बरो *।।
म. . . यञ्चौदुम्बरो *।।
द्र. उ. मन्त्रान्ते मङ्गलचिह्नम्।

त्वं मणीनामधिपा वृषासि त्वयि पुष्टं पुष्टपतिर्जजान।
त्वयीमे वाजा द्रविणानि सर्वौदुम्बर
स त्वमस्मत् सहस्वा-
रादरातिममतिं क्षुधं च।।११।।

ग्रामणीरसि ग्रामनीथ्याया अभिषिक्तो अभि
मा सिञ्च वर्चसा।
तेजो (ऽ)सि तेजो मयि धारयाधि रयिरसि
रयिं मयि धेहि।।१२।।

पुष्टिरसि पुष्ट्या मा समङ्धि गृहमेधी गृहपतिं मा कृणु।
औदुम्बर स त्वमस्मासु रयिं सर्ववीरं नि यच्छ+
रायस्पोषाय प्रति मुञ्चे अहं त्वाम्।।१३।।

अयमौदुम्बरो मणिर्वीरो वीराय बध्यते।
स नः सनीं मधुमतीं कृणोतु रयिं च नः
सर्ववीरं नि +यच्छात्।।१४।।

इति प्रथमोऽनुवाकः

---

११ का. औं * मणीनामिपा वृषामि त्रै पुष्टिं पुष्टिपतिर्जजान। त्वयिमे * द्रविणनि सर्वोदुम्बर * त्वमस्सत् सहस्वरादरातिमभितिक्षयं च।
मा. * मणिनामधिपा .....। त्वयिमे ... रतिं ममतिं क्षुधञ्च।
म. * र्माणानामधिपा .....। ... क्षुधञ्च।।

१२ का. . . ग्रामणीश्छायाभिषिक्तोभि मा सिच * * * * * धारयानधरीरशरीर्मयि * ;
मा. . . ग्रामनीध्यया .........

१३ का. ..... समगृधि गृहमेधे गृहपतिन् * *। उदुम्बर सत्वेमेस्मासु रय्यं * * यश्छ * * * * तां ;
मा. ... पुष्ट्य * * * * * * * । ...... नीयछ ...।।
म. ............ वछ .......।।

१४ का. अयमोदुम्बरो ........ उच्यते। .... नि यश्छात् z
५ z

## १०.६

भगस्य राज्ञः सुमतिं गमेम यं हवन्ते
बहुधा मानुषासः।
कर्म कृण्वानो भगमा वृणीते स नो जनेषु
सुभगां कृणोतु।।१।।

भगं पुरस्तात् प्रतिबुध्यमानाः पश्येम
देवीमुषसं विभातीम्।
प्रतीची शुभ्रा द्रविणेन साकं भगं
वहन्त्यदितिर्न ऐतु।।२।।

भगो नो अद्य स्विते दधातु देवानां
पन्थामभि नो नयेह।
अर्वाची भद्रा सुमतिर्न ऐत्वधा भगेन
समिधो नो अस्तु।।३।।

भगेन वाचमिषितां वदानि सरस्वतीं
मधुमतीं सुवर्चाः।
भगेन दत्तमुप मेदमागन्[+] यथा वर्चस्वान्
समितिमावदानि।।४।।

---

१०.६.१ ख का. यो * * *।
घ का. * * जवेषु * *;
२ कख का. * * प्रतिवुद्ध्यमाना * देवीसुशसं *
क मा. * * पृतिवुध्यमानाः;
घ का. * वहत्वदितिन्ना एतु। उ. * वहंत्यदितिर्न *।।
३ का. * * घस्सविते * देवानां पन्थाविभिनो न एहि।
* भद्रस्सुमितिन्न एत्वधा भगेम सुमता * स्तु z
क मा. * * * स्वितेमो *;
४ ख-घ का. सरस्वती * सुवर्चसः भगेना . . . . मेदमागांन् * * ममितिमा
. . . .।
ग उ. * . . मुप वेदमागन्;

भगो मा गोष्ववतु भगो मावतु धान्ये।
अक्षेषु स्त्रीषु मा भगो भगो मावतु वर्चसा।।५।।

भगो मा सायमवतु भगो मावतु रात्र्या।
भगो निपद्यमानेषु प्रातर्मा भग आ गमत्।।६।।

भगो मा प्रातरवतु भगो माध्यन्दिनं परि।
अपराह्णे वयं भगं वास इव परि दध्महे।।७।।

भगं देवेभ्यस्परि भगं मनुष्येभ्यः।
दिवस्पृथिव्या अहमन्तरिक्षाद् भगं वृणे।
सो अग्रे रमता मयि स मा प्रावतु वर्चसा।।८।।

भगं वृणाना वध्वं वहन्ति वर्नि
प्रयन्तो भगमिद्धवन्ते।
भगेन दत्तमुप मेदमागन् विश्वं सुभूतं
द्रविणानि भद्रा।।९।।

---

५ क का * * गाष्ववतु ;
५घ,६क का. नोपलभ्यते पादद्वयमिदम्।
६ ख-घ का. * * रात्त्या * नमध्यमानेषु . . . भगागमत्।
घ मा. . . भगमागमत्।
७ का. मध्यन्दिनं परि।
अपराह्णे * * वासैव परि दर्मते।
मा. . . . . . . . माध्यंदिनं *। . . .
८ का. * देवेभ्यससुभगं * * . . . . . व्याहमन्त . . . . । सोग्रे रमतां . . . . . .।
च म. 'वर्चसा' इत्यतः दण्डेनैकेनच्छेदः।
९ का. * वृणा वग्वं * वनि . . . . .।
* . . मेदमागं * भूतं द्रविणेन *।
ग उ * . . वेदमागन् ;

भगेन देवाः समगन्महि य इमा
विश्वा भुवनाभिवस्ते।
+प्रयच्छन्नेति बहुधा वसूनि स नो
दधातु यतमद्वसिष्ठम्।।१०।।

वातो भगो वरुणो वायुरग्निः क्षेत्रस्य पत्नी
सुहवा नो अस्तु।
हिरण्याक्षो अतिपश्यो नृचक्षाः सर्वैः साकं सच-
मानो न एहि।।११।।

उदेहि देव सूर्य सह सौभाग्येन।
सहर्षभस्य वाजेन सहावतंकरणेन।।१२।।

पै.८.२०.११ हिरण्ययेन [चक्रेण भगस्यापिहितो गृहः।
तं व्युब्जामि ब्रह्मणा तस्य मे दत्तमश्विना
दत्तं मे पुष्करस्रजा]।।१३।।

१०.७

(शौ.१६.२७.१-१०)

गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः।।१।।

---

१० का. * देवास् समगन्म यीमा विश्वा . . .।
प्रयश्छन्नयति * *। * * दधात्वतमद्वसिष्ठं ;
गघ उ. प्रयछन्नेति * * * * * यतमद्वशिष्टं।।

११ ख-घ का. * * * * स्तु।
* अधिपश्यो नृचक्षास् सर्वैस्माकं सजमानो * *

१२ का. सा ऋषभस्य . . .।

१३ का. हिरण्येनेत्येका Z६Z द्र. अनुवाकसमाप्तिः
उ. हिरण्ययेनेत्येका।।१३।।ऋ।।

१०.७.१ का. . . पात्वर्षभो वृष * * *
. . व्राह्मणा त्विन्द्रस्त्वा पात्विन्द्री.
मा. . . पावृषभो . . . .। . . . . . .।।

सोमस्त्वा पात्वौषधीभिर्नक्षत्रैः पातु सूर्यः।
मान्द्भिष्ट्वा चन्द्रो वृत्रहा वातः प्राणेन रक्षतु।।२।।

तिस्रो दिवस्तिस्रः पृथिवीस्त्रीण्यन्तरिक्षाणि चतुरः समुद्रान्।
त्रिवृतं स्तोमं त्रिवृत आप आहुस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः।।३।।

त्रीन्नाकांस्त्रीन् समुद्रांस्त्रीन् ब्रध्नांस्त्रीन् वैष्टपान्।
त्रीन्मातरिश्वनस्त्रीन् सूर्यान् गोप्तॄन् कल्पयामि ते।।४।।

घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन्।
अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन्।।५।।

मा वः प्राणं मा वो (ऽ)पानं मा हरो मायिनो दभन्।
भ्राजन्तो विश्ववेदसो देवा दैव्येन मावत।।६।।

---

२ का. मोमस्त्वा पात्वोष . . . . . . माधितिस्त्वा * * * * * ;
ग मा. मामिष्ट्वा * * * * *। द्र. अस्यैवापपाठः "मान्द्भिरिष्ट्वा इन्द्रो वृत्रहा"। म. भाष्य. ७.४.४८।

३ कख मा. . . . . . . . . . पृथिवीस्त्रिण्यन्त . . * *।
गघ का. * * त्रिवृताप . . . . त्रिवृतास् त्रिवृतिभिः।
मा. . . . . . . त्रिवृतात्रिवृतात्रिवृद्भिः।।

४ का. त्रीन्नाकां त्रीणि समुद्रां त्रीणि व्रध्नां त्रीणि वैष्टपां त्रीणि . . . . . . त्रीणि * गोपितृन् * * ;
गघ मा. . . . . . . . . नस्त्री सूर्यान् * * *।।

५ कख का. * * समुक्षाम्यग्राज्येन वर्धयं ;
ग मा. अग्नेश्चन्द्र *.
घ का. * * * दभं।

६ कख का. * व * * योपानं * * मीयनो दभं।
गघ का. * विश्यवेदमो * * मावतष्;
मा. . . . . . मातवः।

प्राणेनाग्निं सं दधति वातः प्राणेन संहितः।
प्राणेन विश्वतोमुखं सूर्यं देवा अजनयन्।।७।।

आयुषायुष्कृतां जीवायुष्मां जीव मा मृथाः।
प्राणेनात्मन्वतां जीव मा मृत्योरुप गा वशम्।।८।।

देवानां निहितं निधिं
यमिन्द्रान्वविन्दन् पथिभिर्देवयानैः।
आपो हिरण्यं जुगुपुस्त्रिवृद्भि-
स्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः।।९।।

त्रयस्त्रिंशद् देवतास्त्रीणि च वीर्याणि
प्रियायमाणा जुगुपुरप्स्वन्तः।
अस्मिंश्चन्द्रे अधि यद्धिरण्यं
तेनायं कृणवद् वीर्याणि।।१०।।

---

७ कख　का. . . . . . दधत * * संहत;
　　उ. . . सन्दधति * * * ।
घ　का. . . . . . * देवाजनयं ;
८ कख　का. आयुष्कृता . . . . . * सा मृषा → था ;
गघ　का. . . . नात्मान्व्यतां * * * * विषं।
　　मा. . . . . . मृत्योरप सावसं।। 'सा' इत्यस्योपरि 'सं' इत्यस्य चोपरि ^^ इत्येवं चिह्नं कृतम्। तत् शकारद्योतकम्।
९　का. * निहतां निधिर् ;
ख　का. ममिन्द्रान्वविन्दं . . . . . . .
ग　का. * * जुगुभिस्त्रिवृद्भिः; मा. * हिण्यं . . . . .
घ　का. . . . त्रिवृतास् *.
१० क　का. * देवास्त्रीणि * *
ख　का. * . . . रुपूस्वन्तः।
घ　उ . . कृणुवद् *।।७।। ऋ१०(मा. ११)।।

१०.८

(शौ.१९.२७.११-१५)

ये देवा दिव्येकादश स्थ ते देवासो
हविरिदं जुषध्वम्।।१।।

ये देवा अन्तरिक्ष एकादश स्थ
[ते देवासो ......]।।२।।

ये देवाः पृथिव्यामेकादश स्थ ते देवासो
हविरिदं जुषध्वम्।।३।।

पै.१२.६.५-६ असपत्नं पुरस्तात् पश्चान्नो [ऽ]भयं कृतम्।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः।।४।।

दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः।
इन्द्राग्नी रक्षतां मा पुरस्ता-
दश्विनावभितः शर्म यच्छताम्[+]।
तिरश्चीनघ्न्या रक्षतु जातवेदा
भूतकृतो मे सर्वतः सन्तु वर्म।।५।।

---

२-३ का॰ नास्तीदं मन्त्रद्वयम्।

४ का. असपत्नं .........। * * दक्षिणतु उत्तरांनमा *

५ ख का. * रक्षन्तुग्रयः।
घ का. .... वभितश् चर्म यश्छतां ;
उ. .......... यछतां।
ङ का. तिरश्चीनाग्न्या * *
च का. * * सर्वतस् * वर्मः Z२Z

१०.६

शौ.१६.१.३,४; ये [ऽ]पुस्वन्तरग्रयः प्रविष्टा ग्रोको मनोहा खनो निर्दाह
छा.म.ब्रा.१.७.१ आत्मदूषिस्तनदूषिः।
द्र. इदं तानति सृजामि निरेनो निरनृतं सृजामि।।१।।

अभूत्यासत्वाय निर्दुःष्वप्न्यं सृजामि।
वसिष्ठारुन्धती मा पातां
प्रजापतेः प्रस्तरो बृहस्पतेः केशाः।।२।।

अदब्धं चक्षुः सुश्रुती कर्णावक्षितौ मे प्राणापानौ।
हृदया जरसं मा मा हासीर्मध्य मा रिषम्।।३।।

आपो मा शुन्धन्तु दुष्कृताद् दुरिता यानि चकृम।
अयाम शुद्धा उदितस्तनूभिः।।४।।

---

१ क-ग का. * पूस्वन्तः अग्रयष् प्रविष्टस् स्रोको * * निर्दह।
. . . . . स्तनोदूषि.
घ का. * त्वानतु सृजामि निरएनं निर्ऋतं *।
उ. इदन् . . . . . . . . ।।

२ कख का. आभूत्या सत्वोय निर्दुष्वप्न्यं सुवामि।
मा. * * निर्दुःस्वप्न्यं *।
गघ का. * * मामा * * * * *;
मा. वशिष्ठा अरुन्धती * * * परस्तरो * *;
म. वशिष्ठारुन्धती * * * प्र (←पर) स्तरो * *।।

३ का. अर्धुधं चक्षुश् शुश्रुती कर्णावक्षतौ। प्राणापानौ * * मासीन्
मध्यमारिषं।
घ उ. . . . र्मध्यमार्षं।।

४ कख का. * * * दुष्कृता * योमा *।
मा. * * * दुष्कृता * * चकृम।
म. . . . . . . . . चकृम।
ग का. अयोम * . . . स्तनोभिः ;

शौ.६.६२.१ वैश्वानरो रश्मिभिर्नः पुनातु
वातः प्राणेनेषिरो नमोभिः।
द्यावापृथिवी पयसा पयस्वती
ऋतावरी यज्ञिये मा पुनीताम्।।५।।

पुनन्तु माग्नयो गार्हपत्याः
पुनन्तु मा धृष्णिया देवहूताः।
पुनन्तु मा शक्वरीः सोमपृष्ठाः
पवमानासो अग्निणः।।६।।

यः पोता स पुनातु मा बृहद्भिर्देव सवितः।
+वर्षिष्ठैर्द्यामिवोपरि।।७।।

ब्रह्मसवैः पुनातु मा राजसवैः पुनातु मा।
गघ मै.१.२.१ शतं पवित्रा वितता तिरश्चा+
तेभिर्मा देवः सविता पुनातु।।८।।

शतं च मा पवितारः पुनन्तु सहस्रं च प्रस्रवणेष्वापः।
आष इव पूतो ऽस्यग्निरिव सुवर्चाः
सूर्य इव सुचक्षाः।।९।।

---

५ ख का. * प्राणेनेशिरो नवोभिः.
घ उ. . . . यज्ञे . . . ।।

६ का. * मा अग्नयो * * * पृष्ण्यादेदेवज्रतां।
* * शक्वरीस् सोमपृष्ठाष् * वग्निणः ;

७ का. यष् पविता म * * * * वर्षिष्ठ्यैर्द्यात्मवोपरि;
मा. . . . . . . . . . . वरिशिष्ठौद्यामिवोपरि।
म. . . . . वरिशिष्टैद्यामिवोपरि।

८ ग का. * * * तिरश्चया ; द्र. अक्षरं भग्नम्।
उ. * * * तिरश्वा ;

९ कख का. . . . . . पवितारष् * * * स्रव . . . ।
ख उ. सहस्रञ् च . . . . .।
गघ का. * * * स्त्यग्निरिव सुवर्चा * * सुचक्षा.
मा. * * * ऽस्वग्निरिव * * * *।।

शौ.१८.२.१३ उरूणसावसुतृपा उदुम्बली यमस्य दूती चरतो जनाँ अनु।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम्।।१०।।

१०.१०

कख तु.शौ.१६.९.३ अगन्म देवाः स्व(ः) स्वरगन्मा-
गन्म ज्योतिर्ज्योतिरगन्म।
महेन्द्रोसि परमेष्ठी सुमित्र विश्वतोमुख
शौ. ७.६८.३ग मा ते युयोम* संदृशः।।१।।

द्र. शौ.१३.१.३२ उद्यन्नद्य चित्रमहः सपत्नान् मेव जहि।
दिवैनान् रश्मिभिर्जहि रात्र्यैनांस्तमसा वधीस्
ते यन्त्वधमं तमः।।२।।

शौ.१०.५.३७कख सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम्।
अग्नेस्तेजसा तेजस्वी भूयासमिन्द्रस्येन्द्रियेणेन्द्रियावान्
भूयासम्।।३।।

---

१० कख का. उरूणसावसृपा उदुम्बरौ * * चरतौ जनां *।
मा. उरुणसावसुतृपा * * * * जनाङ्नु।
म. उरुणसावसुतृपा * * * * जनाङ् *।
गघ का. . . . . . . . . . दृशे दृशे दृ *। . . . . . . मस्मद्देहि *z३z
मा. . . . . . . . . . . . . . मसुमनूदेह *।।

१०.१०.१ का. अगन्देवा सु . . . . मागर्मज्योतिरगन्म * * * * माते अयानि
संदृशः; मा. स्वस्व- इति प्रथमपादच्छेदः।
ख मा. गन्मर्ज्योतिरगन्म। ङ उ. . . . युजोम * ।।

२ कख का. . . . . . . . मित्रमहस् सपत्नांनेवजहि
गघ का. दिवीनां रश्मिभिस् सह रात्रीणांस्तमसा वधी।
मा. . . . . . रश्मिभि जहि . . . . . . . . . . . . .
ङ का. स्तेहंत्वधमंतमा.
उ. * यन्त्वधमन् *।।

३ क का. . . . . . . . . . . . . मन्वावृते.
गघ का. . . . . . . . . . . . . . भूयामसिन्द्रस्येन्द्रियणेन्द्रियावान् *।
मा. . . . . . . . . . . . . . भूयासंमिन्द्र . . . . . . . . . . *।

३६द्र. इदमहमग्नेस्तेजसेन्द्रस्येन्द्रियेण सोमस्य द्युम्नेन
विश्वेषां देवानां क्रतूनाम्।
अमुष्यामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेज इन्द्रियं
प्राणमायुर्नि वेष्टयामि।।४।।

आयुर्नि यच्छेत्[+]।।५।।

इदमहमग्नेस्तेजसेन्द्रस्येन्द्रियेण सोमस्य द्युम्नेन
विश्वेषां देवानां क्रतूनाम्।
अमुष्यामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेज
इन्द्रियं प्राणमायुरादाय।।६।।
अभूत्या एनं पाशे सित्वा दुःष्वप्न्येन संसृज्य
मृत्योर्व्यात्त आसन्नपि दधामि।।७।।

१०.११

पै. १२.६.४क यो नः स्वो यो अरणो भ्रातृव्यश्च जिघांसति।
इन्द्रश्च तस्याग्निश्च मर्म स्कन्धेषु विन्दताम्।।१।।

---

४ कख का. . . . . . . . . . . . स्तेजस्वेन्द्रस्येन्द्रियेण * * ;
मा. इहमहमग्ने . . . . . . . . . . . . . . . . . . * * ;

४ गघङ का. * * क्रतूनामुष्यामुष्यायणस्यामुष्याः . . .; मा. . . . अस्यामुष्या
. . . ।।

५ का. आयुन्नियश्छेत्। उ. . . . . . . . . यछेत्।।

द्रः ५ प्राणमित्यन्तो भागः इहापि योज्यो न वेति चिन्त्यः। तर्हि नि यच्छे
इति मन्त्रस्यान्तो भवेत्।

६ का. . . . . . . . . . . . . . स्वेन्द्रस्येन्द्रियेण * * * *
क्रतूनामुष्यामुष्यायणस्यामुष्याः . . . . . . ।

७ का. तूत्यायनं * शित्वा दुष्ष्वप्नेन * . . . व्यात्तासंनपि * z४z
मा. * * * * * संसृर्ज्य . . . . ।। १०।।ऋ७।।

१०.११.१ घ मा. * स्कन्धेष *।।

यो मा शयानं जाग्रतं यश्च सुप्तं जिघांसति।
इन्द्रश्च तस्याग्निश्च बाहू मर्मणि वृश्चताम्।।२।।

यो मा चरन्तं तिष्ठन्तमासीनं च जिघांसति।
इन्द्रश्च तस्मिन्नग्निश्च दुरितं प्रति मुञ्चताम्।।३।।

यो मा चक्षुषा मनसा यश्च वाचा जिघांसति।
इन्द्रश्च तस्मा अग्निश्चैनांसि वहतामितः।।४।।

यः पिशाचो यातुधानः क्रव्याद् यो मा जिघांसति।
इन्द्रश्च तस्याग्निश्च मूर्धानं प्रति विध्यताम्।।५।।

यो मा ब्रह्मणा तपसा यश्च यज्ञैर्जिघांसति।
इन्द्रश्च तस्याग्निश्च हृदये [ऽ]धि नि विध्यताम्।।६।।

यो मे ब्रह्म यो मे तपो बलं श्रेष्ठं जिघांसति।
इन्द्रश्च तस्मा अग्निश्च क्रुद्धौ दिग्धाभिरस्यताम्।।७।।

---

२ क का. * * शय्यानां *.

३ कख मा. . . . मासीनञ् च जिघांसतिं। म. . . . मासीनञ् * * ।
ग का. . . . . . . तमस्मिन्नग्निश्च .

४ ख का. श्च * * ।
गघ का. . . . . . तस्माग्नि हिनांसि वहतापिता;
मा. . . . . . तस्या अग्निश्चै . . . . . . . . . .।।

५ कख का. यष् * यातुधानष् * * मां *।
गघ का. = ७ गघ

६ घ का. हृदये धन विन्धतां।

७ कख का. * * व्रह्म * * तपं * * *।
मा. * मो * * * * * श्रेषं *।
गघ का. . . . तस्माग्निश्च मूर्धानं प्रति विन्दतां। = ५गघ

योे मे अन्नं यो मे रसं वाचं श्रेष्ठां जिघांसति।
इन्द्रश्च तस्मा अग्निश्चाच्छम्बट्कारमस्यताम्⁺।।८।।

यो मे तन्तुं यो मे प्रजां चक्षुः श्रोत्रं जिघांसति।
इन्द्रश्च तस्मा अग्निश्च हेतिं देवेषु विन्दताम्।।९।।

यो मे गोभ्य *इरस्यत्यश्वेभ्यः पुरुषेभ्यः।
इन्द्रश्च तस्मा अग्निश्च ⁺ज्यानिं देवेषु विन्दताम्।।१०।।

१०.१२

यो मे भूतिमनामयद्वित्तमायुर्जिघांसति।
इन्द्रश्च तस्मा अग्निश्च दिवो अश्मानमस्यताम्।।१।।

यो मे वेश्म यो मे सभां श्रियं श्रेष्ठां जिघांसति।
इन्द्रश्च तस्याग्निश्च कृत्यां वि तनुतां गृहे।।२।।

---

८ ख का. * श्रेष्ठं *।
गघ का. . . . तस्मादग्निश्चातूसं हट्कारमस्यतां।
उ. ग नास्ति। घ उ. चात्संवट् . . . ।।

९ गघ का. . . . तस्माग्निश्चेहितं * *.
उ. "इन्द्रश्च * अग्निश्" नास्ति।

१० कख का. * * गोभीदश्चदश्वभ्यष् * .
मा. * * * इरश्वत्यशेभ्यः *।
म. * * * इरश्वत्यश्वेभ्यः *।
गघ का. . . . तस्माग्निश्च ज्यानं * * z५z
मा. . . . . अग्निचर्यानिं *. *।।११।।
म. . . . . त(स्मा→)स्या अग्निश्चर्यानिं * *।।११।।र।।

१०.१२.१ कख का. * * . . . . . . यद्घुतुमायुर्जि . . .।
गघ का. . . . . . तस्माग्निश्च दिवो श्मशानमस्यतां.
मा. . . . . . . अस्मानमस्यतां।।

२ कख का. * * वेश्मि * * शफां * श्रेष्ठं *।
घ का. * व्य तनतां *।

योमे मृत्युमसमृद्धिमह्ना रात्र्या चेच्छति+।
इन्द्रश्च तस्याग्निश्चार्चिषा दहतां स्वम्।।३।।

यो मे प्राणं यो मे [ऽ]पानं व्यानं श्रेष्ठं जिघांसति।
इन्द्रश्च तस्याग्निश्च प्राणं प्राणहनौ हताम्।।४।।

यो मा देवजनैः सर्पैर्विद्युता ब्रह्मणाभ्यमात्।
अगस्त्येन मेदिनेन्द्रश्चाग्निश्च तं हताम्।।५।।

तं सत्यौजाः प्र दहत्वग्निर्वैश्वानरो वृषा।
यो मा दुरस्यन्नीक्षातै यश्च दिप्सति विद्वलः।।६।।

शौ.४.३६.२ यो मा दिप्सादिदिप्सन्तं यश्च दिप्सति दिप्स तम्।
वैश्वानरस्य दंष्ट्रयोरग्रेरपि दधामि तम्।।७।।

---

३ कख का. * * . . ममृद्धिम . . . देत्समि। उ. चेत्सति।
द्र. ख < चेर्त्सति ?
ग उ. नास्ति।

४ घ का. * प्राणानूहतां।

५ कख का. * * देवजनैस् . . ., र्विधता ब्राह्मणाधमा।
म. * * * . . र्विद्युताद्ब्रह्मणाभ्यमात्।
'सर्पैर्वि' इति अंशतो नष्टम्।
गघ का. * मेदिने। इन्द्रश्चाग्निश्च * हतां.
मा. * मेदिने इन्द्रश्चाग्निश्च * हतां।।

६ कख का. त्वं सभ्य उदा प्र दहत्वमग्निर्वैश्वा . . . .।
मा. * सत्योजाः . . . . . . .।
गघ का. * * तुरस् सं देक्षातैर्यश्च * विद्वला।
घ म. . . . . विद्वळः।।

७ का. * * दिप्सातिदिप्सन्तं
गघ का. . . . . . . . ऋधामि तं।
मा. * दंष्ट्रायोरग्रेरपि * तं।।

अभि तं द्यावापृथिवी सं तपतां तत्ते घर्मे न्युच्यताम्।
निर्ऋत्या वध्यतां पाशे यो नः पापं चिकित्सति।।८।।

प्रत्यग्वधेन प्रच्युतान् भ्रातृव्यान् घोरचक्षसः।
घ.शौ.११.९.१३ग इन्द्राग्नी एनान् वृश्चतां मैषामुच्छेषि+ कश्चन।।९।।

प्रत्यग्वध प्रत्यग् जहि भ्रातृव्यान् द्विषतो मम।
अपानान् प्राणां संछिद्य द्विषतस्पातयाधरान्।।१०।।

अग्ने ये मा जिघांसन्त्यग्ने ये च द्विषन्ति मा।
अग्ने ये मोपतप्यन्ते तेषां प्रियतमं जहि।।११।।

---

८ कख का. **** तप्तां तत्ते घमे न्युच्यतां।
उ. *** सनूतपतां .......।
ग मा. निर्ऋत्यां **;
९ क = का. १०क प्रत्युवधेन प्रच्युतां.
ख का. भ्रातुर्व्यां घोरचक्षसा।
मा. * घोरचक्षः।
म. * घोर(घ→)चक्षसः।
गघ का. * एनां * महिषामुत्सेषि ....।
मा. * एतान् * मैषामुत्शेषि ...।।
म. *** मैषामुत्शेषि ....।।
१० क = का. ९ क प्रत्यग्वधः प्रत्युज्ञहिः.
ख का. भ्रातृव्यां **।
गघ का. अपानां * सचिदूयद् द्विषतस्पारयाधरा।
मा. अपान् ** .....।।
११ कख का. *** जिघांसंत्वग्ने *** मां
उ. *** जिघांसंत्यग्ने ****।
घ मा. * प्रियंतमं *।।

एतं द्विषन्तमवधिषमन्धेन तमसावृतम्।
एतं मृत्यो [ऽ]भि पद्यस्व मा ते मोचि महोदरः।।१२।।

१०.१३

द्यावापृथिवी सं नह्येथां मम राष्ट्राय जयन्ती
अमित्रेभ्यो हेतिमस्यन्ती।।१।।

वातापवमानौ सं नह्येथां मम राष्ट्राय जयन्ता-
वमित्रेभ्यो हेतिमस्यन्तौ।।२।।

इन्द्राग्नी सं नह्येथां [मम राष्ट्राय . . . . . .]।।३।।
मित्रावरुणा सं [नह्येथां मम राष्ट्राय . . . .]।।४।।
भवाशर्वौ सं [नह्येथां मम राष्ट्राय . . . ]।।५।।
अश्विना सं नह्येथां मम राष्ट्राय जयन्ता-
वमित्रेभ्यो हेतिमस्यन्तौ।।६।।

---

१२ कख का. वतं . . . . . . . . ।
गघ का. यतं मर्त्यो . . . . . . . .zz६z
मा. . . . . . . . . महोमहोदर ो।१२।।ऋ।।
म. . . . . . . . महोदर।। १२।।ऋ।।

१०.१३.१ क का, उ. * सन् *.
ग का. असितेभ्यो . . . .।

२ कख का. * * नह्येषां * * जयंता
उ. * सन् * * * *
ग का. अमित्रेभ्यो हेतिमस्यन्तां

३ उ. इन्द्राग्नीसं।।

४ का. मित्त्रावरुणा।

५ का. भवाशर्वा *।

६ कख का. * * नह्येषां * * जयन्ता।
उ. * सन् * * * *.
ग का. अमित्रेभ्यो . . .
मा. वमित्रे . . .।।

मरुतः सं नह्यध्वं मम राष्ट्राय जयन्तो
[ऽ] मित्रेभ्यो हेतिमस्यन्तः । ।७ । ।

पितरः सं नह्यध्वं मम राष्ट्राय जयन्तो
[ऽ] मित्रेभ्यो हेतिमस्यन्तः । ।८ । ।

सूर्याचन्द्रमसी सं नह्येथां मम राष्ट्राय जयन्ता-
वमित्रेभ्यो हेतिमस्यन्ती । ।९ । ।

अहोरात्रे सं नह्येथां मम राष्ट्राय जयन्ती
अमित्रेभ्यो हेतिमस्यन्ती । ।१० । ।

१०.१४

गन्धर्वाप्सरसः सं नह्यध्वं मम राष्ट्राय जयन्तो
[ऽ] मित्रेभ्यो हेतिमस्यन्तः । ।१ । ।

सर्पपुण्यजनाः सं [नह्यध्वं . . . . . .] । ।२ । ।

---

७ कख म. * सन् * * * *.

८ क मा. * सन्नध्वं .
म. * सन् *.

९ कख का. * सन् नह्येषां * * जयन्ता ।
उ. * सन् * * *.
ग का. अमित्रेभ्यो हो हेतिमस्यन्तौ.

७-९ मा. पुनरपि यथापूर्वं लिखिताः ।

१० क का. * सन् नह्येषां.
उ. * सन् . .

१०.१४.१ कख का. गन्धर्वापूसरसस् सन्नह्यध्वं * * जयन्ता.
मा. * सन्नध्वं * राष्टाय *.
म. * सन्नह्यध्वं * * *.
ग का. अमित्रेभ्यो . .z

२ का. सर्वपुण्यजनस् सं.

वनस्पतयः सं [नह्यध्वं . . . . . . .]।।३।।

वानस्पत्याः सं नह्यध्वं मम राष्ट्राय जयन्तो
[ऽ] मित्रेभ्यो हेतिमस्यन्तः।।४।।

ओषधयः सं नह्यध्वं मम राष्ट्राय जयन्त्यो
[ऽ] मित्रेभ्यो हेतिमस्यन्त्यः।।५।।

वीरुधः सं नह्यध्वं मम राष्ट्राय जयन्त्यो
[ऽ] मित्रेभ्यो हेतिमस्यन्त्यः।।६।।

बृहस्पते सं नह्यस्व मम राष्ट्राय जय-
न्नमित्रेभ्यो हेतिमस्यन्।।७।।

प्रजापते सं [नह्यस्व . . . . . . .]।।८।।

---

३ का. वनस्पतयस् सं वनस्पत्यास् सं।

४ का. वानस्पत्यास् सं।
मा. * सन्नध्वं . . . . .।।
म. * सन्नह्यध्वं . . . . .।।

५ का. ओषधयस् सं।
मा. * सन्नह्यध्वं * * जयन्तो . . .।।
म. * सन्नह्यध्वं * * * . . . . .।।

६ क का. वीरुधस् * *.
उ. * सन्नह्यध्वं.
ग का. अमित्त्रेभ्यो हेतिमस्यन्तः।

७ कख का. सूर्याश्चन्द्रमसौ * * * * जयं।
उ. बृहस्पते सन्नह्यध्वं * * *.
ग का. अमित्त्रेभ्यो हेतिमस्यन्तौ।

८ का. प्रजापतये सं.

परमेष्ठिन् सं नह्यस्व मम राष्ट्राय जय-
न्नमित्रेभ्यो हेतिमस्यन्। ।९। ।

उदारा उदीर्ध्वं विश्वानि भूतानि सं नह्यध्वं
मम राष्ट्राय जयन्त्यमित्रेभ्यो हेतिमस्यन्ति। ।१०। ।

१०.१५

अग्नी रक्षिता स इमां सेनां रक्षतु।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे। ।१। ।
इन्द्रो रक्षिता [स इमां . . . .]। ।२। ।
सोमो रक्षिता [स इमां . . . .]। ।३। ।
वरुणो रक्षिता [स इमां . . . .]। ।४। ।
वायू रक्षिता [स इमां . . . . .]। ।५। ।
त्वष्टा रक्षिता [स इमां . . . . .]। ।६। ।
धाता रक्षिता [स इमां . . . . . .]। ।७। ।
सविता रक्षिता [स इमां . . . . .]। ।८। ।
सूर्यो रक्षिता [स इमां . . . . . .]। ।९। ।

---

९ कख का. परमेष्ठ्यं * * * * जयं.
मा. * सन्नध्वं * * *.
म. * सन्नह्यध्वं * * * *.
ग का. अमित्त्रेभ्यो हेतिमस्यां।

१० कख का. * * * * * नह्येथां.
मा. * * * * सन्नध्वं.
म. * * * * सन्नह्यध्वं.
ग का. * * जयन्ती अमित्त्रेभ्यो हेतिमस्यन्ती Z८Z

१०.१५.१ कख का. * रक्षता स इमा सेना *।

२-१० का. सर्वत्र 'रक्षता' इति पाठः। 'वायूरक्षता', 'सूर्यो रक्षता' इत्यतश्छेदौ न दृश्येते। 'धाता। रक्षता' इत्येवं पदच्छेदस्तु कृतः।

चन्द्रमा रक्षिता स इमां सेनां रक्षतु।
अनुष्ठातरनु [तिष्ठ सर्वे वीरा भवन्तु मे]। ।१०। ।

१०.१६

अहा रक्षितृ तदिमां [सेनां रक्षतु]।
अनुष्ठातरनु [तिष्ठ सर्वे वीरा भवन्तु मे। ।१। ।

रात्री रक्षित्री सेमां [सेनां रक्षतु]।
अनुष्ठात्र्यनु [तिष्ठ सर्वे वीरा भवन्तु मे]। ।२। ।
इन्द्राणी रक्षित्री [सेमां सेनां रक्षतु . . . .]। ।३। ।
वरुणानी रक्षित्री [सेमां . . . . . . . . .]। ।४। ।
सिनीवाली रक्षित्री सेमां [सेनां . . . . . .]।
अनुष्ठात्र्यनु [तिष्ठ . . . . . .]। ।५। ।

समुद्रो रक्षिता स इमां [सेनां रक्षतु]।
अनुष्ठातरनु [तिष्ट सर्वे वीरा भवन्तु मे]। ।६। ।

पर्जन्यो रक्षिता [ . . . . . . . .]। ।७। ।
वृहस्पती रक्षिता [. . . . . . . .]। ।८। ।

---

१०मे मन्त्रे उत्कलीयग्रन्थेषु 'सेनां रक्षतु' इति न पठितम्।

१०.१६.१ कख का. अह रक्षतृ *.
२ का. * रक्षत्री। सायमां अनुष्ठात्रियनु। ।
३ का, मा. * रक्षत्री। ।
४ का, मा. * रक्षत्री। ।
५ का. सिनिवाली रक्षत्री। सा इमां अनुष्ठात्रियनु।
उ. शिनीवाली * . . . . .। ।
६ का. * रक्षता।
७ का. * रक्षता।
८ का. वृहस्पतीरक्षता।

प्रजापती रक्षिता [. . . . . . .]।।९।।

परमेष्ठी रक्षिता स इमां सेनां रक्षतु।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे।।१०।।

विश्वे देवा रक्षितारस्त इमां सेनां रक्षन्तु।
अनुष्ठातारो अनु तिष्ठत सर्वे वीरा भवन्तु मे।।११।।

इति तृतीयोऽनुवाकः

।। त्रयोदशर्चः दशमः काण्डः समाप्तः ।।

---

९ का. * रक्षता।

१० कख का. * रक्षता। * * सेना *।।

घ उ. 'वीरा भवन्तु मे' इत्यूह्यम्।

११ का. मन्त्रोऽयं नास्ति।

उ. मन्त्रान्ते . . . भवन्तु मे।।१६।।ऋ ११।। अ ३।।

काण्डान्ते का. इत्यथर्वणिकपैप्पलादशाखायां दशमष्काण्डस् समाप्तः।

मा. त्रयोदशर्चकाण्डः समाप्तः। द्र. अनुवाकसंख्या नास्ति।

म. त्रयोदशर्चकाण्डः।

# एकादशः काण्डः

११.१

वृषा ते [ऽ]हं वृषण्यन्त्यै गर्भं दधामि योन्याम्।
यदि देवपरिष्ठिता प्रजां तोकं न विन्दसे।।१।।

धाता ते तं सिनीवाली वरुणानी प्र यच्छतु+।
पुमांसं पुत्रमिन्द्राणी शतदायं दधातु ते।।२।।

संवृतस्ते वक्षणासु गर्भः पुंसा पुमान् कृतः।
सर्वाङ्गस्तन्वोर्जायतामग्निरिवारण्योरधि।।३।।

धत्स्व वीरं कर्मण्यं प्रस्वं त्वावध्रिमवशां कृणोमि।
आत्मनस्ते लोहिताद् गर्भः सं वर्ततां वृषा।।४।।

---

काण्डारम्भे का. अथ एकादशषूकाण्डान् लिख्यन्ते zz zz ओं नमो नारायणाय z ओं नमस्तिलोतमायै z ओं नमो ज्वालाभगवत्यै zz ओं नमो गणेशाय zz ओं ; उ. ओं ;

१ कख का. * * * वृषंण्यन्ती * ददामि योन्यां
गघ का. * *। * * * * z१z ओं
उ. * देवपरिष्ठितात् * * * *।।

२ कख का. * * * * * * यश्छति।
उ. * * * शिनीवाली * * यछतु।
घ का. सततायां * * z२z

३ कख का. संवृक्तस्ते * गर्भष् पुसां * * .
उ. . . . . . वक्ष्णासु * * * *।
गघ का. . . . स्तांनोर्जायतामग्निर्वारण्यो हृदिभिः z३z

४ कख का. धस् बीरं * प्रस्तं ता वध्रिं सर्वषां *।
म. * * * * . . . मवसां (→शां) *।
ग का. गर्भस् सं वर्ततां वृषाकपेः z४z
म. * सम्वर्त्ततां *।।

त्वष्टा पिंशतु ते प्रजां धाता तोकं दधातु ते।
राका सीव्यतु सूच्या भूतस्येशाना भुवनस्य देवी।।५।।

सिनीवालीमनुमतिं राकां गुङ्गुं सरस्वतीम्।
देवानां पत्नीर्या देवीरिन्द्राणीमवसे हुवे।।६।।

मा.गृ.२.१८.२ अभिन्नाण्डा वृद्धगर्भारिष्टा वीरसूरियम्।
वि जायतां प्र जायतां बह्वी भवतु पुत्रिणी।।७।।

परि सृज गर्भं धेहि माशाः प्र च्योष्ट लोहितम्।
आप.म.१.१३.१गघ अनूनः पूर्णो जायतामश्रामोरन्वो अपिशाचधीतः।।८।।
त्वं दधासि द्विपदे चतुष्पदे गर्भं प्रजामेजते विश्वरूपाम्।
कनिक्रदद् वृषभो वीडुशेपाः प्रजापते तन्वां
धेहि गर्भम्।।९।।

---

५ ग का. * सीव्यश्च *.
उ. * * शूच्या.

६ कख का. . . . . . . . तीं * गुगूं *।
मा. शिनीवालीमनुमतिं राकांङ्गुङ्गु सरस्वतीं। म. शिनी . . .।।
गघ का. * पत्यै या देवी इन्द्राणीमवसे * z६z

७ कख का. अभिदाता वृद्धरगृभा अरिष्टरिवीरसूर्यं।

८ कख का. परि स्रुच * देहि मास्याः * * *।
मा. . . . . . . . . . . . माशा * * *।
गघ का. अनोनोनः * जायतामस्थापूनंधो पिशाचधीतः z८z
द्र. ८घ < अश्रामोनन्धो+ * ? उ. लिपौ न्ध-न्व इत्येतयोः सादृश्यं ध्येयम्। यद्वा रण्वो।

९ कख का. * * द्विपदेश् * * प्रजामेचते विश्वरूपा।
ग का. * * वीडुमोपा * * * * z९z
मा. क्रनिक्रदद् * * * तन्नवां * *।।
म . . . . . . . तन्नवां * *।।

अभिक्रन्दं स्तनयन् धेहि गर्भं विद्योतमानः
पवमानो वीरुद्भिः।
पर्जन्येमां पृथिवी रेतसावतापां रसैरोषधीनां
पशूनाम्।।१०।।

आ ते नयामि वृषणं यः प्रजानां प्रजापतिः।
स ते दधात्वृत्वियं* गर्भं योन्यां विजां प्रजाम्।।११।।

ये वृषाणो गर्भकृत ऋत्वियानां समेनसः।
तांस्ते ह्वयामि तदु ते समृध्यताम्।।१२।।

अग्नेष्टे त्वष्टुर्वरुणादिन्द्रात् सोमाद्बृहस्पतेः।
पुत्रं ते पुत्रकामायै देवेभ्यो निर्ममे प्रजाम्।।१३।।
अङ्गादङ्गात् सं स्रवतु तद् योनौ प्रति तिष्ठतु।
प्रजा ते वक्षणाशया तत्ते बीजं वि रोहतु।।१४।।

---

१० कख का. . . . . . . . . . विद्योतमानष् * वीन्द्भिः।
उ. * स्तनयं . . . . . . . . . . ।
गघ का. पर्जन्योमां * रेभसा। वतापां रसीरोवधीनां पशूना। z१०z
द्र. घ < पर्जन्येमां पृथिवीं रेतसाव अपां . . . . . . ? तु.ऋ.५.८३.४घ
११ ग का. * * दधात् तृतीयं *.
मा. * * दधातृत्वियं *.
म. * * दधातृत्वी (←ती)यं *.
१२ का. * * गर्भंकृत * सुमेनसः
. . . . . . . . सम्पदृध्यतां z१२z
१३ क का. अग्रेस्ते . . . . . . . . . .
ग उ. पुत्रन् ते * ;
१४ क उ. . . . . . . . . . . . . सं श्रवतु.
ग मा. * * वक्ष्णा . . . ;
म. प्रजान् ते वक्ष्णा . . . ;
घ का. तं ते बीजं निरुहतु z१४z
म. ? तन्ते * * *।।१।।ऋ।।

## ११.२

अतुससो यमनंससो [ऽ]भूतिर्यक्ष्ममजीजनत्।
इमं सहस्रभागिन्द्रो विशरं नाशयाति ते।।१।।

यः कार्यो यश्च कृतः स्वयंजा उत हार्यः।
देवा इन्द्रज्येष्ठा विशरं नाशयन्तु ते।।२।।

विशरस्य विजृम्भस्येषुर्माता धनुष्पिता।
अदित्याः पुत्रा आदित्या विशरं नाशयन्तु ते।।३।।

धन्वनो ज्याया इष्वा अपस्कम्भस्य बाह्वोः।
अपाष्ठाच्छृङ्गात् कुर्मलाद्विशरं नाशयामि ते।।४।।

अलवती रुरुशीर्ष्ण्यथो यस्यायो मुखम्।
देव्यै पर्जन्यरेतस इषवे कृणुता नमः।।५।।

---

११.२.१ का. अहंससो यमनंससो . . . . . . मजीजनात्।
* सहस्रभाग इन्द्रो विशन् * * z१z
मा. * यमनंसो . . . । . . * नाशयामि *।।

२ ख मा. * उप *।
म. स्वयंया उप *।
घ का. इन्द्रोविशन् नाशयातु * z२z
म. विशरन् * *।।

३ कख का. * . . . स्येषुघर्माता . . .
मा. * . . . . . . . . . . षुर्माता . . .।
गघ का. आदित्याष् पुदित्याद विषं * * z३z
मा. आदित्याः * * * नाशयान्तु *।।

४ का. धन्विनो जाया * अपस्कंतस्य *
अपाष्ठाश् छंगात् . . . . द्विषन् * * z४z

५ का. * ररशीर्ष्णमथोस्यायो मुखं.
देवी पर्जन्यरेतासिषवे * * z५z

यामत्रयो अङ्गिरसो गोतमा वीरुधं विदुः।
तया भरद्वाजः कण्वो विशरं नाशयाति ते।।६।।

यस्त्वा स्रैणादपसरो यः पुंसो अध्यारुहत्।
आक्लान्तं संक्लान्तं स्राव तदु ते कल्पयामसि।।७।।

वात इवाभ्रं च्यावयामि यक्ष्मं ते तन्वस्परि।
वाचा यच्चक्रुस्ते गुरु तदृचा लघु कृण्मसि।
तेनाहमृतोथेन विशरं नाशयामि ते।।८।।

यथा न सत्यं पुरुषः सदा वदितुमर्हति।
विष्कन्धं त्वदपशरं विशरं +पृष्ट्यामयम्।
जम्भं हनुग्राभं शङ्कं तानजेना अजामसि।।९।।

+शुनमिद्ध ओषधयो वि दधे भेषजाय कम्।
धनायुवः सनायुवः पुरुषं पारयिष्णवः।।१०।।

---

६ का. इमासत्रयो ङ्गिरसो गौतमा * * * भरद्वाजष् * विशन् * * z६z
ख मा. * * विदु।
७ का. . . . स्रीणाउपसदो यष् * ध्यारुहन् * * * तकुते * z७z
८ कख का. वातेवाभ्रं श्यावयामि * * तन्वंपरि।
उ. . . . . . . यक्ष्मन् . . . .
गघ का. वाता यचग्रुस्ते * स्र्जा * * z८z
ङच का. . . . मृतोतेन विशन् * *।
९ का. * नस् * पुरुषस् * वदुतुमर्हसि z९z
विष्कन्धं तदापिशरं * वृष्ण्यावयं जम्भ हनुग्राहं * त्वानुजयेनां * z१०z
गघ उ. विस्[illegible] . . . . . . . . . पुष्ट्यामयं।
१० कख का. शुनमिद्धोषधयो नि * * *।
उ. शुनमिद्ध * * * * *।
गघ का. धनायवः सनायकष् * * z११z

आत्मत्राणि देवजूता वीरुधायुष्या कृता।
तयाहमिन्द्रदत्तया विशरं नाशयामि ते।।११।।

अलस्य व्यञ्जनस्य वेष्टनस्योत पर्णधेः।
ग्रन्थेर्ज्यायां+ इष्वा विशरं नाशयामि ते।।१२।।

साकं विष्कन्ध प्र पत चाषेण किकिदीव्या।
साकं वातस्य ध्राज्या सह नश्य+ निहाकया।।१३।।

११.३

(शौ.१९.३४)

जङ्गिडो [ऽ]सि जङ्गिडो रक्षितासि जङ्गिडः।
द्विपाच्चतुष्पादस्माकं सर्वं रक्षतु जङ्गिडः।।१।।

या गृत्स्यस्त्रिपञ्चाशीः शतं कृत्याकृतश्च ये।
सर्वान् विनक्ततेजसो [ऽ]रसान् जङ्गिडस् करत्।।२।।

---

११ का. आतपत्त्राणी * वीरुधायिष्या *।
...... विशन् * * z१२z

१२ कख का. * * वेष्टतःस्कोत पर्णधे
गघ का. ग्रन्थे ज्याद्यायुष्वास्तिद्विषिन् * * z१३z
उ. ग्रन्थेर्जाया * * * *।।

१३ क म. * विस्कन्ध * *.
ख का. चषेण किकिदिव्या
मा. * किकिदि(→दी)व्या।
घ का. साकं नशृश निहाकय z१४z
उ. सहनस्य *।।२।।ऋ१३।।

११.३.१ का. जंगिडिसि * रक्षतासि * द्विपाश्च ..... * * * z१५z

२ कख का. * कृश्छात्रिपञ्चासीश् छतं .......।
मा. * गृत्स्वस्त्रिपञ्चाशीः * कृत्याकृतश ये।
गघ का. सर्व व्युनक्तुतेजसो रसां * * z२z

अरसं कृत्रिमं नाडमरसाः सप्त विस्रसः।
अपेतो जङ्गिडामतिमिषुमस्तेव साधय।।३।।

कृत्यादूषण एवायमथो अरातिदूषणः।
अथो सहस्वां जङ्गिडः प्र ण आयूंषि तारिषत्।।४।।

स जङ्गिडस्य महिमा परि णः पातु विश्वतः।
विष्कन्धं येन सासाह संस्कन्धमोज ओजसा।।५।।

तृष्ट्वा देवा अजनयन्निष्ठितं भूम्यामधि।
तमु त्वाङ्गिरा इति ब्रह्माणः पूर्व्या विदुः।।६।।

न त्वा पूर्वा ओषधयो न त्वा तरन्तु या नवाः।
विबाध उग्रो जङ्गिडः परिपाणः सुमङ्गलः।।७।।

---

३ कख का. रसं * नाडसरसस् * *
उ. . . . . . . विश्रसः।
गघ का. अपेतु जंगिडामतिमिषुपस्तेव साधया z३z
मा. * जङ्गिडामतीमिषुवस्तेव *।।
म. * जङ्गिडामती . . . *।।

४ कख का. * वायमथो रातिदूषणः
गघ का. * सहस्वां जंगिडाष् परिणं योषि तारिषं z४z
मा. * सहस्वां जङ्गिड * * * *।।
म. * सहस्वाञ् * * * * *।।

५ का. * * महीसा * णष् * * विश्वंस्कन्धं * सामहा संस्कसोजोजसा.

६ का. निष्ट्वा * अजनयंनिष्ठितं . . . . . . यति व्राह्मणष् * * z५z
घ मा. व्रह्मणः * *।।

७ ख-घ का. * * चरन्त्यानवा। * * जंगिडष्परिपाणास् *;
घ मा. परिपाण्यः ? *।।

अश्वोपदान भगवो जङ्गिडामितवीर्य।
पुरा त उग्राय सत उपेन्द्रो वीर्यं ददौ।।८।।

उग्र इत्ते वनस्पत इन्द्र ओज्मानमा दधौ।
अमीवाः सर्वाश्चातयञ् जहि रक्षांस्योषधे।।९।।

आशरीकं विशरीकं बलासं +पृष्ट्यामयम्।
तक्मानं विश्वशारदमरसं जङ्गिडस्करत्।।१०।।

११.४

(शौ.१९.३५)

इन्द्रस्य नाम गृह्णन्त ऋषयो जङ्गिडं ददुः।
देवा यं चक्रुर्भेषजमग्रे विष्कन्धदूषणम्।।१।।

---

८ का. अश्वयोपदानि * जंगिडामुतवीर्यः * * * सतोपेन्द्रो * दधौ z६z

घ मा. उपन्द्रो वीर्यन् *।। म. * वीर्यन् *।।

९ का. * इत्ये वनस्पतय इन्द्रोज्मानसा *।
* सर्वा रक्षाँसि जहि रक्षाँस्योषधे।

कख मा. नास्ति पादद्वयमिदम्।

ग मा. * . . . श्चातयं ;

१० का. आशरीरं * चलासं पृष्ण्यामयं * . . . मरसं * * z७z

खग उ. * पुष्ठ्यामयं। * . . सारद . . ;

घ म. मरसञ् * *।।३।।ऋ१०।।

द्र. मा. सूक्तान्ते सूक्तसंख्या, मन्त्रसंख्या वा न सूचिता।

११.४.१ कख का. * * गृह्णंत * जंगिडं *

गघ का. * य . . . . . मुग्रे * z१z
मा. . . . . . . . विष्कन्ददूषणं।।

स नो रक्षतु जङ्गिडो धनपालो धनेव।
देवा यं चक्रुर्ब्राह्मणाः परिपाणमरातिहम्।।२।।

दुर्हार्दसं घोरचक्षुं पापकृत्वानमागतम्।
तांस्त्वं सहस्रचक्षो प्रतीबोधेन नाशय
परिपाणो [ऽ]सि जङ्गिडः।।३।।

परि मा दिवः परि मा पृथिव्याः
पर्यन्तरिक्षात् परि मा वीरुद्भ्यः।
परि मा भूतात् परि मोत भव्याद्
दिशोदिशो जङ्गिडः पात्वस्मान्।।४।।

य ऋष्णवो देवकृता य उचोबभृतेन्याः।
सर्वांस्तान्विश्वभेषजो अरसान् जङ्गिडस्करत्।।५।।

---

२ कख का. म * * जंगिडो * धनैव
मा. * * * * धनफालो धनेमव।
म. * * * * धनपा(→फा)लो *।
गघ का. * * चक्रुर्ब्राह्मणष् . . . मरातियं z२z
म. * * चक्रुब्राह्मणाः . . . . .।।
३ कख का. द्रुहान्दसं . . . . . . . . . . .।
गघ मा. तास्त्वं * * *
४ क का. पर * दिवष् पर * *
मा. * * * * * पृथिव्या
ख का. . . . . . परमा *
गघ का. पर * * पर मोथ भव्या
* जंगिडष् . . . . . . z४z
५ का. ये * * योचो बिभृथेत्या।
सर्वस्त्वान् . . . . . रसां जंगिडस्करत् z५z४z

११.५

प्रति गृहाण पृथिवीनीतमेदतदाज्यस्य मथितं शरीरम्।
इमां धेनुमस्य दातुस्त्वं रक्ष बर्हिष्या यथासत्।।१।।

उत त्वाहुर्वरुणस्य पत्नीमथो त्वाहुरदितिं विश्वरूपाम्।
अधिजरायुमाघारे हव्यवाहमग्नावस्या
महिमानं जुहोमि।।२।।

स साहस्रं तन्तुमन्वा ततान सो अग्निष्टोमां दशतं समाप।
अधिजरायुं सवत्सां यो ददाति तं वै देवाः
स्वरा रोहयन्ति।।३।।

अधिजरायुः स्वरा रोहयन्त्यनेन दत्ता सुदुघा वयोधाः।
सास्मै दुहां शतधारमक्षितं यमस्य लोके
परमे व्योमन्।।४।।

पूर्ववत्सेन सह वत्सिनी गौर्यो [ऽ]स्या
वत्सो अपरो जरायु तत्।
तृतीयं मांसं परिनिर्मितं यत्तस्माद्देवा
अधिजरायुमाहुः।।५।।

---

१ कख का. * गृहाणि पृथिवीनियतमे . . . . . शरीरं;
मा. प्रती * . . . दाज्यमथितं शरीरं।
ग का. मां धनु . . . . . . . z१z

२ का. . . . . . . . . .पत्निमथो . . . . . z२z

३ कख का. * सहस्वं तंतुमन्वाततानः * ग्निष्टोमां * *;
मा. * * तन्तुतन्वात्ततान * अग्निष्टोमां * *।
घ का. * * * स्वरारोहयन्ती z३z

४ का. अधिजरायु . . . . . . . दत्ताः * *;
सहस्मै दुहां शतधारमक्षतममुष्मिंन् * युग उत्तरस्मिन् z४z

द्रः ४घ का. "अमुष्मिन् लोके युग उत्तरस्मिन्नि"ति अष्टममन्त्रस्य चतुर्थः पादः
४घ पादे, ४घपादश्च कथञ्चित् ८घ पादे व्यवस्थापितः।

५ का. * सा * गौर्येणस्या * अजरोजरायुवत्।
* * परिनिन्दितं . . . . . अधिजरायमाहुः z५z

आ धावय शवसा वावृधानोत्तराव
श्रव आ धेह्यस्मै।
इममिन्द्र महतामेन रक्ष सं प्रजया
तन्वा सं बलेन।।६।।

दुर्वेदावस्ताद् बहुधा परस्ताद् विश्वे देवाः
प्रति पश्यन्त्वायतीम्।
या भद्रा या सर्वतः समीची सेदाहुतिर्भवतु
मेतराज्या।।७।।

गृष्टिं धेनुमधिजरायुं स्वधां कृण्वानः प्र ददाति ब्रह्मणे।
सास्मै दुहां शतधारमक्षितममुष्मिँल्ँ+ लोके
युग उत्तरस्मिन्।।८।।

वत्सं जरायु प्रतिधुक् पीयूषं यो नो
ददाति सुदुघामधेनुम्।
तस्य देवाः प्र तिरन्त्वायुः* स आ रोहतु
सुकृतामु लोकम्।।९।।

---

६ कख का. * * * . . . न्तरात्वक् स्रुवादे स्मै।
मा. अ * * . . . . . ।
गघ का. . . . . . . मेनि * * * तत्वा * * z६z

७ कख का. दुर्वेदावस्यादूधहुधा * * * * पश्यन्त्यायतीं
घ उ. . . . . . . . . . पश्यंत्वायतीं।
का. स्सेदाहुर्भवतु मे जरायुः z७z

८ कख का. गृष्टं . . . . . . . . . . . . . . दधातु ब्रह्मणे
गघ का. सहस्मै * सहसुधारमक्षतममुष्मिंन् लोके परमे व्योमन्।
मा. . . . . . . . . . . मुष्मि * * *।।
म. . . . . . . . . . . . मुष्मिल् * * *।।

९ कख का. * जरायुष् प्रददष् * * * दधातु . . .।
गघ का. * देवापि ववर्त आयुः सारोहतु सुकृताम *
मा. * * * तरंत्वायुः स आ रोह . . . . . .।।
म. * * * तिरंत्वायुः . . . . . . . .।।

परिवालामधिजरायुं युधाजीवो अददादग्र एताम्।
स्योना नः शग्मा शिवा विशेह मा नो
हिंसीर्हरसा दैव्येन।।१०।।

भद्रकृतं सुकृतमादु शंभुवमरंभुवं
प्रति गृह्णाम्यायतीम्।
घृतश्रियं नभसी संवसानां देवान् +मनुष्याँ
असुरानुतर्षीन्।११।।

पञ्च देवाः प्र पिबन्त एतामिन्द्रस्त्वष्टा
वरुणो मित्रो अग्निः।
ते सर्वे समदुर्मह्यमेतां तयेह जीवन्
प्र तिरस्वायुः।।१२।।

---

१० कख का. परी . . . . . . . . नधा * यददांदप्र एतां
मा. . . . . . . . . . स्वधा . . . . . . . ।
गघ का. स्योनां शग्मां शिवा शिवेह सा * हिंसीर्हसा * z१०z
मा. * न * * . . . . . .

११ कख का. * सुकृतमादिशंभुवसरंभुवं * गृह्णास्यायतीं।
मा. . . . . . . . गृह्णामायतीं।
गघ का. * नभमी संवसानो * मनुष्यांनसुरानतर्हिं। ११z
मा. * * सम्वसानां * मनुष्यांङ् असुरानुतर्षिन्।।
म. * * सम्वसानां * मनुष्याङ् . . . . . . ।।

१२ कख का. * देवाष् प्रविष्टवन्त एतामित्रस्त्वष्टा * * *।
गघ का. * * सवितुर्म . . . तेह जीवं प्र तिरंत आयुः z१२z
उ. * * . . . मह्यमेतान् . . . . . . ।।

कश्यपो [ऽ]यं जमदग्निर्वसिष्ठ ऋषयो नः
ससनुरग्र एताम्।
भरद्वाजो गोतमो अत्रिर्नः स्योनां विश्वामित्रो ददुषः
प्र तिरात्यायुः।।१३।।

कौ.८६.१२ ऊर्जं देवेभ्यः सुभग ऊर्जं मनुष्येभ्यः।
ऊर्जं पितृभ्यो अघ्न्य ऊर्जा ददतमा विश।।१४।।

११.६

(ऋ.१०.९७)

ऋ.१ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा।
मन्ये नु बभ्रूणामहं शतं धामानि सप्त च।।१।।

२ शतं वो अम्ब धामानि सहस्रमुत वो रुहः।
अधा शतकृत्वो यूयमिमं मे अगदं कृत।।२।।

---

१३ कख का. * * . . . . . . . . . * युनस्यसनुरग्र *।
मा. * * यमदग्निर्वशिष्ठ . . . . . . ।
म. * * . . . . र्वशिष्ठ * * स्वसनुरग्र *।
गघ का. * ग्रौतमो अर्त्विरंनः स्योनन् * ददुषष् प्र तिरान्त्यायुः z१३z
मा. * * अतिर्नः * * दषः * *।।

१४ ख का. * मनुष्याउत।
मा. * मनुषेभ्यः।
गघ का. * * अघ्र ऊर्जं दधतुमा विश z५z
मा. * . . . . . विशं।।

११.६.१ गघ का. * न बभ्रुणामहं * * सत्वतः z१zz
ग मा. मन्य * वभृणामहं;

२ का. औं . . . शतक्रतवो यूयमि अगदं कृत। औं
इमं मे अगदं कृत z२z द्र. अतः काण्डिका सस्वरा।
मा. शतम्वो * * . . . .। * * यूयमिमम्मे अगदंः।।
म. शतम्वो * *. . . . . .। * * यूयमिमम्मे * कृतः।।
उ. मन्त्रान्ते मण्डलचिह्नम्।

३ पुष्पवतीः प्रसूमतीः फलिनीरफला उत।
अश्वा इव स्थ जित्वरीर्वीरुधः पारयिष्णवः।।३।।

४ ओषधीरिति मातरो यद्वो देवीरुपब्रुवे।
रपांसि विघ्नतीरित रक्षश्चातयमानाः।।४।।

६ निष्कृतिर्नाम वो माता निष्कृतिर्नाम वः पिता।
सराः पतत्रिणी स्थ यदामयति निष्कृतः।।५।।

५ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।
गोभाज इत् किलासथ यत् सनवथ पूरुषं।।६।।

११ यदहं वाजयन्निमा ओषधीर्हस्त आदधे।
आत्मा यक्ष्मस्य नश्यतु पुरा जीवगृभो यथा।।७।।

८ उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।
धनं सनिष्यन्तीनामात्मानं तव पूरुषः।।८।।

---

३ का. ओँ . . . अश्वावयस्थारित्वरीर्वी . . . ३zz
क मा. पुष्पवती प्रसुमतीः; म. * प्रसुमतीः;

४ का. ओँ ओषधीऋत . . . बव्रुवे अपांसि विघ्नतीरिति रक्षाश्चातयमानां z४z
ख मा. यद्वोद् . . . .।

५ का. . . . सदा . . . निष्कृता z५z

६ गघ का. गोभासि तत् किलासित यत्सनो अधि पौरुषम् z६z
क मा. अश्वथे * *; ग मा. * त् किलासथ;

७ का. यदाह . . . नृश्यति . . . z७z

८ गघ का. धनं सनिष्पन्तीनामात्मानं तव पौरुषः १०z
द्र घ पूरुष इति शोधो ध्येयः। का. आद्यमिक आमन्त्रितस्वरः।

६ यदोषधयः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः।।६।।

७ अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।
आवित्सि सर्वा ओषधीरितो मा पारयानिति।।१०।।

## ११.७

(ऋ.१०.६७)

ऋ.१० अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमीत्।
ओषधयः प्राचुच्यवुर्यत् किं च तन्वो रपः।।१।।

---

६ कख का. यदोषधयश् शग्मत राजानश् शमिताविव।
ख म. * समि(→वि) ताविव।
१० का. अश्ववतीं . . . मुतोजसं।
* * ओषधी। नृतो मा पारयानिति Z६Z
गघ म. आविछि . . . . ।। क मा. * सोम . . ;
द्र. का. काण्डिकान्तो न सूचितः।
१ का. . . . स्तेनैव व्रजमक्रमेत् * प्राचिच्यवुर्यत् . . . ;
घ मा. यञ्च तन्वो रपः।। म. यत् किञ्च * *।।
द्र. अत्र काश्मीरीयहस्तलेखे महान् प्रमादः कृतः लेखकेन। मूलहस्तलेखस्य कस्यचिद् द्वे पत्रे स्वस्थानाद् भ्रष्टे परस्परयोः स्थानयोर्योजिते। तेन का. ११.७.१ 'तन्वो' इत्यतः १३.३.३ गघ 'तं शची विषदूषणंम्' इत्यादिकः १३.५.१क 'सनीकयाष् इत्यन्तो भागो निवेशितः। ततः ११.८.७ 'काले मनः' इत्यादय आरभ्यन्ते। ११.७.१घ 'रपः' इत्यादिकः ११.८.६ 'चक्षुर्विपश्यति' इत्यन्तः अत्र निवेशनीयभागस्तत्रैवत्रयोदशकाण्डे निवेशितः। एतत् सर्वं मया 'On the new material in the Atharvaveda Paippalāda' IIJ 27(1984) निबन्धे विस्तरेणालोचितम्। मत्कृता भूमिका - 'Introduction' अपि द्रष्टव्या।

१२ यस्यौषधयः प्रसर्पथाङ्गमङ्गं परुष्परुः।
तस्माद्यक्ष्मं वि बाधध्वमुग्रो मध्यमशीरिव।।२।।

१४ अन्या वो अन्यामवत्वन्यान्यस्या उपावत।
ओषधयः संविदाना इदं मे प्रावता वचः।।३।।

१७ अवपतन्तीरपदं दिव ओषधयस्परि।
यं जीवमश्नवामहै+ न स रिष्याति पूरुषः।।४।।

१८ या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः।।५।।

१५ याः फलिनीर्या अफला अकोशा याश्च केशिनीः।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः।।६।।

---

२ कख का. यस्योधयष् . . . . . . परुषस्परु।
मा. . . . .. प्रसर्प्यथाङ्गमङ्ग . . . ।
म. . . . . . प्रसर्पूपथाङ्गमङ्गं . . . . .।
गघ का. * * बाधस्वमुग्रो . . . z
३ का. . . . उपावतः z
उषधयस् संविधाना . . . प्रत्यृता वचः;
गघ उ * सम्विदाना * * * *।।
४ कख का. अवपतन्तीरविदं देव . . . वामहि * * * पौरुषः z
गघ उ. * जीवमश्नुवामहै * * * *।।
५ कख का. . . . ज्ञीद्वीश् शतऋचक्षणाः
घ मा. . . . . . मुञ्चत्वंहसः।।
द्र. का. आपञ्चममङ्कितस्वरा मन्त्राः।
६ का. नास्त्ययं मन्त्र-।
घ मा. . . . मुञ्चत्वंहसः।।

प्राणाग्नि.उ.१ जीवलां नघारिषामा ते बध्नाम्योषधिम्।
या त आयुरुपाहरादप रक्षांसि चातयात्।।७।।

११.८

(शौ.१९.५३)

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो
अजरो भूरिरेताः।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा
भुवनानि विश्वा।।१।।

सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः।
स इमा विश्वा भुवनान्यञ्जन् कालः स ईयते
प्रथमो नु देवः।।२।।

---

७ कख उ. * नघार्षामा * . . . . . .।
गघ का. व्या त्वायुरपाहरादप रक्षांसि चतया zz zz
इत्यथर्वणि त्रयोदशा काण्ड प्रथमोनुवाकः zz
द्र. इतः पूर्वम् ११.७.१. विषये यन्मयोक्तं तद् द्रष्टव्यम्।
११.८.१ का. * स्वो वहतुस् सप्तरश्मिस् * अक्षरो *।
* * * विपश्यतस्तस्य * * *
क मा. * * वहत *
२ का. * * वहतु * एषः . . . . . .z
सा * * भुवनान्यंजं काल सैय्यते * * *
क उ. . . . . . . नामीरमृतन्वक्षः।

पूर्णः कुम्भो अधि काल आहितस्तं वै पश्यामो
बहुधा नु सन्तम्।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः
परमे व्योमन्।।३।।

स एव सन् भुवनान्याभरत् स एव सन्
भुवनानि पर्यैत्।
पिता सन्नभवत् पुत्र एषां तस्माद्वै
नान्यत् परमस्ति तेजः।।४।।

कालो [ऽ]मूं दिवमजनयत् काल इमां पृथिवीमुत।
कालेन भूतं भव्यं चेषितं ह वि तिष्ठते।।५।।

कालो भूतिमसृजत् काले तपति सूर्यः।
कालो ह विश्वा भूतानि काले चक्षुर्वि पश्यति।।६।।

---

३ कख का. पूर्णष् * * कालाहितस्तं * * * नि सन्तं।
गघ का. * * * * प्रत्यं * तमाहुष् * * z
मा. * * * * * कालस् . . . . . . .।।
म. * * * * * कालन् . . . . . .।।
द्र. उ. सर्वत्र 'काळ' इत्येवं मूर्धन्यळकारो लिखितः। एवमुत्तरतोऽपि।
४ कख का. * यव सं . . . . . स यव सं * परीयैः
गघ का. * संनभवतु * * . . . . . . परमस्तु *.
म. * . . . . . . पुत्र एषान् . . . . .।।
५ कख का. . . . . . कालैमां . .
उ. काल्लोमून् . . . . . . .।
गघ का. * * * च एषतं * * *।
६ कख का. * भूतमसृजत् कालो तपतु *
मा. * भवतिमसृजत् * * *।
ग का. काले विश्वा *.

काले मनः काले प्राणः काले नाम समाहितम्।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः।।७।।

काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम्।
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः।।८।।

तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितम्।
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम्।।९।।

कालः प्रजामसृजत कालो अग्रे प्रजापतिम्।
स्वयम्भूः कश्यपः कालात्तपः कालादजायत।।१०।।

११.६

(शौ.१९.५४)

कालादापः समभवन् कालाद् ब्रह्म तपो दिशः।
कालेनोदेति सूर्यः काले नि विशते पुनः।।१।।

---

७ का. * मनाष् * प्रणष् * * *।
* * * प्रदा * z
गघ उ. * * * नन्दंत्यागतेन * *।।
८ कख का. * तपष् * * * व्रह्म ससमाहितं.
९ का. प्रथमपादद्वयान्ते छेदो नास्ति।
१० का. कालष् प्रजासृजति * ग्रे * * * कालात्ततष् . . . . .।
गघ उ. स्वयम्भुः * . . . . . . . .।। ८।।ऋ।।
द्र. का. काण्डिकान्तो न सूचितः।
११.६.१ का. . .पस् समभवत् . . . कालेनोदयतु * * न * पुनष्कालेनविशते पुनष्;

कालेन वातः पवते कालेन पृथिवी मही
द्यौर्मही काल आहिता।
कालो ह भूतं भव्यं च पुत्रो अजनयत् पुरः।।२।।

कालादृचः समभवन् यजुष्कालादजायत।
कालो यज्ञं समैरयद् देवेभ्यो भागमक्षितम्।।३।।

काले गन्धर्वाप्सरसः काले लोकाः समाहिताः।
काले [ऽ]यमङ्गिरा देवो अथर्वा चाधि तिष्ठतः।।४।।

इमं च लोकं परमं च लोकं
पुण्यांश्चलोकान् विधृतीश्च पुण्याः।
सर्वांल्लोकानभिजित्य ब्रह्मणा
कालः स ईयते परमो नु देवः।।५।।

---

२ खग का. नास्ति।
ग मा. द्यौमही * * *।
घङ का. कालेन भूतं * * * जनयत् *।
३ का. कालादृजः . . . .।
* यज्ञो समीरयद् . . . . मक्षतिं।
४ कख का. * . . . . प्सरसष् * लोकस् समाहिताष्.
म. * गन्धर्वासूपरसः * * *।।
घ का. . . . . . थर्वा चाधि तिष्ठत z
५ क उ. इमत्र् * * परमत्र् * *
ख का. . . . . . . . . . . . . . . . . पुण्या।
उ. पुण्याश्च . . . . . . . .।
ग का. सर्वां लोकानभिचित्य व्रह्मणाष्
उ. सर्वाल् लोकान . . . . . .
घ काला सैय्यते * * * z

११.१०

सप्तैतं सप्तऋषयः शल्यकर्ता द्वादश।
आविद्धं शल्यं चाक्रतुरिन्द्रराशिं महोदरम्।।१।।

इन्द्रराशिं मित्रावरुणावाविद्धं निरकृन्ततम्।
प्रसूतमिन्द्रेणोग्रेणो ब्राह्मणानामसत् पितुः।।२।।

नैनमश्नीयादब्राह्मणो न गृहान् प्र हरेत् स्वान्।
तृष्टं विषमिव तैमातमिन्द्रराशिः खले शये।।३।।

अयं शये तन्वं रक्षमाणे यो अश्नात्यविचक्षाण एतम्।
मध्ये खलस्य निर्मित इन्द्रराशिर्महोदरः।।४।।

उतैष यक्ष्मं भवतीन्द्रराशिर्महोदरः।
भीमो अन्नस्य संकाशे अश्व इवात्ति सिनी नडम्।।५।।

---

१ का. . . . * * *
आद्धिं * * . . . रिन्द्रराशिर्महोदरं।

२ गघ का. . . . . . व्रह्मणानाम सर्वतः।
मा. प्रषूतमिन्द्रेणो . . . * *

३ का. . . . मश्नीयाथव्रह्मणो * गृहां * * स्वां
* . . . . तइमातिमिन्द्रराशिः शाले * z
मा. . . . . . . . . . गृह्वान् प्र हरे *।
* विशमिव तेमातमि . . . * *।।

४ कख का. * * तन्वो * अयं श्विनाभ्यवचक्षाणे एनं।
मा. * * * * योअ . . . . . *।
ग का. * * निर्मितो.

५ कख का. नास्ति। मा. . . . यक्षं . . . . दरः।
गघ का. * अन्यस्य शङ्काशे अश्वैवाभ्युत्सिनी *।
घ उ. . . . शिनी *।।

य इन्द्रराशिं निर्वपाद्वर्धयात् खलमान्याः
स्फातिं च खल्यां गृह्णातु गवां च बहु पुष्यतु। ।६। ।

यमुवाह शुनःशेपो यमिन्द्रो ब्रह्मणस्पतिः।
तं चक्रुः शिवमस्मभ्यमृषयो जीवनाय कम्। ।७। ।

तृढं शाकं तमशयद् दत्तमासीच्छ्वापदम्+।
पन्द्रा स्म रुप्यन्तः शेरे य आदन्वहुतं हविः। ।८। ।

+अनडुहां पृश्निशफानां वहतां वहरापिणाम्।
कीनाशस्य श्रमात् स्वेदादिन्द्रशिरजायत। ।९। ।

---

६ का. येहेन्द्रराशिन्निवयातु वर्धयातु खलमान्या * * खाल्वां * * * *
* z
ग म. स्फातिञ् * * *
७ खक का. इमोवश्विनः शेपो इमिन्द्रो व्रह्मणस्पतिः
मा. . . . . . . . . . . व्रह्मस्पतिः।
म. यमुवाहु * . . . . . . . . . ।
गघ का. त्वं चक्र . . . . . . . . . . . योजत्वंचक्र शिवमस्मभ्यपृषयो
जीवनाय कम्।
मा. * * शिवमस्मभ्यःमृषयो * * ।
८ कख का. दृढ़ां शाकुन्तमयः धृतमासीत् स्वापदं।
मा. * * . . . . . . . . छ्पर्दं।
म. * * . . . . . . . . छ्वापदं।
गघ का. पन्धु(मु, बे. त्तु) रास् सृप्यन्तः शेर या तन्वहुतं *.
द्र. ८ गघ < स्पन्द्राः * * * * आदन् अहुतं * ?
९ कख का. अनडुहान पृष्णिहान् * वहरापृणां।
उ. अनुडुहां * * * ।
गघ का. * समस्त्वेदादिन्द्रराशिरजायताः.

यत् कीनाशस्य स्वेद एति संतप्तस्तन्वस्परि।
अपां गाव इव तृष्यन्तीरिन्द्रराशिं सो अश्नुते।।१०।।

११.११

यत् कीनाशं +सीरपतिर्दण्डेन हन्ति मन्युतः।
यत् किंच खल्यं सादान्ववमिन्द्रराशौ तदाहितम्।।१।।

उलूखलमुसलं तानि चोदय सूर्पं नार्यपविचे कृणुष्व।
वाहाय पुत्राय गोतम इन्द्रराशिं मधुमन्तं कृणोतु।।२।।

एतत् सूर्पं जरितराहरोलूखलमुसलं कुम्भ्या गहि।
पुत्रा नो अद्य सुदिनत्वे अह्नि पित्तमश्नन्त
मधुमन्तमंशुम्।।३।।

---

१० कख का. यदि कीनाशसूस स्वेदेति सर्तस्तस् तन्वम् परि।
म. . . . . . . . . . . . सन्तप्तस्तन्वस्परि।
गघ का. * गावेव दृष्यन्ती इन्द्रसशीं * श्नुते।
द्र. का. काण्डिकान्तो न सूचितः।

१०.११.१ कख का. यदि * सीरुपतिर्दण्डेन हन्तु मन्यतः।
उ. * * शीरपतिर्दण्डेन * *।
गघ का. यदि किञ्च खल्वं सादान्व इन्द्रराशो उदाहितं।
मा. * किञ्च * . . . . . वमिन्द्रराशो . . . . . . ।।
म. * किञ्च खल्वं ? . . . . . . . . . . ।।

२ कख का. . . . मुसुलं * चोदयन्प शूर्पं नायपवते *।
मा. * * * * . . . . . . . . कृष्व।
गघ का. वाहि * गोतममिन्द्राशिर् * * z

३ कख का. एतशूछूर्पं जनितराहरोलूखलं मुसुलं कुस्त्या *
मा. एत् * . . . . . . . ।
गघ का. * * थ सुजनिद्रे * पितुसिष्णंते मदुमंनमीसं।

अग्निर्नो दूतः प्रहितो [ऽ]यमागन्
स नः सर्वमन्नमविषं कृणोतु।
निराविद्धमकृतं ब्रह्मणेतो
[ऽ]दोमधं पित्तमत्त प्रसूताः।।४।।

ऋ.१.१८७.२,३द्र. स्वादो पितो मधो पितो उप नः पितवा गहि।
शिवः शिवाभिरूतिभिः।।५।।

सिंहो भूत्वा गामृणात्यग्निर्भूत्वा धान्यम्।
इन्द्रराशिरनिर्मितो मयारं चाव [+]गच्छति।।६।।

## ११.१२

(शौ. १९.३२)

शतकाण्डो दुश्च्यवनः सहस्रपर्ण उत्तिरः।
दर्भो य उग्र ओषधिस्तं ते बध्नाम्यायुषे।।१।।

---

४ का. अग्निन् नो डतः। * यमागं मनः मर्यमंनमविषं कृणोमि।
. . . . . . . ब्रह्मणेनो अदोमन्दं पितुमव्य षसूता।

५ कख का. * * मधु * तप नष् पितावा *.

६ कख का. * * गामृणान्य . . . धान्यं.
गघ का. इन्द्रराशिर्निर्मितो मयाथारं वाचं गश्छतु z
उ. . . . . . . गछति।। ११।।ऋ।।

११.१२.१ कख का. * * सहस्रपर्णमुत्तिरः.
मा. * दुश्चवनः। सहस्रपर्ण्ण उत्तरः।
म. * दुश्चवनः सहस्रपर्ण्ण *।
गघ का. योग्र . . . . . . . . . .z
उ. * * * ओषधिस्तन् . . . . . . .।।

नास्य केशान् प्र वपन्ति नोरसि ताडमा घ्नते।
यस्मा +अच्छिन्नपर्णेन दर्भेण शर्म +यच्छति।।२।।

दिवि ते तूलमोषधे पृथिव्यामसि निष्ठितः।
त्वया सहस्रकाण्डेनायुष्प्र वर्धयामहे।।३।।

तिस्रो दिवो अत्यतृणस्तिस्र इमाः पृथिवीरुत।
तयाहं सर्वान् दुर्हार्दो जिह्वां नि तृणद्मि वचांसि च।।४।।

त्वमसि सहमानो अहमस्मि सहस्वान्।
उभौ सहस्वन्तौ भूत्वा सपत्नान् +सहिषीवहि।।५।।

---

२ कख का. . . . . . . . घ्नती।
मा. * * * वपर्णि . . .।

२ गघ का. * श्छिन्नपर्णेन * * यछतु।
उ. * अछिन्नपर्ण्णेन * यश्छति।।
मा. प्रमादात् काण्डिकान्तः सूचितः।

३ कख का. . . . . . . . . . पृथिव्यामधि निष्ठिता।
म. * * तूमूळमोषधे . . . . . . . .।
ग का. तया . . . . . .।
मा. * सहस्रकाण्डेनाष् ;

४ कख का. * * त्यतृणत्तिस्रोभ्यां पृथिवीमुत।
मा. * दिव्यो . . . . . . . . . . .।
गघ का. तया दृहार्दो जिह्वा * तृणाद्दे * *।
मा. . . . . दुहार्दो * * * * *।।

५ ख का. . . . . सहस्वां।
गघ का. उतौ * * सपत्नात् सहिषीवही।
उ. * * * * सहिषीमहि।।

सहस्व नो अभिमातिं सहस्व पृतनायतः।
सहस्व सर्वां दुर्हार्दो सुहार्दो मे बहून् कृधि।।६।।

दर्भेण देवजातेन दिवि ष्टम्भेन +शश्वदित्।
तेनाहं सस्वतो +जनाँ असनं सनवानि च।।७।।

प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्याय च।
यस्मै च कामयामहे सर्वस्मै च विपश्यते।।८।।

यो जायमानः पृथिवीमदृंहद् यो
अस्तभ्नादन्तरिक्षं दिवं च।
यं बिभ्रतं ननु पाप्मा विवेद स नो [ऽ]यं दर्भो
धरुणो दिवा कः।।९।।

---

६ कख का. सहस्विनो भिमातिहं सहस्वा *
गघ का. * * दुहान्दस् स्वाहान्दो * बहुं *।
मा. * * दुर्हादः * * वहुन् कृधि।।
७ कख का. * * दिवष्टम्भेन शश्वजित्
मा. * * दिविष्टम्भेंन सस्वदित्।
म. * * * * सस्वदित्।
गघ का. . . . . . . . . . दनानशनं शनवानि *।
उ. . . . . . . . जनाङ् . . . ।।
द्रः ७ग सस्वतो < शश्वतः इति प्रामाद्रिकमपि सर्वत्र दृष्टत्वान्न शोधितम्।
८ का. . . . . चास्मै * कामयामहे। * द विपश्यते।
मा. प्रियम् मा . . . . . . . . . . . . . . . . ।।
९ कख का. * * . . . . . . . . . . . . . . योस्तभ्नादन्तरिक्षं * *।
मा. * * पृथिवीमदृहद् . . . . . . . . . . . . . . . . . . ।
गघ का. . . . . धिवा कः z
उ. * विभ्रं . . . ।।

सपत्नहा शतकाण्डः सहस्वानोषधीनां प्रथमः सं बभूव।
स नो [ऽ]यं दर्भः परि पातु विश्वतस्तेन साक्षीय
पृतनाः पृतन्यतः।।१०।।

११.१३ (शौ. १९.३३)

सहस्रार्घः शतकाण्डः पयस्वानपामग्निर्वीरुधां राजसूयम्।
स नो [ऽ]यं दर्भः परि पातु विश्वतो दैवो मणिरायुषा
सं सृजाति नः।।१।।

घृतादुल्लुप्तो[+] मधुमान् पयस्वान् भूमिदृंहो
अच्युतश्च्यावयिष्णुः।
नुदन् सपत्नानधरांश्च कृण्वन् दर्भारोह
महतामहेन्द्रियेण।।२।।

त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे।
त्वां पवित्रमृषयो [ऽ]भरन्त त्वं
पुनीहि दुरितान्यस्मत्।।३।।

---

१० क का. * शतकाण्डस् . . . ;
ख मा. प्रथम * *।
ग का. म नो यं दर्भष् * * विंश्वतः * * मृतना * z५z

११.१३.१ कख का. सहस्राघ्यंश् शतकाण्डष् . . . . . . . . . . . . . . . रासूयं।
गघ का. * * * दर्भष् . . . . . . . . . . . . z१z
मा. . . . मणिरायुधां * * *।।
म. . . . मणिरायुधा * * *।।

२ कख का. घृतालुल्लब्धो मधुवाँ पयस्वाँ भूमिद्रुहो च्युत *
मा. . . . . . . . . . . . . भूमिदृहो अच्युतश्चावयिष्णुः।
म. . . . . . . . . . . . * * * अच्युतश्चावयिष्णुः।
गघ का. * . . . कण्वन् ;
मा. नुदन . . . . . . . . . कृण्वं दभारोह महतामे (=उ.) न्द्रियेण।

३ का. * भूमिगभ्येष्योजसा * * शिरसि चारुरध्वा।
* . . . . . . . . . . . भरन्तस् * पुनिह . . . . . . . . z३z

तीक्ष्णो राजा विषासही रक्षोहा विश्वचर्षणिः।
ओजो देवानां बलमुग्रमेतत्तं ते बध्नामि
जरसे स्वस्तये।।४।।

दर्भेण त्वं कृणु वीर्याणि दर्भं बिभ्रदात्मना मा व्यथिष्ठाः।
अतिष्ठायो वर्चसैध्वन्यान् सूर्य इवा
भाहि प्रदिशश्चतस्रः।।५।।

११.१४

उदीरतां पृथिवी जीरदानुः शीत एनामन्तर्वाननु वातु वातः।
ऋत्वियावती पृथिवी प्रति गृह्णातु बीजं सहस्रवल्लिशं
सुरुहा रोहयन्ती।।१।।

इन्द्र एनां हर्यश्वो अग्निर्वा रोहिताश्वः।
अश्विना रासभाश्वा कृषिं देवीमयूयुजन्।।२।।

---

४ कख का. * * विषासहि * विश्वचर्षणी।
मा. तीक्ष्णा * विषामही * *।
गघ का. तेजो * . . . . . . मेतत्तत् * * * * z४z
उ. * * . . . . . . मेतत्तन् * * * *।।
५ का. * * कृकृणु * * बिभ्रतात्मना * * . . . . . वर्चसेध्वन्या सूर्यैवा
* प्रदिशश्चतस्र z५z
११.१४.१ का. * * जीरदानुश् शातेनामन्तर्वाननु वाति वाता।
ऋद्ध्यावती * * * वीजं सहस्रवलुशं सुदुघा रोहन्ती z१
२ क का. * चनां * .
गघ का. * * * देवीमयोयुजं.

शुनं वरत्रामा यच्छ[+] शुनमष्ट्रामुदिङ्गय।
शुनं तोतप्यतां फालः शुनं वहतु लाङ्गलम्।।३।।

युनक्त वाहान् वि युगा तनोत कृते क्षेत्रे वपतेह बीजम्।
तथा धाता तथा भगस्तथा कृणुतामश्विना तथा
देवी सरस्वती।।४।।

सुपिप्पला ओषधयो नाहीना अपक्षत।
तदिन्द्रो वरुणो वायुरश्विनेदं मे प्र तिरता वचः।।५।।

धाता पूषा बृहस्पतिर्भूत्याः समजीगमन्।
कृषिं देवाः स्वर्विदः।।६।।

कल्याणी सुभगेव या संस्थायां वपुषेण्या।
सा नस्तिराति मधुमन्तमंशुम्।।७।।

---

३ कख का. * वृत्रामा यश्छ . . . . . . . मुदिंगयः.
म. * . . . . यछ . . . . . मदिङ्गय।
उ. * . . . . . यछ . . . . . . . . . . . ।
गघ का. * तु . . . फालश् * * * z३z
उ. . . . . लाङ्गळं।।
४ का. युनक्तु वाहा व्योगा तनोइहते क्षेत्रे . . . . बीजं .
* * * . . . . . . . . . . . . . . मश्विना z४z * * * ।
५ कख का. * * * मक्षतः।
घ का. . . . मे प्रावता वचः z
मा. . . . मे * * वच।।
६ कख का. * * वृहस्पति भूम्याः समजीमकं.
मा. * * वृत्याः समजीगमन्।
७ का. * सुभगेव या। संस्थायान् * * नस्तिरात्र मधुमंनमंशं।
क मा. * सुभगेम या ;

अन्नस्य भूमा पुरुषस्य भूमा भूमा पशूनां त इह श्रयन्ताम्।
तीव्रा वर्षन्तु वृष्टयो भूतये महसे वृधे।।८।।

पिन्वानः पर्जन्यस्तिष्ठतु सह पृष्ठयोदेति सूर्यः।
आनन्दं जनयन् यवः सर्वा अरातीरपबाधमानः।।९।।

वि जिहीष्व पृथिवीमह्युर्विपक्षमृद्वी भव।
भद्रं रोहतु धान्यम्।।१०।।

११.१५

उत्सेध सेध गा अजन् विन्देहेरां महस्कृधि।
मा वो रिषात् कूटग्राहो मा व आ शारि लाङ्गलम्।।१।।

---

८ कख का. अन्यस्य भौमा पुरुरुषस्य भौमा भौमा * नु हि श्रयन्तां z
मा. * * पुरुसस्य * * पशूना * * श्रयन्तां।।
गघ का. * वर्षन्तो (→न्तु) * भूपये महमे वृधे zz
मा. * वर्षन्त * * * *।।

९ कख का. पिन्वानष् . . . स्तिष्ठत सा पुरुषायोदयति *
मा. * पर्यन्यस्तिष्ठतु * पृष्ठयोदेतु *।
म. * पर्यन्यस्तिष्ठतु * पृष्ठयोदेति (←तु) *।
गघ का. * * युव * रातीर . . . . .
मा. * * * * आरातीर . . . . . . .।।

१० कख का. * जीष्व पृथ्विमयूर्विपक्षमृद्वी *;
मा. * जिहिष्व . . . मह्यु (र्वि←) र्द्विपक्षमृद्वी *।

११.१५.१ कख का. * * * जं विन्देहेरान् वहस्कृधि।
गघ का. * हो * * * वा शालि * z
मा. * * भिषत् कुटग्राहो * वा * * लाङ्गलं।।
म. * * * कुटग्राहो * * * * * *।।

मो [ऽ]स्माकमुग्राः संरब्धास्तन्वः किं चनाममत्।
रायस्पोषं शुनासीरा अथो सीताभगश्च यः।।२।।

देष्ट्री समुद्रः सिनीवाली कृषिं नो अभि हिन्वत।
इमा याः पञ्च प्रदिशस्ता वातो अभि हिन्वत।
वलीके सत्वतामिव तीव्रा वर्षन्तु वृष्टयः।।३।।

शौ.३.१७.५　शुनं कीनाशो अन्वेतु *वाहाञ्छुनं फालो विनुदन्नेतु भूमिम्।
शुनासीरा हविषा वावृधाना शुनं धान्यानि
कृणुतं युवं नः।।४।।

शौ.१६.४०.४　या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः।
तामस्मे रासेतामिषम्।।५।।

---

२ कख　का. सोष्माकमुग्रास् संरब्धासूतन्नष् . . . . . . . . z
मा. मोस्माकमुग्राः . . . . . . . . . . . किञ् . . . . . ।
म. मोस्मा (←ष्मा)कमुग्राः . . . . . . किञ् . . . . . ।
ग　म. . . . शु (→सु) नासीरा.
घ　का. यो सीताभगश्च * ।

३ कख　का. ज्येष्ठी समुद्र * * * भी हील्वतः.
उ. * * शिनीवाली * * * * ।
गघ　का. * याष् * . . . . . . . भी हीन्वतु।
ङच　उ. * शत्वतामिव * * * ।।

४ कख　का. * * अन्वेति वाहां। शुनं * विनतं नयतु भूमिं।
उ. * * * वाहां छुनं * . . . . . . . भूमिं।
गघ　का. * * वावृधानाः * * * * नष्.
मा. * * * * * * युवन् * ।।

५　का. 'या नः' नास्ति। . . स्तिरः
तामस्मै राशयतामिषं z
कख　मा. यान पीवरदश्विना . . . . . . . . . ।
म. * * पीप(→व)रदश्विना . . . . . . . ।

११.१६

ऊर्ध्वश्रितो वै नामैता आपो यदोषधयश्च वनस्पतयश्च
तासामग्निरधिपतिः। यो वा एता ऊर्ध्वश्रित
आपो वेदाग्निमधिपतिम्। यथैतमेता ऊर्ध्वा
उपतिष्ठन्त्येवैनमूर्ध्वा उप तिष्ठन्त्यधिप-
तिर्भवति स्वानां चान्येषां च य एवं वेद। ।१। ।

प्रस्कद्वरीर्वै नामैता आपो यत् +पृष्वास्तासामा-
दित्यो ऽधिपतिः। यो वा एताः प्रस्कद्वरी-
रापो वेदादित्यमधिपतिम्। यथैता एतस्मिन्नुध-
ति प्रस्कन्दन्त्येवास्मिन्नायति प्रस्कन्दन्त्यधिपति-
[र्भवति स्वानां . . . . . . . . . . . वेद]। ।२। ।

---

१ का. ऊर्ध्वश्वितो * नामैतापो यधौषध्यश्च . . . . . . . . पतिः
* * यता ऊर्ध्वश्वितापो . . . . . पतिं। अथैतमेता * . . . . .
. . . . मूर्ध्वा। . . . . . . . . . . वेद (अत्र मन्त्रान्तो न सूचितः।)
मा. द्वितीयं वाक्यं न लब्धम्। तृतीये वाक्ये - यथैतमेता *
उंपतिष्ठन्तेवैनमूर्द्ध्वा . . . . . . . . . . .। ।

२ का. प्रस्कद्वरीवै नामैतापो * परुष्वास्ता . . . त्यो अधिपतिः यो
वा यताषूप्रस्करीरापो वेद आदित्यमधिपतिं। अथैता . . . . . .
प्रस्कंदंत्येवास्मिन्यावति . . . . पतिः z२z
उ. प्रथमवाक्ये "पृष्यास्तासामादित्यो . . ." इति। द्वितीये "यो
वा" नास्ति।
मा. तृतीयवाक्ये "एतस्मिन्नुदति" इति।

तक्वरीर्वै नामैता आपो याः सूदय तासां पृथिव्यधिपत्नी।
यो वा एतास्तक्वरीरापो वेद पृथिवीमधिपत्नीम्।
यथैता एतस्यां प्रणुतास्तकन्तीर्यन्त्येवैनेन द्विषन्तः
प्रणुता यन्त्यधिपति[र्भवति . . . वेद]।।३।।

वशिनीर्वै नामैता आपो याः स्यन्दन्ते तासां वरुणो [ऽ]धि-
पतिः। यो वा एता वशिनीरापो वेद वरुणमधिपतिम्।
यथैतमेतासां स्यन्दमानानां वशमादत्त एवा द्विषतां
वशमादत्ते [ऽ]धिपति[र्भवति . . वेद]।।४।।

ऊर्जो वै नामैता आपो यद् गावस्तासां त्वष्टाधिपतिः।
यो वा एता ऊर्ज आपो वेद त्वष्टारमधिपतिम्।
ऊर्जस्वी तेजस्वी भवति प्र साहस्रान् पशूनाप्नोत्यधि-
पतिर्भवति [स्वानां . . . वेद]।।५।।

---

३　१मं वाक्यम्　का. . . . . . नामैतापो या . . . . . . व्याधिपत्नी.
मा. . . . . . . . . . . . . आपो या . . . . . . . . . . .।
२यं वा.　का. * * यतास्त . . . . . . पत्नी.
उ. "यो वा" नास्ति। एवं त्रयोदशं मन्त्रं यावत्।
३यं वा.　का. अथैता * . . . स्तकंतीरियंत्येवै . . . . धिपति z
मा. . . . . . . . . न्त्येवैनन * * . . . . तिः ।।
४　१मं वा.　का. वशिनीवै नामैतापो या स्यन्दंते * * अधिपतिः.
२यं वा.　का. * * यता . . . . . . . . . . . . . . .।
३यं वा.　का. अथैषेतासां . . . . . . . . . अधिपति.
५　१मं वाक्यम्　का. ऊर्जेवै नामैतापो * भावस्थासां त्वष्ट अधिपतयः.
२यं वा.　का. * * यता ऊर्जपो . . . . . त्वाष्टरमधिपतिं
३यं वा.　का. * * *। * सहन् . . . . . . . पतिः.

वर्चो वै नामैता आपो यद् घृतं तासां पूषा अधिपतिः।
यो वा एता वर्च आपो वेद पूषणमधिपतिम्।
वर्चस्वी तेजस्वी भवत्युतास्यानभ्यक्तस्य मुखं रोचते
[ऽ] धिपति[र्भवति . . . वेद]। ।६। ।

ओजो वै नामैता आपो यन्मधु तासामिन्द्रो [ऽ]धिपतिः।
यो वा एता ओज आपो वेदेन्द्रमधिपतिम्। ओजस्वी
वीर्यावानिन्द्रियावी भवति प्र राजसभायां मधुपर्कमाप्नोत्य-
धिपति[र्भवति . . . . वेद]। ।७। ।

उग्रा वै नामैता आपो *यद्ध्रादुनयस्तासां
मरुतो [ऽ]धिपतयः।
यो वा एता उग्रा आपो वेद मरुतो [ऽ] धिपतीन्।
उग्रो वलवान् भवति मारुतं शर्ध इत्येनमाहुरधिपति-
[र्भवति . . . . वेद]। ।८। ।

---

६ काश्मीरीये अयं सप्तमो मन्त्रः।
१मं वा. का. * * नामैतापो * * * पूषां अधिपतयः.
२यं वा. का. * * यता वर्चापो * पूषणमधिपतयः यो वा यता वर्चापो वेद पूषणमधिपतिं.
३यं वा. का. * * भवत्येतस्यानित्युक्तस्य * * अधिपतिः.
७ काश्मीरीये अयं षष्ठो मन्त्रः।
१मं वाक्यम् * * . . . तापो . . . . . . न्द्रोधिपत्नीपतीन्।
२यं वा. का. नास्ति
३यं वा. का. * . . . . . . . न्द्रियावै * पर * . . . . . . . z६z
८ १-२ वा. का. * * नमैतापो यद्ध्रादुदयस्तासां मरुतो [धिपतयः] [यो वा यता उग्रापो] वेद मरुतो अधिपतीन्।
द्र. प्रथमकोष्ठस्थोऽशः मुम्ब.मात्रलभ्यः। द्वितीयः का. नष्टप्रायः।
उ. . . . . . . . . . यद्व्रादुनयस्तासां * *।
३यं वा. मा. * * * * * * * श्रद्ध . . . . . . . । ।
म. * * * * * * श्रद्ध (→शर्द्ध) . . . . । ।

महो वै नामैता आपो यद्वर्षं तासां पर्जन्यो[ऽ]धिपतिः।
यो वा एता मह आपो वेद पर्जन्यमधिपतिम्।
महस्वी मित्रवाहो भवत्युतैनेन स्वा नन्दन्त्यस्माकम-
यमिति तस्मात् सर्वो वृष्टे महीयते [ऽ]धिपति-
[र्भवति . . . वेद]। ।६। ।

अतिमन्या वै नामैता आपो यत् सुरा तासामश्वि-
नाधिपती। यो वा एता अतिमन्या
आपो वेदाश्विनाधिपती। अतिमन्यते भ्रातृव्या-
न्नैनं भ्रातृव्या अतिमन्यन्ते तस्मान्मत्तो मत्तमति-
मन्यते [ऽ]धिपतिः [. . . . . वेद]। ।१०। ।

---

६ १मं वाक्यम् का. सहो * नामैतापो . . . * * अधिपतयः.
२यं वा. का. * * यता मरुतो वेद। . . . पति
३यं वा. का. महस्स्वैमित्त्रबाहवो भवत्येथैनेन * नन्दंत्यस्माग्व-
यमिति अस्माश् छर्वो * * अधिपतिः z
उ. * * . . . . . . स्वा नन्दंत्यस्माकयमिति * * पृष्ठे * *। ।

१० १मं वाक्यम् अभिमन्य * नामैतापो * स्वरा . . . नाधिपतीन् z
म. . . . . . . . श्विनामधिपती।
२यं वा. का. * * यतामभिमन्यापो वेद अश्विनामधिपतीन्.
वा. * * * वेदास्विनाधिपती।
३यं वा. का. अभिमन्यते भ्रातृव्या नैनं * भिमन्यन्ते तस्मान्मंतोर्मत्तमनुमते
अधिपतिः
मा. . . . न्तेतभ्रातृव्या नैनं * * . . . . . . . . . . . .। ।

परिचितो वै नामैता आपो याः कर्ष्वां तासां यमो [ऽ]धि-
पतिः। यो वा एताः परिचित आपो वेद यममधि-
पतिम्। पर्येनं स्वाश्च विश्याश्चावश्यन्त्यधिपतिः
[. . . . . वेद]। ।११। ।

रन्तयो वै नामैता आपो यत स्त्रियस्तासां कामोऽधिपतिः।
यो वा एता रन्तीरापो वेद काममधिपतिम्। रमन्ते
अस्मिन् रमणीयो भवति काम इव स्त्रीणामधि-
पतिः [. . . . . . वेद]। ।१२। ।

---

११ १मं वा. का. परिचिन्तो * नामैतापो * करिष्वांस् तां * अधिपतिः
मा. * * . . . . याः कर्षांतासांयमो * * *।
२यं वा. का. * * यता परिचितिरापो वेद इममधिपतिं ;
३यं वा. का. पर्येणंस्यास्य विश्वास्यावश्यन्त्यधिपतिः z
उ. मन्त्रान्ते "३" इति। इदं तु द्विपदां त्रित्वं सूचयति।

१२ १मं वा. का. रंतयो * नामैतापो यास् स्त्रियास् स्तासां कामो अधिपतिः.
२यं वा. का. * * यतां रंतीरापो * . . . . . . पतिं.
३यं वा. का. * स्मिन् रमणियोयो * कामैव . . . . . . z
मा. * * रमणियो * * * . . . . . .। ।

विश्वभृतो वै नामैता आपो यत् पुरुषस्तासां मृत्युरधि-
पतिः। यो वा एता विश्वभृत आपो वेद मृत्युमधिपतिम्।
विश्वस्य भर्ता भवति विश्वमेनं बिभर्त्यास्य त्रयो [ऽ]ग्नयो
गृहे धीयन्ते दक्षिणाग्निर्गार्हपत्य आहवतीयः। ऐनं चत्वारि
वामानि गच्छन्ति निष्कः कंसो [ऽ]श्वतरो हस्त्यधिपतिः
[. . . . . वेद]। ।१३। ।

+तासां वा एतासामपां हिमवानूधः सोमो वत्सः परमेष्ठ्य-
धिपतिः। यो वा एतासामपां हिमवन्तमूधः सोमं वत्सं
परमेष्ठिनमधिपतिं वेद। परमेष्ठी भवति +गच्छति
परमेष्ठितामधिपतिर्भवति स्वानां चान्येषां
च य एवं वेद। ।१४। ।

अनुवाकः समाप्तः

एकादशः चतुर्दशर्चः काण्डः समाप्तः

---

१३ १ वाक्यम् का. * * नामैतापो * . . . रधिपतीन् ;
२वा. का. नास्ति। मा. . . . मत्युमधिमृत्युमधिपतिं।
३,४वा. का. * * * विश्वमेनं विभर्ताऽस * अग्नयो गृह *।
दक्षिणाग्निगार्हपत्याहवनीयः एनं * * * * * अश्वतरोस्त्यधिपतिः z
मा. विश्व(श्य→)स्य . . . . धीयन्तेर्दक्षिणाग्नि गार्हपत्या *। एनं
* * गछन्ति . . . .। ।
१४ का. इमां * यतासामपां हिमवानौधः * * . . . . . . * * यतासामपां
हिमवन्तंनौधं * * परमेष्ठ्यधिपतिष् परमेष्ठी भवतु गश्छतु परमेष्ठिन्राम-
मधिपतिर्भवति . . . . . . zz zz
१ वा. उ. तासाम्वा . . . ।
२ वा. मा. . . . . . . . परमेष्ठिनंमधिपतिं *।
३ वा. उ. * * गछति . . . . . . . . . .। । १६। । ऋ १४ । । अ। ।
काण्डान्ते का. इत्यथर्वणिकपैप्पलादशाखायां द्वादशष्काण्डस् समाप्ताः
zz
मा. चतुर्दशर्चकाण्डः। म. चतुर्दशर्चकाण्डः समाप्तः। ।

# द्वादशः काण्डः

## १२.१

## (शौ.५.२२)

शौ.१ अग्निस्तक्मानमप बाधतामितः सोमो ग्रावा
मरुतः पूतदक्षाः।
वेदिर्बर्हिः समिधः शोशुचाना अप
रक्षांस्यमुया धमन्तु।।१।।

शौ.६.२०.३ अयं यो रूरो अभिशोचयिष्णुर्विश्वा रूपाणि
हरिता कृणोति।
तस्मै ते [ऽ]रणाय बभ्रवे तपुर्मघाय नमो
[ऽ]स्तु तक्मने।।२।।

ग ९ग तक्मन् सार्थिनमिच्छस्व' वशी सन् मृडयासि नः।
अथेहि यत्र ते गृहा अनिनूर्त्तेषु दस्युषु।।३।।

---

काण्डारम्भे का. अथ त्रयोदशष्काण्डा लिख्यते zz zz ओं नमो नारायणाय zz
ओं अग्निस् . . . . . .। उ. ओं अग्निस् . . . . .।

१ कख का. . . . . . . . वायतामितस् * * मरुतष् पूतदक्षात्.
गघ का. वेदिभुहिस् समिधस् संशिशानो प रक्षांस्यमुग्न्या यमन्तु z१z
मा. वेदिवर्हिः समिध * * . . . . . . धमन्त।।

२ कख का. अयं रूरो . . . . . . . . . . . . कृणोषि।
मा. * * रुरो . . . . . . . . ।
गघ का. * * अरुणाय * तपुर्मघावाय * * * z२z

३ कख का. तक्मं . . . मिश्छस्व * सं मृळयासि *।
मा. * . . . मिछस्व वसी * * *।
गघ का. यथेह्यत्र * गृहान्यत्पूर्तेषु दम्यतु z३z
मा. . . . यत्रे ते * अनिनूत्तेषु *।।

३ यः पुरुषः पारुषेयो ऽवध्वंस इवारुणः।
तक्मानं विश्वधावीर्या अधराञ्चं परा सुव।।४।।

४ अधराञ्चं प्र हिणोमि नमस्कृत्वा तक्मने।
शकम्भरस्य मुष्टिहा पुनर्गच्छ+ महावृषान्।।५।।

८ महावृषान् मूजवत ओक एधि परेत्य।
व्रतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमाः।।६।।

५ ओको अस्य मूजवन्त ओको अस्य महावृषाः।
याञ्जातस्तक्मं तादसि बलिहिकेषु न्योचरः+।।७।।

६ +तक्मन् व्याल वि गद व्यङ्ग भूरि यावय।
दासीं निष्टक्वरीमिछ+ तां वज्रेण समर्पय।।८।।

---

४ कख का. यष् पुरुषष् पार्श्वयो बध्वंस हिवारुणस्
मा. * * * अवध्वंस . . . . . .।
गघ का. * विश्वधारीर्या धनांच * * z४z
घ मा. अधराञ्च * शु(→सु)व।।

५ का. * * हिणोषि नमष्कृत्याय तक्मने z
श(→शा)कम्भरस्य *। . . गश्छ महावृषां z५z
मा. अधराञ्च * * . . . . . शकुम्भरस। मृष्टिहा पुनर्गछ *।।
गघ म. शकुम्भरस्य * पुनर्गछ *।।

६ का. महावृषां मूजवतोर्केधि परेन्यः प्रजानि * * न्यक्षेत्राणि वायसां z६z
गघ मा. * * वृमो अन्नक्षेत्राणि * *।।

७ का. कौस्य मूजवंत ओकस्य महावृषां।
मयाजातस्तक्मं तदसि बह्निकेमुखुन्योतरः;
ख मा. * * महावृषा। घ उ. * न्योचर।।

८ कख का. तक्म * वकद व्यंअ तूर्यावयः
मा. तस्मिन् . . . . . . . . . . व्यङ्गं * *।
म. तस्मिन् . . . . . . . . . . . . . . . . .।
गघ का. * नस्तकुरीमपृश्छ * * . . . . . . .।
उ. * . . . . रीमिछ * * . . . . . . . . .।।

गिरिं गच्छ+ गिरिजासि गिरौ ते माहिषो गृहः।
दासीमिच्छ+ प्रफर्व्यं तां तक्मन् वीव धूनुहि। ।९। ।

१० यस्त्वं शीतो+ अथो रूरः सह +कासावीवियः।
भीमास्ते तक्मन् हेतयस्ताभि स्म+ परि वृङ्धि नः। ।१०। ।

१२.२

१२ तक्मन् भ्रात्रा बलासेन स्वस्रा कासिकया सह।
पाम्ना भ्रातृव्येण नश्येतो *मरटाङ् अभि। ।१। ।

१४ गन्धारिभ्यो मूजवद्भ्यः काशिभ्यो मगधेभ्यः।
जने प्रियमिव शेवधिं तक्मानं परि दध्मसि। ।२। ।

---

९ कख का. * गश्छ . . . . . रौ तेन मायुषो गृहाः.
उ. गछ . . . . . . . . . . . . . ।
गघ का. दासीमृत्युश्छ * तौंस्तक्मंनीव * z
उ. दासीमिछ प्रफर्वन् . . . . . . . । ।

१० कख का. . . . . . शीत * रूरत् सहा गात्सहवीवप.
मा. . . . सीतो * रुरः * काशा अवीवियः।
म. . . . सीतो * * * काशा. . . . . ।
गघ का. भीमस्ते * . . . . . . स्ताभिस्स * वृद्धिना zz
उ. . . . . . . . . . स्ताभि ष्म * * * । ।१। ।ऋ। ।

१ कख का. तक्मं . . . . . . . . ।
मा. तक्मन भ्राता वलासेन स्वस्ता काशिकया *।
म. * * वलासेन * काशिकया *।
गघ का. अपाम्ना भ्रातृव्येन . . . मरटां (मु. यं, बे. चं, अक्षरंभग्नम्)
मभि z१z
मा. * * . . मरटांङ *। ।
म. ** . . . मरटाङ *। ।

२ कख का. गान्धारिभ्यो मौजवद्भ्यष् * मयेभ्यः
मा. * मूळवद्भ्यः * *।
गघ का. जाने . . . . . . शवधि तन्मानं * *
मा. . . . . . . सेवधिं * * *। ।

नार्कविन्दान्नार्विदालान्नान्नदीं वर्तकावतीम्।
८गघ व्रतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमाः।।३।।

६ अन्यक्षेत्रे न रमते सहस्राक्षो अमर्त्यः।
अभूदु प्रार्थस्तक्मा स गमिष्यति बलिहिकाम्।।४।।

अदो +गच्छ मूजवतस्ततो वा घ परस्तरम्।
गघ ११ गघ मा स्मातो अभ्यैर्नः पुनस्त[त्] त्वा
तक्मन्नुप ब्रुवे।।५।।

परस्मै व त्वं चर परमस्यां परावति।
यथा नो नान्तमायसि यथा नो नाभिशोचया।।६।।

---

३ कख का. नार्कविदीं नार्विदालां नदीयंर्वतुकावतीं z
मा. नार्कविन्दाना . . . . . . . . ।
गघ का. प्रजानि * व्रूमो न्यक्षेच्चाणि वांयुमां। z
मा. * * वृमो * * * ।।

४ कख का. . . . मर्त्यः.
मा. अन्यक्षेत्र * * * * ।
गघ का. अभूदि प्रातूस्तक्मात् * ममिष्यति वक्षिकं z४z

५ कख का. * गश्छ . . . . . . वा ग * ।
मा. * गछ मूळवतस्ततो * * * ।
म. * गछ . . . . . . . . . . . ।
गघ का. * * भीर्णष् पुनष्प्र * . . . . व्रुवे;
मा. म स्मातो . . . . . तक्मंनुप वृते।।
म. * . . . . . . . . . तक्मंनुप व्रुवे।।

६ क का. * * * जर.
गघ का. * नूनंत्वमा . . . * नू . . .।
उ. * * नांतमायसि . . ।।

## १२.३
## (शौ.५.२५)

२ यथेयमुर्वी पृथिवी वृद्धैव गर्भमादधे।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे।।१।।

१ पर्वताद्दिवो योनेर्गात्रादगात्रात् समाशृतम्।
रेतो देवस्यदेवस्य त्सरौ पर्णमिवाधाम्।।२।।

५ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।।३।।

३ गर्भं धेहि सिनीवालि गर्भं धेहि *सरस्वति।
गर्भं युवमश्विनास्यामा धत्तं पुष्करस्त्रजा।।४।।

४ गर्भं ते राजा वरुणो गर्भं देवो बृहस्पतिः।
गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते।।५।।

---

१ का. . . . . . * विद्धीव . . . . . .।
यवा दधामि * * * . . . . . . . . z

२ उ, का. पर्वताद्दिवो योनेरित्येका।
द्र. मन्त्रोऽयं पै.३.३९.५ इति पूर्वमेव गतः।

३ का. . . . . . . . . त्वाष्ट * *।
अशिञ्चतु प्रजापतिवाता * * * z
गघ मा. * * प्रजाप्रजापतिर्द्धाता * * *।।

४ कख का. * देहि * * देहि सरस्वती।
उ. * * शिनीवाली * * सरस्वती।
गघ का. * योमश्विनास्यामा * पुष्करसृज z
म. * युगमश्विनास्यामा * *।।
द्र. ४ग म. युगमिति युवामित्यस्य विकार इति प्रतीयते।

७ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः+।।६।।

येनौषधयो गर्भिणीः पशवो येन गर्भिणः।
तेषां गर्भस्य यो गर्भस्तेन त्वं गर्भिणी भव।।७।।

वि ते ग्रन्थिं चृतामसि धाता गर्भं दधातु ते।
आ योनिं पुत्रो रोहतु जननं प्रति जायताम्।।८।।

जनिष्ट हि महिया आ योनिं समिहासरत्।
अथा सोम इव भक्षणमा गर्भः सीदत्वृत्वियम्।।६।।

१० धातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे।।१०।।

१२.४.

(शौ.५.२५)

१२ सवितः श्रेष्ठेन रूपेणा[स्या ...... सूतवे]।।१
विष्णोः श्रेष्ठेन [रूपेणास्या ....... सूतवे]।।२।।

---

६ का. * स्योषधीनां **। **** ग्रये गर्भमे धा z६z
घ उ. ....... थाः।।

७ का. यदोषधयो गर्भिणीष् *** येषां ** ..... z७z

८ क का. *** वृतामसि ;
घ का. ** जयतां z८z

६ कख का. जनिष्ठ इह मैजाथो नियं समुह्याचरत्
गघ का. अधा सोमैव ..... गर्भस् स्वेददृत्वियं z z३z
मा. .......... सीदतृत्वियं।।

१० का. मन्त्रोऽयं नास्ति।

१०घ मा. दॅशमे मासि सूतवे।।३।।ऋ।।

१२.४.१ का. सवितुश्श्रेष्ठेन z१ श्रेष्ठेन २z

११ त्वष्टः श्रेष्ठेन [रूपेणास्या . . . . . . सूतवे]। ।३। ।
भगः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे। ।४। ।

८ अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम्।
वृषाणं वृष्ण्यावन्तं प्रजायै त्वा नयामसि। ।५। ।

६ यद्वेद राजा वरुणो वेद देवो बृहस्पतिः।
इन्द्रो यद्वृत्रहा वेद तद् गर्भकरणं पिब। ।६। ।

६ वि जिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम्।
ददन् ते पुत्रं देवाः सोमपामुभयाविनम्। ।७। ।

सोमस्य त्वर्त्वियेनोपैमि गर्भकृत्वने।
ततस्ते पुत्रो जायतां कर्तवै वीर्येभ्यः। ।८। ।

---

३ का. त्वष्टुः * ३। ।
मा. तष्ठः *। ।

४ का. * * z. . . . . . . नाभा * पुंसांस . . . . . .मामि *।
म. "भगः श्रेष्ठेन रू" इत्यंशो नष्टः।

५ का. -'धि' इत्यत आरभ्य 'गर्भमि'त्यवधिको भागो नष्टः। 'वृषा' इत्यक्षरद्वयमपि।

५ ग उ. * वृष्णियावन्तं.

द्र. २क, ४क 'विष्णो' 'भग' इत्येव पाठौ ग्राह्यौ स्याताम्।

६ का. मन्त्रार्धान्ते छेदो नास्ति। घ 'तदु' इत्यतो नष्टान्यक्षराणि। अन्ते 'वा' z इति। मुम्ब. तदुगर्भकरणं पिवा।

७ का. * जष्व . . . . . शयां। ददत्ते * देवा सोमपा उभयाविनं z

८ कख का. * दृत्वियोनोपैम गर्भकृत्वन।
मा. * त्वर्त्वियैनोपैमि *। घ का. कर्तावै * ;

## १२.५

जायस्वाग्ने [ऽ]श्वत्थादस्मै क्षत्रायौजसे।
उग्र आपतिकादधि[1] यो वृक्षां अधिरोहति।।१।।

विबाधं चित् सहमानं त्वामग्ने जनयामसि।
जातां जनिष्यमाणां सपत्नान् प्र णुदस्व मे।।२।।

अश्वत्थस्यारोहस्य वृक्षस्यारणयः कृताः।
ततो जाताय ते [ऽ]जनि वीडुजम्भाग्निरग्नये।।३।।

तं जातं जातवेदसमा दधाम्यमर्त्यम्।
पावकमग्निमूतये शुचिमन्तं विषासहिम्।।४।।

उत्तनुष्व धनुः प्रति मुञ्चस्व वर्म
जहि शत्रून् वीर्या ते कृणोमि।
अत्र रध्यन्तु य उ ते सपत्ना-
स्त्वमेकवृषो भव।।५।।

---

१ कख का. . . . . . अश्वत्थादस्मै क्षत्रायोजसे।
मा. . . . . . क्षत्रायोजसे।
गघ का. उग्रापथिकादधि * * *। उ. * आपतिकोदधि . . . ।।

२ गघ का. * * सपत्रा पृणस्व * zz

३ कख का. अश्वत्थस्यावरोहस्य . . . रणयष्कृता।
मा. अस्वत्थस्यारोहस्य . . . . . . . . .।
गघ का. * * * जन . . . . . . . रग्नये z

४ का. त्वं * . . . . . . . . . ददाम्यमर्त्यां . . . . . . . मुतये। *
विशासहि।

५ कख का. उत्तरष्व धनु * * * * शत्रून् * * कृणोतु।
म. मन्त्रार्धान्ते दण्डद्वयेन विरामः।
ग का. "अग्निरिक्षंतयूते" इत्यतः मन्त्रो भ्रष्टः।

ऋ.१०.१६६.१ वृषभं त्वा सजातानां सपत्नानां विषासहिम्।
हन्तारं शत्रूणां कृण्मो विराजं गोपतिं गवाम्।।६।।

समुद्रोऽस्यपां ज्येष्ठ इन्द्रो देवेषु वृत्रहा।
व्याघ्रं सिंहं त्वा कृण्मो दमितारं +पृतन्यताम्।।७।।

इन्द्र इव दस्यूनधरान् कृणुष्वोग्र इव वातो
विशृणन् सपत्नान्।
ते शुष्यन्त्वप दावादिवाग्नेः पर्यवीवरथा एनान्।।८।।

सं वृश्चैनांस्ते शुष्यन्तु वृश्चैनान् मोपजां शिषः।
सपत्नान् सर्वांस्तृढ्वा त्वमेकवृषो भव।।९।।

त्वमुग्रस्त्वं बली त्वमेधि विवाचनम्।
त्वं +पृतन्यतः पूर्वः सपत्नां अव धूनुष्व।।१०।।

---

६ का. * विशासहिं। * शतृणां कृण्वो विराजङ् * * z

७ कख का. * स्यपा ज्येष्ठं * * *।

गघ का. * * * वृण्वो * पृदन्यतां।

मा. * सिहं * * * पृतन्वतां।।

म. * * * * * पृतन्वतां।।

८ का. इन्द्रैव धस्योनधरां कृण्वष्वोग्रैव वाचो विसृणं सपत्नां ते शुष्यन्तप्तापा विवग्ने पर्यावैरथायनां z२z

८ ग उ. * शुष्यंत्वप . . . . . . , . ; मन्त्रान्ते मण्डलमङ्कितम्।

९ का. औं सं वृष्वैनांस्ते शुष्कं वृश्चैनां सोमजां शिखस् सपत्नां सर्वास् त्रिढ्वा . . . . . . . . .।

१० कख का. त्वमुग्रास्त्वं वलीस्त्वमेध्यविवाचनं

गघ का. * पृदन्यतः पूर्वां सपत्नां अवि घूनुष्वा zz

उ. * पृतन्वतः * * * *।।५।।ऋ१०।।

१२.६

ऋ.१०.१६६.२　असपत्नः सपत्नहेन्द्र इवारिष्टो अक्षितः।
अधः सपत्नास्ते पदोः सर्वे सन्त्वभिष्ठिताः+।।१।।

म्लायन्तु ते खातमूलाः सपत्ना अग्निमेषां
निर्दहयामि शरीरात्।
हविषैषामपि दधामि प्राणांस्तथैभ्यो
अमुचिः कृताः।।२।।

शौ.१.२९.४　अभिवर्धमभिभवं सपत्नक्षयणं हविः।
राष्ट्राय तुभ्यं कृण्मः सपत्नेभ्यः पराभवन्।।३।।

पै.१०.११.१क　यो न[:] स्वो यो अरणोऽरातीयति पूरुषः।
इध्मस्येव प्रक्षायकस्तस्य मोच्छेषि किं चन।।४।।

---

१　कख　का. सपत्त्रस् . . . . . . . . अक्षतः
मा. असपत्न सपत्नहेइन्द्र . . . . . :
गघ　का. अधस् . . . . . . . . सत्वभिष्ठुतः।।
उ. . . . . . . . . . सन्त्वभिष्टिताः।।

२　कख　का. म्लायंतु * खातमूलासपत्त्राग्निमेषां * शरीराः.
उ. म्लायन्तु * खातमूळाः . . . . . . : . निरुहयामि *।
गघ　का. हविषेकामवि दधा प्राणास्तदे x ो x ष्कृतः.
द्र.　मुम्ब. मन्त्रान्ते 'प्राणास्तदेभ्यो अमुचिष्कृतः ' इति।
का. 'भ्योअमुचि' इति भागो नष्टः।

३　का. . . . . सपत्त्रक्षीणं हविः * * कृण्वस् सपत्त्रभ्यष् परातुव

४　कख　का. * न * * अरुणो रातीरति पौरुषः
मा. * न * जो अरुणो * *।
गघ　का. युग्मस्येव प्रक्षायतसूतस्य मुशूछेष किञ्चन।
मा. . . . . . . . . . मोर्चूछेषि किञ्चन।।

पै.१०.८.४-५ असपत्नं पुरस्तात् पश्चान्नो [ऽ]भयं कृतम्।
सविता मा दक्षिणत उत्तरान्मा शचीपतिः।।५।।

दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः।
इन्द्राग्नी रक्षतां मा पुरस्ता-
दश्विनावभितः शर्म यच्छताम्।।
तिरश्चीनघ्न्या रक्षतु जातवेदा
भूतकृतो मे सर्वतः सन्तु वर्म।।६।।

१२.७

(शौ.४.३७)

शौ.१ त्वया पूर्वमथर्वाणो जघ्नू रक्षांस्योषधे।
त्वया जघान कश्यपस्त्वया कृण्वो अगस्त्यः।।१।।

२ त्वया वयमप्सरसो गन्धर्वांश्चातयामसि।
अजशृङ्ग्यज रक्षः सर्वान् गन्धेन नाशय।।२।।

---

५-६ का. असपत्नमितिद्वे zz
उ. असपत्नमिति द्वे।। ६।।ऋ६।।
द्र. ५-६ मन्त्रौ यथा १०.८.४-५ संस्कृतौ मया तथैवात्रोपस्थापितौ।
१ क का. जघनो ......।
घ का. त्वया कण्वो *;
१ म. 'त्वया' इति पदम् 'षधे' इत्यतः 'कृ' इत्यन्तो भागश्च नष्टम्।
१ घ म. ण्मो अगस्त्यः।।
द्र. २ ख मा. अन्ते दण्डद्वयेन विरामः।
२ ग मा. अजशृङ्ग्वज *;
२ घ का. सर्वा * नाशया।

३ नदीं यन्त्वपूसरसो अपान्तारमिव श्वसन्।
गुलुगुलू पीला नलद्यौक्षगन्धिः प्रमन्दिनी।।३।।

यत्रामर्त्या अपूस्वन्तः समुद्रे तुरुर्नीली तुर्वशी पुण्डरीका।
तत् परेता अपूसरसः प्रतिबुद्धा अभूतन।।४।।

पै.७.१३.४ द्र. यत्र प्रेङ्खो गन्धर्वाणां दिवि बद्धो हिरण्ययः।
[तत् परेता . . . . .]।।५।।

गन्धर्वाणामप्सरसामानर्तमिति संगमम्।
[तत् परेता . . . . . .]।।६।।

४ यत्राश्वत्था न्यग्रोधा महारुक्माः शिखण्डिनः।
[तत् परेता . . . . . .]।।७।।

---

३ कख का. * अप्सरसो अपां तारमिव स्वसं;
मा. नदी यंत्वप्सरसो . . . . . . . . . . . . .।
म. * यंत्वप्सरसो . . . . . . . . . . . . . . .।

गघ का. गुलुगुलूः पाला नलद्युक्षगन्धिष् प्रबन्धिनी z
मा. गुल्गुलू . . . . . . . . . . . . . .।।
म. गुल्गुकू . . . . . . . . . . . . .।।

४ कख का. यत्रामर्त्यपूस्वन्तः z * तुरूण्यरी * *।
मा. . . . . . . . . अपसन्तः * तुरुर्नीलितुवशी *।
गघ का. तत्परेता प्सरसष् * *।
खग म. '-का। तत्परेता-' इति भागो नष्टः।

५ क मा. * प्रेङ्ख्यो *;
ख का. * बन्धो हिरण्यय z
द्र. मा. मन्त्रान्ते एकेन दण्डेन छेदः।

६ का. . . . . . . . सामानन्तमिति सङ्गमं z
म. . . . . . . सोमानर्तमिति सङ्ग्मं।।
मा. . . . नर्तमिति सङ्ग्मं।।

७ ख का. ःहावृक्षाश्शिशण्डिनः z

५ यत्र वो[ऽ]क्षा हरिता अर्जुना आघाटाः कर्कर्यः संवदन्ति।
तत् परेता अप्सरसः प्रतिबुद्धा अभूतन।।८।।

७ इयं +वीरुच्छिखण्डिनो गन्धर्वस्यापूसरापतेः।
भिनत्तु मुष्कावपि यातु शेफः।।९।।

६ एयमगन्नोषधिर्वीरुधां वीर्यावती।
अजशृङ्ग्यराटकी तीक्ष्णशृङ्गी व्यृषतु+।।१०।।

१२.८

अपेतेतो अपूसरसो गन्धर्वा यत्र वो गृहाः।
तीक्ष्णशृङ्ग्यराटक्यजशृङ्गी व्यृषतु+।।१।।

शौ. ४.३७.१२ जाया वेद वो अपूसरसो गन्धर्वाः पतयो यूयम्।
अप क्रामत् पुरुषादमर्त्या मर्त्यं मा सचध्वम्।।२।।

---

८ का. * वौक्षा * र्जुना घाटाष् कर्करी असंवदन्ति।
* * पूसरसः प्रतिवुद्धा *.

८ ख मा. अघाटाः कर्कर्यच *।

९ कख का. * वीरुश्छिखण्डिनो गन्धस्याप्सरापते
उ. * वीरुछिखण्डिनो . . . . . . . .।

गघ का. भिनत्कु . . . . . . . शेपः z

१० कख का. येमगन्वोषधिर्वी . . . .।

गघ का. अजशृङ्गि राटकां तीक्ष्णशृङ्गी वर्ततु।
मा. अजशृङ्ग्यजराटकी तीक्ष्णशृङ्गीर्वियृषतु।। . . .
म. . . . . . . . . . . तीक्ष्णशृङ्गीर्वियृषतु।। . . .

१२.८.१ कख का. . . . . . पूसरसो * * * गृहा।

गघ का. अजशृङ्गिराटक्यजशृङ्गी वर्ततु z
उ. . . . . . . . . . शृङ्गीर्वियृषतु।।

२ कख का. * दोवे पूसरसो गन्धर्वाष् * यूयं।

गघ का. . . . . . . . . . . सिचध्वं z२z
मा. * परुषादमर्त्या मर्त्त्यं * *।।
म. * पूरुषादमर्त्त्या मर्त्त्यं * *।।

८ भीमा इन्द्रस्य हेतयः शतमृष्टीरयस्मै।
ताभिर्गन्धर्वानमैध्यानवकादान् व्यृषतु॑।।३।।

१० अवकादौं अभिशाचो मितूसु घोतयमामकान्।
गन्धर्वान् सर्वानोषधे प्र णुदस्व परा णय।।४।।

उन्माद्यन्तीरभिशोचयन्तीर्मुनिं नग्नं
कृण्वतीर्मोघहासिनम्।
अपूसरसो रघटो याश्चरन्ति
गन्धर्वपत्नीरजशृङ्ग्याशये।।५।।

श्वेतीकृण्वानः पुरुषं विश्वा रूपाणि *बोभुवत्।
ग-छ शौ.११ श्वेवैकं कपिरिवैकं कुमारः सर्वकेशकः।
प्रियो दृशे भूत्वा गन्धर्वः सचते स्त्रियं
तमितो नाशयामसि।।६।।

---

३ का. * * * शतपृष्टीरयस्मै।
नाभिर्गन्धर्वानभेद्या अवकाशात्वार्षतः z३z
द्र. ख अयस्मयीः इति शोधः कल्प्यः।
घ उ. . . . वियृषतु।।
४ कख का. अवकाशं * मिश्छि भ्यां(→घा)तयमानकां.
मा. अवकादाङ् अभिषाचो * *।
म. अवकादाङ् * * *
गघ का. * सर्पानोषधे कृ णुतस्वप * यणः z४z
५ का. उन्मादयन्तीवभिशोचयन्तीर्मुनिंनग्निं कृणुतीनूमोक्षासिनं.
* * . . . . . . . . . . . . . . . . . . . . रजशृङ्ग्याशे z५z
६ क-च का. द्वेतीकृण्वानिषूपरुषं * * वोभुवत्।
शेवैकं पूर्वकं कुमारस् सर्वकिशिषः।
* * * गन्धर्व सजते स्त्रियं.
६ ङ मा. * हिशे *;
म. * द्रिशे *;

## १२.६

यो वै वशां देवयते पचते वाहुताममा।
मृत्योः स बध्यते पाशे देवानां च यमस्य च।।१।।

दक्षिणां सूर्यामदितिं वदन्ति वशां वाचं
कल्पयन्तः समानीम्।
सप्तऋषयो नि दधुर्वाचमेतां सरस्वती
मृडया कल्पयन्तः।।२।।

इमां वशां वाचमाहुर्वशेति तिस्रो वशा
अतिहिताः सधस्थे।
तासामग्नौ मनसैकां जुहोमि *तां नः स्वाद्वीं
भूतपतिः कृणोतु।।३।।

स्वाद्वीं न एतां सविता कृणोतु स्वाद्वीं न
एतां जनिता पशूनाम्।
जुहुध्यग्ने वयुनानि विद्वांस्तां नः स्वाद्वीं
भूतपतिः कृणोतु।।४।।

---

१ खघ का. पचदे वाहुतावमा।
मृत्यो स्य बद्धयते * * * * * ७z

२ का. 'वदन्ति . . . . वाचमेताम्' * इति भागो भ्रष्टः। मन्त्रान्ते छेदो नास्ति।

२ ख म. 'ल्पयन्तः स-' इति भागो नष्टः।

३ कख का. * वशा . . . . . . . . . . . . . वशातिहता *.
घ का. तान् नस् स्वादीन् * * z८z
उ. तान् * * * *।।

४ कख का. * * यतां * * * * यतां * *
द्र. म. 'सविता * * * एतां' इति नष्टम्। का. क-पाद आवर्तितः।
गघ का. जुहुन्यग्रे . . . . . . . . . भूतपतिष् * z६z
मा. . . . . . . विद्वां ता * * * *।।
म. . . . . . . . . . विद्वांतां * * * *।।

इदं तृतीयं वशिनी वशाशि महिम्ने त्वा
गर्भो अभ्या विवेश।
उशती त्वमुशतो गच्छ+ देवान् +सत्याः सन्तु
यजमानस्य कामाः।।५।।
इयमम्भसा वाजसुतस्तभे गौर्यस्यामिन्द्रो
वरुणस्तित्विषाते+।
नृम्णमनृम्णं सचत इयमागन्* धीरः
पशुर्वीर्यमा विवेश।।६।।
वशा +ससूव स्थविरं विपश्चितं वशा ससूव+
वष्कयं दिविस्पृशन्।
वशा ससूव+ तरुणं विभाजने वशा ससूव*
संजितं धनानाम्।।७।।
यत् प्रोक्षणमपतद्बर्हिषस्परि दक्षिणतो
वेद्या इन्द्रियावत्।
वशा संभूत्याधि गौरमीमेत्तस्याः
पीवो अभवद्वर्मवाससम्।।८।।

५ कख का. * * वशिनीवशासु * ण्व * स्या * z
मा. * * वशनी . . . . . . . ।
गघ का. * त्वमुषतो गश्छ * सद्यास् * * कामः z१०z
मा. * त्वमुशदो गछ * सत्या * * * ।।
म. '-न् सत्याः सन्तु यजमान-' इति नष्टम्।

६ का. इमांभजावाजस्वतेस्तभे जोर्यस्यानिन्द्रो . . . . . . . . स्तद्विशाते
नृमूणां सउह्यमाग धीरष्पशुर्वीर्यमा विवे।

६ कख म. '-मम्भसा . . . . . .स्यामि-' इति नष्टम्। ख उ. . . . स्तित्युषाते।
घ उ. * पशूद्वीर्यमा *।।

७ का. वशांसिस्रव * विपश्यतं वसा तिसूव वस्कयं दिवृस्पृश।
वशासिसूव * * * सिसुच सञ्चितं *.
उ. * ससुव * * * ससुव * *।
* ससुव * * * ससुव * *।।

८ कख का. * . . . मयुतद्बर्हिष्यस्परि चक्षिणतो वेदयावतु.
मा. ख. '-णतो * इन्द्रियावत्।' इति भ्रष्टम्।
म. क-ख '-तद्बर्हिषस्परि दक्षिण-' इति नष्टम्।
गघ का. वर्शा संवृन्त्याअथ गौरमीमे तस्याष्पीनो . . . . . . . z१२z

नमो महिम्न उत चक्षुषे वां वशर्षभो
मनसा तत् कृणोमि।
देवाँ अपीतं पथिभिः शिवेभिर्मा नो हिंसिष्टं
हरसा देव्येन।।६।।

वशामस्कन्ददृषभस्तिष्ठन्तीमधि तन्तुषु।
गर्भं तमद्य को वेद यतिधा सो अकल्पयत्।।१०।।

१२.१०

रूपमेकः पर्यभवद्राजा नामैक उच्यते।
पतीरूपस्यैको रूपं रूपमेकः सुकृत्वनाम्।।१।।

प्रजापतिः परमेष्ठी मृत्युर्विश्वानर[:] स्वः।
सरस्वानस्या यज्ञस्य वशाया अधि जज्ञिरे।।२।।

---

६ कख का. * महिंम्न * * * वशरुषभो * * कृणमि।
गघ का. * अभीतं पथिभिश् . . . . . . . . . .।
मा. देवाङ् अपीहितं * शिवेभि मा * हिंशिष्टं * *।।
म. देवाङ् . . . . . . . . . . . .।।

द्र. दक्षिणतः का. 'नमोमहिम्णः पाठः'।

१० कख का. वशमस्कन्धदृषभस्तिष्ठन्तीमदितिं त्रिषु.
गघ का. * . . . गो * इतिया सोमकल्पतः z
उ. गर्भन् तमद्य * * * * *।।६।।ऋ१०।।

१२.१०.१ ख का. * नामयिक *।
गघ का. प्रती . . . . स्यैकं रूपमेकसूसुकर्तुनष्.

२ कख का. प्रजापतिष् * मृत्युर्वै(→वि)श्वानरस्य.
मा. * * मृत्युविश्वानरस्वः।
गघ का. सरस्वत्यानस्वा * * धि *।
मा. सरस्वानसा * * * यज्ञिरे।।
म. . . . . . . . . . यज्ञिरे।।

यस्य गृह आदायेत वशा देवकृतं हविः।
निधानमस्या एष्यं दुहित्रे पत्यामिव।।३।।

नास्याः सकृदभि तिष्ठेन्नास्य श्लोणा गृहे स्यात्।
वशा कन्येव दुर्मङ्गापचित्याविजानता।।४।।

नैनां रक्षेद् ब्राह्मणेभ्यो नामा वि ग्लापयाति च।
यतीं न प्रत्या वर्तयेद्[+] यस्य गोषु वशा स्यात्।।५।।

नास्या वशमा रुन्धेद् देवा मनुष्या उत।
वशं यदन्वैद्[*] ब्रह्मणा तस्मादेषाभवद्वशा।।६।।

वशं कृण्वाना वशिनीयमागन् पदं कल्याण्यवपश्यमाना।
अनिष्ट्येष्टिमभि जायमाना यज्ञस्य
मात्रामभिकल्पमाना।।७।।

---

३ कख का. * गृहा जायेत * * *.
गघ का. . . . येष्यां दुहित्रो . . . . . . z
मा. . . . . . . . . . एषां . . . . . . . . . ।।

४ का. नास्यात् मकृतप तिष्ठन्नस्य सुता गुहे स्या।
* कंनेव दुन्दंकापरित्या * z

५ क का. नैनामो रक्षे ब्रह्मणेभ्यो ; ख उ. . . . क्लापयेति * ।
गघ का. अतीं न प्रत्यावर्तयद् * * * स्या z
मा. यतीर्नः प्रत्यावर्तये * * * * ।।
म. यतीन्नः प्रत्यावर्त्तये * * * * ।।

६ कख का. . . . . . रुंधति * * तिता .
गघ का. वशी यदन्विये ब्रह्मणां . .देताभरद्वशाः z
उ. * यदन्वै * . . . . . . . . . . . . . . . ।।

७ कख का. * * वशनीयमागं * कल्याण्यपवस्यमानः .
मा. * * वशनीयमागन् . . . . . . . . ।
गघ का. अविष्टमभिजायमाना * . . मभिजल्पमानाः z

इन्द्रवन्तस्ते मरुतस्तुरीयं भेजिरे वशे।
तुरीयमादित्या रुद्रास्तुरीयं वसवो वशे।।८।।

तुरीयभाज आदित्यान् वशायाः कवयो विदुः।
अथास्याः पथ्यैका तनुश्चतस्रश्चक्लृपे दिशः।।९।।

वशा पन्थामन्वपश्यन्नाकपृष्ठं स्वर्विदाम्।
आदित्या [*]एनामन्वायन्नृषयश्च तपस्विनः।।१०।।

## १२.११

पदेपदे कल्पयन्त आदित्याङ्गिरसो यजुः।
*ईडाना अन्वायन्वशां तदैडं सामोच्यते।।१।।

---

८ ख का. तुरेय * *। ८ घ का. वसंवो वशै।
९ का. तुरीयभाजादित्यां वशायाष् * *.
यथास्याः सत्यीका तनुश् चतस्य साक्लपेदश z
म. अन्तिमः पादो नष्टप्रायः।
१० कख का. * वंथामन्वपाश्यं . . . . स्वर्विदा.
मा. . . . . . . . . स्वशिदां।
गघ का. दित्या यनामन्नायंन्नृषयश्च * zz
उ. * एना अन्वायन्नृषयश्चं *।।१०।।ऋ१०।।
१२.११.१ का. * कल्पयन्त् * *.
इडनांन्वायंदशां उदीडं सह मुच्यते z
गघ म. 'ईडाना अन्वायन्व-' इति भागो नष्ट एव। '-ते' इत्यन्तिमश्चाक्षरो नष्टः।
मा. इडाना अन्वायनवशान् . . . . . . . . ।।
म. '. . . . वशान्' इत्येव पाठः आसीदिति प्रतीयते।

वशेडा वशानुमतिर्वशामाहुः सरस्वतीम्।
विराजं मन्यन्ते वशां वाग्वशा पृथिवी वशा।।२।।

वशा देष्ट्री सिनीवाली वशोषा निर्ऋतिर्वशा।
वशायां मृत्युमविशदा मृत्युमविशद् वशा।।३।।

अग्निर्वागुदकं चक्षुर्मनो वातो वशी वशा।
तन्वं को अस्यास्तां वेद ययोदक्रामदेकया।।४।।

यां चक्षुषा मनसा संविदाना हृदा पश्यन्ति कवयो मनीषिणः।
तस्याः प्रजाधिपतिः पशूनां वशा राज्ञा
नांतवेषा सृष्टिः।।५।।

---

२ का. . . . . वशानोमतिर्वशामाहुस् सरस्वती .
* * वृशां वाश्वशा पृथिवी शा z
कख म. 'वशेडा . . . . . . . माहुः स-' इति भागो नष्टः।
३ का. * * * वशोखा . . . . . . . ।
* मन्युरविशतां मन्युमवशद्वशा z
घ मा. * . . . . . . . . . . वशां।।
४ ख-घ म. नष्टोऽयं भागः।
गघ का. तंनं * स्यास्तान् * ययोदक्रामुदेकया z मा. . . . * योदक्रा . . . ।
५ क म. 'यां * मनसा' इति नष्टम्।
क उ. * * * सम्विदाना.
ख का. * पपश्यन्ति * *।
गघ का. तस्याष् प्रजाअधिपतिष् * वश राज्ञानान्तवय सा स्विष्टिः
मा. तस्या . . . . . . . नान्तवेशा शृष्टिः।।
द्र. ५घ < वशा राज्ञी नात्तवे सा सृष्टिः ? तु. शौ. ५.१८.१, पै. ६.१७.१. तत्र ब्रह्मगव्या अनाद्यत्वं कथितम्। 'वशा राज्ञा नात्तवे* *' इति मूलपाठेऽपि तच्छौनकीयमन्त्रोक्तं 'नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे' इति तुलनीयम्।

तु.शौ.१२.४.१८ को वशाया ऊधो वेद क उल्बं च जरायु च।
स्तनानस्याः को वेद क इ तद्वेद यद् दुहे।।६।।

अहमस्या ऊधो वेदाहमुल्बं च जरायु च।
स्ततानस्या अहं वेदाथो तद्वेद यद् दुहे।।७।।

नैनामहं रक्षेयं दद्यामेव स्याश्च मे।
स्तना ह्यस्या अहं वेद क्षीरमुल्बं च जरायु च।।८।।

कृत्तिर्योनिरधिवासो जरायु पाण्डमुल्बं+ नाभिरुष्णीषमस्याः।
आ जरसं धयतु मातरं वशी ब्रह्मभिः क्लृप्तः स
ह्यस्य बन्धुः।।९।।

इति प्रथमोनुवाकः

---

६ कख का. * वशाय तधो * * * * * जा.
मा. * * रधो * * उल्वञ् च * *।
म. . . . . . . . . . . उल्वञ् च।
गघ का. तदातस्याः * * * रोतु तवेद इद् वहे z

७ का. . . . . . . . उदो वेदा अहमुल्वं * जः.
उदानस्याहं वेदा अधो तुवेद इहद्वहे z

द्र. खग म. '-रायु च। स्तनानस्या अहं वे-' इति भागो नष्टः।
खग उ. - मुल्वञ्च * *।

८ का. नैनामो रक्षेहं त्वद्यामिवस्याश्च मे तदानस्याहं वेद क्षीरमुल्वं जरायु जः z
घ उ. क्षीरमुल्वञ्च * *।।

९ कख का. क्रतुर्योनिदधीवासो * पाण्डमुत्वं . . . . . . . शमस्याम ;
मा. कृतिर्योनि . . . . . . . . * पाण्डुमल्वं . . . . . . . ।
म. . . . . . . . . . . . पाण्डुमुलूवं . . . . . . . . ।
गघ का. जरमं दहेतु * * व्रह्मभिष् क्लृप्तस् . . . . . . . . zz z
इत्यथर्वणिपैप्पलादयाश् शाखायां त्रयोदशाकाण्डस् ससमाप्ताः zz zz
प्रथमानुवाकः zz उ. नास्त्यनुवाकसूचनम्।

## १२.१२

ऋ.१.३२.१-१० इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्
पर्वतानाम्।।१।।

*अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं +ततक्ष।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्र-
मव जग्मुरापः।।२।।

वृषायमाणो [ऽ]वृणीत सोमं त्रिकद्रुकेष्वपिबत् सुतस्य।
आ सायकं मघवादत्त वज्रमहन्नेनं+
प्रथमजामहीनाम्।।३।।

यदिन्द्राहन् प्रथमजामहीनामान् मायिनाममिनाः प्रोत मायाः।
आत् सूर्यं जनयन् द्यामुषासं तादीला शत्रुं न
किला विवित्से।।४।।

---

काण्डिकादौ का. अथ चतुर्दशा लिख्यते zz औं नमो नारायणाय औं . . . .

१ गघ का. अहंन हीमन्वपहस्तुतर्दष् प्र वक्षमाणा * * z

२ कख का. अहंनहिं पर्वत शिश्रियाणां . . . . . . . . . . . . उतक्ष.
मा. अहंनहि * * . . . . . . . . . . स्वर्जं तदक्ष।
म. अहंनहिं * * . . . . . . . . . . तदक्ष।
गघ का. अवास्रा * * स्यन्दमानांजः . . . . . . . . . .

३ कख का. * वृणीम . . . . . . . . . . .।
गघ का. * मायकं मघवाऋत्त वज्रमहंनहीनं . . . . . . . . . . . .z
उ. . . . . . . . . . . . . वजमहंनेनं . . . . . . . . .।।

४ का. यदिन्द्राहं . . . . . . . मात् मयिनाममिनाष्प्रत * * स्वर्यं *
त्यामुषासं तावेत्रा * * * यवृश्च।
क मा. . . . . . . . . . नामन्;
गघ उ. * * जनयं द्यामुषासन् * शत्रूं नि (मा.न) * *।।

अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।
स्कन्धांसीव कुलिशेना विवृकुणाहिः शयदुपपृक्
पृथिव्याः।।५।।

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्।
नातारीदस्य समृतिं +वधानां सं रुजानाः पिपिष
इन्द्रशत्रुः।।६।।

अपादहस्तो +अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान।
वृष्णो वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो
अशयद् व्यस्तः।।७।।

नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद्वृत्रो महिना पर्यतिष्ठत् तासामहिः
पत्सुतःशीर्बभूव।।८।।

---

५ का. अहं * वृत्रतुर्यं सुमिन्द्रो * * *। . . . शयतं उपसृक् * z
क मा. अह्ंन् * * * ;
गघ मा. स्कन्धासीव * विवृक्ताऽहि * * * ।।
म. स्कन्दांशी (→न्धासी)व * विवृकुणा (→क्ता) हिः * * ।।

६ का. योध्येव * * * जिह्वे * . . . . . मृजीशं . . . . . . सुमतिं
वसानां * रराणा पिपिश * ;
कख म. नष्टम्।
ग उ. . . . . . . . * वधानाः;

७ का. * अपुनन्त्र इन्द्रमहस्य * * शानो जप्यानः धृष्णो * * वुभूषन्
पुत्रा * * * ;
क उ. * अपृतन्वदिन्द्र -;
ग मा. * वधिः * वभुषन्; म. * * वुभुषन्;

८ क का. * * भिंनममुना * .
मा. नदन् * भिन्नमुया * .
म. नदन् * . . . . . . . .
गघ का. याश्चिवृत्त्रो * पर्यतिष्ठन् तासामहिषृ प्रच्युतः शीशीन्वभूव।

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसीद् दानुः शये
सहवत्सा न धेनुः।।९।।
अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम
आशयदिन्द्रशत्रुः।।१०।।

१२.१३

ऋ.१.३२.११-१५ दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ
अप तद् ववार।।१।।
+अश्व्यो वारो अभवस्तदिन्द्र सृके यत् त्वा
*प्रत्यहन् देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे
सप्त सिन्धून्।।२।।

---

९ कख म. प्रथमः पादो नष्टः।
का. . . . . . . . . अस्या अरवद्जभार।
गघ का. उउत्तारा . . . . . . . . . दानुश्श्रये महवत्सा * * .
उ * सुरधरः * * * * * * * ।।

१० का. आतिष्ठन्तीनमव्रुवेशनानां काष्ठारां * * * .
गघ उ. . . . . . . . . . . . दीर्घन् . . . . ।। १२।।ऋ१०।।
म. अयमर्धः नष्ट एव।

१२.१३.१ क का. दासस . . . . . . . . . अतिष्ठं . . . . . . .
म. 'दासप-' इत्यंशो नष्टः।
घ का. . . जघन्वां अप उद् ववार z
उ. . . जघन्वाङ् * * *।।

२ कख का. अश्वयो * भगस्तुरिन्द्रश् श्रुके य * प्रत्यहं * * .
उ. अश्वो . . . . . . . . . . . . . य * प्रत्यहं * * ।
गघ का. * गामजयशूछुर सोमघवासृजत् सप्तवे * * .
मा. * * * शूरः . . . . . . . . . ।।
म. अन्तिमः पादो नष्टः। तृतीयश्चांशतः।

नास्मै विद्युन् न तन्यतुः सिषेध⁺ न याम्यहमकिरद्-
ध्रादुनिं⁺ च।
इन्द्रश्च यद् युयुधाते अहिश्चोतापरीभ्यो
मघवा वि जिग्ये।।३।।

अहेर्यातारं कमपश्य इन्द्र हृदि यत् ते जघ्नुषो भीरगच्छत्⁺।
नव च यन्* नवतिं च स्रवन्तीः श्येनो न भीतो
अतरो रजांसि।।४।।

इन्द्रो ⁺यातो [ऽ]वसितस्य राजा ⁺शमस्य च
शृङ्गिणो वज्रबाहुः।
सेदु राजा क्षयति चर्षणीनामरान् न नेमिः परि
ता बभूव।।५।।

---

३ कख का. . . . . . . . . . मिषेधं न याम्यामिकृ ध्राजिनं च।
मा. . . . . . . . . तन्वतुः शिषेध न याम्यहमकिरद्रादु किञ्चन।
म. . . . . . . . . . . . शिषेध न याम्यहमकिरद्रादुनिञ्च।
गघ का. इन्द्रश्चेद्विधाते अहिश्चोता पर्वतीभ्यो * * जज्ञे।
मा. . . . . अहिशोतापरीभ्यो * * * ।।
३ख 'न यां मिहमकिरदि'त्यादिः ऋग्वेदीयः पाठ एव पैप्पलाद-
हस्तलेखेषु विकृतिं गत इति प्रतीयते।

४ कख का. अहे यतारं क्रमपश्य इन्द्र इन्द्रि * * जघ्नुशो भोरगश्छत्।
मा. अहेर्यतारं . . . . . . . . . . . . . भीरगछत्।
म. . . . . . . . . . . भीरगछत्।
गघ का. * * यं * * स्रवन्ती च्योनो * * * * ।
मा. * * यं * * * श्योनो * * * * ।।
म. ' * * यं * * * * * भी' इत्यतो नष्टो मन्त्रः।

५ कख का. यतोवशितस्य * श्रमस्य * शृङ्गिनो * ।
उ. * जातो वसितस्य * समस्य * * * ।
गघ का. श्रयति * * चर्षणीनांमलां न लेमिषू पलिता * zz
मा. . . . . . क्षयतिशू . . . . . . . . . . ।।१३।।ऋ५।।

## १२.१४

ऋ.२.१२.१-१० यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना
स जनास इन्द्रः।।१।।

यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान्
प्रकुपिताँ अरम्णात्।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्
स [जनास इन्द्रः]।।२।।

यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा
[+]उदाजदपधा वलस्य।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु
स [जनास इन्द्रः]।।३।।

१क का. ओँ यो . . . ; द्र. अतश्चतस्रः काण्डिका अङ्कितस्वराः।
१ कख मा. * * * * मनस्वां * देवान * * ।
म. * * * * मनस्वां * * * * ।
गघ का. * * . . . . . . . . . . अभ्यसेता * * * * .
२ कख का. यष् पृथिवी वन्यतमांनामदृंहद्यष्पर्वतान्प्रकुप्तौँ अरिक्णां.
मा. * * . . . . . महहद् य * प्रकुपिताङ् अरिमृणात्।
म. * * . . . . . . प्रकुपिताङ् अ(र→)रिमृणात्।
गघ का. * * * * * यामस्तभ्रात् * ।
मा. * * * * ये . . . . . . . . . ।।
३ कख का. योत्वाहिमृणात् स सिन्धून् यो गायुधाजनपदावदस्य.
मा. * हत्वाहिमरिणा * * * * उदायदपधा (= उ.) * ।
गघ का. * ष्मनोरन्तरग्निं * संवृभामत्सु * ।
द्र. का. सर्वत्र स्वरचिह्नानि यथा ऋग्वेदे तथैव। ३घ भा इति 'क्ष' इत्यस्य लेखविकारः < संवृक्षमत्सु ?

येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।
श्वघ्नीव यो *जिगीवाँल्लक्षमाददर्यः
पुष्टानि स [**]॥४॥

यं स्मा पृच्छन्ति* कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम्।
सो अर्यः पुष्टीर्विज इवा मिनाति *श्रदस्मै
धत्त स [**]॥५॥

यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो
नाधमानस्य कीरेः।
युक्तग्राव्णो यो [ऽ] विता सुशिप्रः सुतसोमस्य
स [**]॥६॥

यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य
विश्वे रथासः।
यः सूर्यं य उषसं जजान यो अपां
नेता स [**]॥७॥

---

४ ख का. ** वर्णमुदरं . . .
मा. ** बर्ण्णमधरं . . .। म. ** वर्ण्णमधरं . . .।
गघ का. स्यघ्नीव * जिगीवां लक्ष्म्यादधिर्यः पुष्ट्यानि * .
मा. श्वघ्नीव * जिगीवाल् लयमाददर्यः ** ॥
म. . . . . . जिगीवाल् . . . . . . . ॥

५ कख का. यो स्मा पृश्छंति * . . . घोरंमुतेमाहुन् नेषो . . . .
मा. ** पृछन्ति . . . . . . अस्तित्येनं।
म. ** पृछन्ति . . . . . .।
गघ का. सूर्यः पृष्टीर्ध्रज इमा * श्रद्धस्मै धत्त सन्द्रः.
उ. ** . . . . . . स्रदस्मै . . . . . ॥

६ कख का. **** कृष्यस्य * व्रह्मणो नादमानस्य * .
मा. . . . . . . . . . कृषस्य . . . . . . . . .।
गघ का. . . . . सुशिप्रा मुतसोमनस्यमानः (उपरि 'सन्द्रः')

७ का. यस्यश्वासष् ******* रपासः
यस् ***** अपा * सः
मा. यस्य श्वासः

यं क्रन्दसी संयती विह्वयेते परे [ऽ]वर उभया अमित्राः।
समानं चिद् रथमातस्थिवांसा नाना हवेते
स [**]॥८॥

यस्मान् नर्ते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्
स [**]॥९॥

यः शश्वतो मह्येनो दधानानबुध्यमानान् सर्वा जघान।
यः *शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता
स [जनास इन्द्रः]॥१०॥

१२.१५

ऋ.२.१२.११ यः शम्बरं पर्वतेषु क्षियन्तं *चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं
स [**]॥१॥

---

८ का. **** परि वर **** .... सन्द्रः

९ कख का. यस्मानन्ते *** युद्ध्यमाना * हस्न्ते।
मा. यस्मानर्ते ****** ।
गघ का. *** बभूषं * च्यतच्यत् संः [ ** ]।
मा. ***** अच्युदच्युत् सः [ ** ]॥

१० का. यस्यश्रुतो मह्येनोद्रः (→दा)। धानानवुद्ध्यमानान् सर्वाञ्जघान
यः श्रद्धते नानुददाति श्रुद्ध्यां यो दस्यो हन्ता सस्सन्द्र।
क म. 'शश्वतो मह्ये' इति नष्टम्।
खग उ. - न्नवुध्यमानान् ** । * श्रद्धते ....;
द्र. १० ग हस्तलेखेषु श्रद्ध←शर्ध इति प्रायिकत्वात् मूले अदृष्टेऽपि 'शर्धते' शब्द एव 'श्रद्धते' इत्येतस्य वर्जनेन गृहीतः।

१२.१५.१ कख का. यश् *** चत्वारिश्या शरभ्यन्वयिन्दन्।
उ. .... चत्वारिंश्या ... ।
गघ का. गोजायमानो योहिं * दानं * सान्द्रः ;
म. शयानमित्यतो नष्टम्।

शौ. २०.३४.१२ यः शम्बरं पर्यचरच्छचीभिर्यो वा वृकस्य नापिबत् सुतम्।
अन्तर्गिरौ यजमानं वहुं जनं यस्तंनासुरुक्षु स [**]।।२।।

ऋ. १२ यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून्।
यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं
स [**]।।३।।

१३ द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः
स [**]।।४।।

१४ यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः

---

२ का. यश् * पर्यचरक्षश्छचीभिर्यो * कृकस्य वापिबत् *
**** यस्मिन्नासौरुचक्षत् सः;
मा. ** पर्यचच्छचीभिर्यो ..... अन्तगिरौ ... सु → स्वरुक्षु
... ।।
म. अंशतो नष्टम्। द्र. घ < यस्तन्वा स्वरुक्षत् ?

३ कख का. यस् ....... नवसृजत् सर्ववे **.
मा. ....... सिन्दून्।
गघ का. * रोहिणमस्फुरद् ..... मारोहन्त्वाञ्ज सः.
म. '-द् वज्रबाहुर्द्यामा-' इत्यंशो नष्टः।
मा. * रौहिणममस्फुरद् .......।।

४ का. * चतस्मै * वसेते। शुष्मश्चिदस्य * भयंते * सोमका निजितो
वज्रबाहु यो वज्रहस्तस् स इन्द्रः.
गघ मा. *** वज्रबाहु यो वज्रहस्त सः।।
म. *** ..... वज्रहस्त सः।।

५ कख का. यस् सुन्वन्तिमवति य पचन्तं यश् शंवत * ........।
मा. ................. * समानमूती।
म. * शसमानमूती।
गघ का. * ब्रह्म *** यस्यदं राधस् * जनसूस *;

स जनास इन्द्रः। ।५। ।

१५　यः सुन्वते पचते दुध्र आ चिद् वाजं दर्दर्षि
स किलासि सत्यः।
*वयं त इन्द्र विश्वह प्रियासः सुवीरासो
विदथमा वदेम। ।६। ।

शौ. २०.३४.१६　जातो व्यख्यत् पित्रोरुपस्थे भुवो न वेद जनितुः परस्य।
तविष्यमाणो न्वोजो अख्यद् व्रता देवानां
स जनास इन्द्रः। ।७। ।

शौ. १७　यः सोमकामो हर्यश्व आसु यस्माद्रेजन्ते भुवनानि विश्वा।
यो जघान शम्बरं यश्च शुष्णं य एकवीरः
स जनास इन्द्रः। ।८। ।

१२.१६ (शौ.१६.१०)

*शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या।

---

६　कख　का. यस् * * दुध्रा * * वाचं * सु किलासु *
उ. * * * * * जिद् . . . . . . . . . . . . . ।
गघ　का. ह्यन्त * विशंत * * विदघसा विदेम.
उ. वयन्त . . . . . . . . . । ।

७　कख　का. * व्यक्षत् पुत्रोरुपस्थे * * * जनितः। परस्या.
मा. * व्यश्यत् . . . . . . * * * * * ।
गघ　का. भविष्यमाणो ह्योजो क्षद् * * * * इन्द्र.
ग　मा. * . . . . अश्य.

८　कख　का. * z * हर्यस्य शुर्यस्माद्रेजंते भुवनाने * .
मा. * * * * यस्माद्रजन्ते * * ।
गघ　का. ययो जघांन * . . * * एकवीरस् स जनास्स इन्द्रयः z१z

१२.१६.१　कख　का. शन् * * भवतासवोभिः * * * * .
उ. शन् * * . . . . . . . . . शन् * * * ।
गघ　का. . . . . . . सोमाय * * * . . . वाजस्यती z
मा. . . . . . . . . . . . . . * * यो शन् * * * । ।
द्र. उ. सर्वत्र 'शन्'।

शमिन्द्रासोमा सविताय शं योः शं न इन्द्रापूषणा
वाजसातौ । ।१ । ।
*शं नो भगः शमु नः शंसो अस्तु शं नः पुरुन्धिः शमु
सन्तु रायः ।
*शं नः सत्यस्य सूयमस्य शंसः शं नो अर्यमा
पुरुजातो अस्तु । ।२ । ।

शं नो धाता शमु धर्ता नो अस्तु शं न उरूची
भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां
सुहवानि सन्तु । ।३ । ।

शं नो अग्निर्ज्योतिरनीको अस्तु शं मित्रावरुणावश्विना
शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि
वातु वातः । ।४ । ।

---

२ का. खग पादौ भ्रष्टौ ।
क का. * * भगस् समु नश् शंसोमस्तु.
कख मा. शन् * * * * * * शन् * पुरुन्धि . . ।
म. शन् . . . . . . . शन् . . . . . . ।
गघ मा. शन् * * * * शन् नोऽर्यमा पुरजातो * । ।
म. शन् * * * * शन् * * * * । ।
३ कख का. श नो * . . . . . . . . शन् न ऊरूची * * .
मा. शन्. . . . . . . . अस्तु । शन् * * * * ।
म. शन् . . . . . . . शन् . . . . . ।
गघ उ. * * * शन् * * शन् . . . । ।
४ ख का. श नो मित्रावरुणां अश्विना शं.
कख मा. शन्नो अग्निज्योतिरनीको *. . . . . . . ।
म. शन्नो . . . . . . . . . . . . . . . ।
गघ का. * न्नस् * * संतु * * * * * वात्.
मा. श * * * * शन् * * * * * । ।
म. शन् * * * शन्तु शन् * * * * * । ।

शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसः
पतिरस्तु जिष्णुः।।५।।

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा
ग्नाभिरिह शृणोतु।।६।।

शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु
सन्तु यज्ञाः।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः
शम्वस्तु वेदिः।।७।।

शं नः सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः

---

५　　का. * * * पूर्वहुतौ . . . . . . . . . . शंओषधीर्वनिनो * . . . . .
उ. 'शं' इत्यत्र 'शन्' नकारे परे। एवं सर्वत्र।

६　　का. श * * . . . . . . . . . . . . . . सुशंसश् * नो रुद्रेभिर्जलषश्
श नस्त्वष्टा . . . . . . . .

गघ　मा. शन् * * रुद्रेभिर्जलासः शन् नः स्त्वष्टा . . . . . . . . . .

७ क-ग　का. * नस् * * व्रह्म * नो ग्रावाणश् . . . . यज्ञः * नस्
स्वरूणामुतयो * .

घ　का. नास्ति।

कख　मा. . . . शन् न शन् * * . . शन्तु *।

८　　का. क नास्ति अयं पादः। उ. अस्मिन् मन्त्रसमूहे 'शं' इत्यत्र 'शन्'
इति सर्वत्र दृश्यते।

ख　म. शन् * * प्रदिशःश्चतस्रः।

गघ　का. * नष् * * * * नस् सिन्धवश् शमु मन्त्वपः.
मा. शन्न पर्वताद्ध्रुवयो * . . . . . . . . . . . ।। म. शन् *
पर्वताद्ध्रुवयो . . .।।

शमु सन्त्वापः।।८।।

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं
शम्वस्तु वायुः।।९।।

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य
पतिरस्तु शम्भुः।।१०।।

१२.१७ (शौ.१९.११)

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु
सन्तु गावः।
*शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु
पितरो हवेषु।।१।।

*शं नो देवा विश्वदेवा भवन्तु सं सरस्वती सह धीभिरस्तु।

---

९ गघ का. * * * . . . नो अस्तु। * * * शमुवस्तु * .
मा. शन् * * शम * * * शन् . . . . .।।
म. शन् . . . . . . . . . . . . . शन् * भमि(→वि)त्रं . . .।।

१० कख का. शंन् * देवस् * * शंन् * . . . . . . . . विभाती।
मा. . . . . . . . . . विभाती।
गघ का. * नष् * * प्रजाभ्यश् * न क्षेत्चस्य . . . . . . z
मा. * * पर्यन्यो * * * न * . . . . . शम्भुः।।१६।।ऋ१०।।

१२.१७.१ कख का. शंन्नस् * * * * * अर्वन्ताश् . . . . . . .।
म. शन् * * * * शन्नोर्वन्तः . . . . . . .।
गघ का. शन् * ऋभवस् सुकृतस् * * * * * * ।

२ क का. शन् * * विश्वेदेवा * .
गघ का. शमाभिषाचश् . . रातिषाचश् शन् * दिव्याष् पार्थिवाश् * *
आप्याश्।

शमभिषाचः शमु रातिषाचः *शं नो दिव्याः पार्थिवाः
शं नो अप्याः।।२।।

*शं नो अज एकपाद् देवो अस्तु शमहिर्बुध्न्यः शं समुद्रः।
*शं नो +अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु
देवगोपाः।।३।।

आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः+।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये
यज्ञियासः।।४।।

ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः
सदा नः।।५।।

तदस्तु मित्रावरुणा तदग्ने शंयोरस्मभ्यमिदमस्तु शस्तम्।
अशीमहि गातुमुत प्रतिष्ठां नमो दिवे बृहते सादनाय।।६।।

---

३ कख का. शन् * * * * * शन्नोहिर्वुध्न्यश् शे * .
गघ का. शन् नो अपा * . . . . . शं नष् . . . * ;
मा. शन् * अपान् * . . . . . शन् नः पृश्निर्भवतुः देयगोपा।।
म. शन् * अपान् * . . . . . . . . . शन् . . . . .।।

४ कख का. * * * जुषतांविदं ब्रह्म * नवीर्यश्
ख उ. . . . . . . . . . न्ववीयः।
गघ मा. * * * पार्थिवा * * जे * ।।
म. * * * पार्थिवा * * * * ।।

५ क का. * देवानांमृत्विजो *
गघ मा. . . . . . . . . . पातः * * * ।।
म * * रासन्तामृगायमद्य * पातः * * * ।।

६ ख उ. शंयोरश्मभ्यमिदमस्तु * ।
गघ का. . . . . . . . . . . . वृहते साधनाय zz
उ. असीमहि . . . . . . . . . . . ।।१७।।ऋ६।।

१२.१८
(शौ.५.२९)

शौ.४.३९.९ अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः।
तस्मै जुहोमि हविषा घृतेन मा देवानां यूयवद्
भागधेयम्।।१।।

५.२९.१ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि क्रियमाणं यथेदम्।
त्वं भिषग् भेषजस्यापि कर्ता त्वया गामश्वं पुरुषं
सनेम।।२।।

३ख,४ग,२घ तथा त्वमग्ने कृणु जातवेदो [ऽ]नेन विद्वान् हविषा यविष्ठ।
पिशाचो अस्य यतमो जघास यथा सो अस्य
परिधिष्पताति।।३।।

२ यो ऽस्य दिदेव यतमो जघास यथा सो अस्य परिधिष्पताति।
तथा त्वमग्ने कृणु जातवेदो विश्वेभिर्देवैः सह

---

१ क का. . . . . . . . प्रविष्ठा.
घ उ. * * यूयमद् भागधेयं ।।
२ का. युक्तौ वह जातवेदष् परस्तादग्ने * * ययेदं।
त्वं भिषजद् भेषजस्यासि गर्था * ग्रमश्वं * * z
३ ख का. नेन * * यविठः। उ. अनेन * * * ।
गघ का. * स्य तपो दिदेव * * स्य परिधिष्पतातिः
मा. * * जतमो * * * * . . . . . . . . ।।
म. . . . परिधिष्प(→ष्य)ताति।
द्र. म. १[घ] 'यूयमद्' इत्यत्र 'म'-स्याधः 'प' इति शोधः।
४ कख का. * स्य तदेव * जघासि * * मस्य . . . ष्पतातिः .
क मा. * ऽस्या * * * .
घ मा. विश्वेभिर्देवैः सम्विदानः।। म. . . . . . सह सम्विदानः।

संविदानः।।४।।

४ अक्ष्यौ नि विध्य हृदयं नि विध्य जिह्वां नि +तृन्धि
प्र दतः शृणीहि।
पिशाचो अस्य यतमो जघासाग्रे यविष्ठ प्रति तं
शृणीहि।।५।।

५ यदस्य हृतं विहृतं यत् पराभृतमात्मनो जग्धमुत यत्
पिशाचैः।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे प्राणमसुमेरयास्य।।६।।

८ अपां त्वा पाने यतमो ददम्भौदने मन्थे यदि वोत लेहे।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो
[ऽ]यमस्तु।।७।।

७ क्षीरे त्वा मांसे यतमो ददम्भाकृष्टपच्ये अशने धान्ये यः।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो
[ऽ]यमस्तु।।८।।

---

५ का. मोक्षौ न विद्धि * न विद्धि * नृदंधि * दभ * ।
* स्यतमो जघासासाग्रे यविष्ठ्‌ प्रथ तां * ।
खगघ उ. * * तृङ्धि * * *। * * जतमो जघासाग्रे . . .।।
६ का. यभस्य ऋतं यदितं * . . . . . . जगधमुत * *
. . . . . . . . . . . . . . . . . शरीरे प्राणमसिमेरयासं सृजेम z
७ कख का. . . . . . . . . . . . . ददम्भ ओदने * दिव ओत * ।
मा. . . . . . . . . तदम्भौदने . . . . . . . . . .।
म. . . . . . . . . . यातमो तदम्भौदने . . . . . . .।
घ का. व्यातयन्तामगदोयमस्तु z
८ कख का. * * * * ददम्भ आक्लिष्टपाश्ये शतने धान्य * ।
उ. * * * * तदम्भाकृष्टपच्ये * * * ।
घ का. व्यातयन्तामगदोयमस्तु z

९ कख आमे सुपक्वे शवले विपक्वे य इमं पिशाचो अशने ददम्भ।
१० गघ तमिन्द्रो वाजी वज्रेण हन्तु भिनत्तु सोमः शिरो
अस्य धृष्णुः।।९।।

तु.९ कख दिवा त्वा नक्तं यतमो ददम्भ क्रव्याद् यातुः शयने पिशाचः।
तदग्ने विद्वान् प्र दह क्षिणीह्यप्येनं धेहि
निर्ऋतेरुपस्थे।।१०।।

१२.१६

शौ.६.२.६ कखग सोमस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन।
अग्नेर्होत्रेण प्र णुदे पिशाचान् यविष्ठस्य ब्रह्मणा
जातवेदसः।।१।।

शौ.५.२९.१०कख क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेदः सहोभिः।
श्रद्धेमं ब्रह्म जुषतां दक्षिणायुर्यथा जीवात्यगदो
भवाति।।२।।

---

९ कख का. यामे सपक्वे * * इमं * शने दिदम्भः
मा. . . . . . . . . . . . . . . ददम्भः।
गघ का. त्वमिन्द्रो * * यन्तु भनत्व सोमश् * स्तु जिष्णुः
घ मा. भिनक्तु * * * * ।।
१० क का. * * * * दिदम्भष् ;
गघ का. उदग्ने द्वान् पृथक्शृणीह्यप्येनं देहि निर्ऋते उपस्थे।
१२.१६.१-२ का. 'पिशाचान् . . . . . . . . . रुधिरं' इति भागो भ्रष्टः। इयं काण्डिका अत्रस्थायाम् अष्टादशकाण्डिकायां पठिता।
१ग का. . . . . . . . पृणुते ;
२ ख मा. मनोहित्वं * * * । म. मनोहिनं * * * ।
गघ का. श्रद्धेमञ् जुषतां दक्षिणायुर्यथा जीवन्यगदो भवासि zz
मा. . . . . * * दक्षिणायुयथा . . . . . .

शौ.६.५३.२कख पुनस्त्वा प्राणः पुनरैत्वायुः पुनश्चक्षुः पुनरैतु श्रोत्रम्।
१२.२.२८ गघ अपघ्ना नो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम।।३।।

पुनरस्मै मनो धेहि पुनरायुः पुनर्बलम्।
अपानमस्य प्राणं चाग्ने वर्धय जीवसे।।४।।

चक्षुः सूर्य पुनर्देहि वात प्राणं समीरय।
शरीरमस्य मांसान्यग्ने सं भारया त्वम्।।५।।

५.२९.१२ समा भर जातवेदो यज्जग्धं यत् पराभृतम्।
गात्राण्यस्य कल्पय पुनरा प्यायतामयम्।।६।।

१३ सोमस्येव जातवेदो अंशुरा प्यायतामयम्।
अग्ने विरप्सिनं मेध्यमयक्ष्मं कृणु जीवसे।।७।।

पै.६.१८.१ सं मा सिञ्चन्तु मरुतः सं पूषा सं बृहस्पतिः।
सं मायमग्निः सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।८।

---

३ क का. . . . . . . पुनर इत्यायुष्
गघ का. अपघ्ना नो * * * * सर्ववीरो मदेम z द्र. < अपघ्न्या . . . ?

४ गघ का. अपांनमस्यष् * चाग्नय * * ।

५ का. चक्षुस् * . . . . . . वातष् * समीरयश्
शरीरिमस्य मांसन्यग्ने सम्भावया त्वं z

६ गघ का. . . . . . . . कल्पय तामयं।
मा. गात्रान्यस्य . . . . . . . . . . ।।

७ कख का. नास्त्ययं मन्त्रभागः।

८ का. सं मा सिञ्चतु मरुत इत्येका z
उ. सम्मा सिञ्चन्तु मरुत इत्येका।।

कौ.६.११ वि मुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम्।
सर्वा देवानां जनिमानि विद्वान् यथाभागं
वहतु हव्यमग्निः।।९।।

ये पुमांसो यातुधाना या स्त्रियो यातुधान्यः।
बलवदिन्द्रस्य वज्रेणावाचीनानव हन्मि तान्।।१०।।

१२.२०

यं शपामो य उ नः शपाति यं द्विष्मो य उ द्वेषत् पिशाचः।
क्रव्यादमग्ने महता वधेन तमत्रापि प्र दह जातवेदः।।१।।

य आरेभे यस्य वा घास्यप्सरा यः कृण्वेन संविदो
यातुमावान्।
उलूकयातुं भृमलो यस्य यातुस्त[मत्रापि * * *]।।२।।

---

९ ख का. . . होतारसजरं रयस्पृतं।
मा, कौ. ६.११ . . . रथस्मृतं।
गघ का. * देवानं * * * * व्यमग्निः ;

१० का. * * यातुधानां . . . वज्रेणावाचीनानुव
ह्वयतां zz ओँ अवाचीनानुव ह्वयतां zz उ. मन्त्रान्ते अलंकरणम्।

१२.२०.१ का. ओँ यं शपो यो निश् * * * यो * पिशाचष् क्रव्याधमग्ने * *
. . . . . . . * दहाज् जातवेदाः z ख मा. * दिष्मो . . . . . .।

२ का. आरेभेस्य * . . . . . युष् कण्वेन संविदे यातुमावां उलूकयातु
भ्रमलो * यातुस्त्वं;
ख म. * * सम्विदो * ।

य आददे यस्य वाघांसि पित्र्यास्तेन श्वयातुरुत
संभिधेहिभिः।।
यः पताद्रोधनस्याधिदेवनं क्रव्यात् पिशाचः
क्रविषस्तितृपूसन्।
उलूकयातुं भृमलो यस्य यातुस्तम[त्रापि .....]।।३।।

यः पुरुषेणेयते रथेन क्रव्याद् यातुः पिशुनः पिशाचः।
वैश्वानरेण सयुजा सूर्येण त[मत्रापि .......]।।४।।

यो नो वलिं मृगयां यश्च नः कृषिं परितिष्ठाद्
यातुभिर्यश्च नः शपात्।
अस्ता रुद्रः +श्रथत्वायुरस्य
त[मत्रापि ** जातवेदः]।।५।।

मा यातुमान् विदत+ मृडितारमलोका अस्मै प्रदिशो भवन्तु।
समेनं तपतां रोदसी उभे तमत्रापि प्र दह जातवेदः।।६।।

---

३　　का. या निदेसि वाघांसि पित्यास्तेन श्रयाहि। रुत मंहिधेहिभिः यष्प्रपाद्रोधनस्यादिदेवनं * पिशाच क्रविशस्तुतृपूसं * भ्रमलो * यातुस्त्वम् z ख उ. . . . तुरुतु * ।।

ग　म. * पताद्रौध . . . . . .; घ मा. * * क्रविशस्ति . . . ।

४　　का. यष्पौरेणेत * * यातष्पिशुनष्पिशुनष्पिशुनष् * * संयुजा * z

ख　मा. * * पिशुन * ।

५　　का. मो * वनिं * . . नष् * प्रतिष्ठाद् . . . . . . नश् शफद्धस्ता रुद्रस् सरथ त्वायुनस्यतां z

क　उ. * * वळिं * . . .; ख मा. * . . . नः शपान्।

ग　उ. * * श्रधत्वायुरस्य तं।।

६　कख　का. वा शातुमा वृत्रत मृडतारमलोका स्मै * * ।
उ. * यातुमान्विदित . . . . . . . .।

गघ　का. सनेमं * * * . . . . . प्र दहाजूजातवेदः।

आप. श्रौ.४.६.४ ज्योतिष्मतीस्तपना याश्च रोचना प्रत्योषन्तीस्तान्वो
यास्ते अग्ने।
ताभिर्मे मर्माण्यभितो ददस्व मा त्वा दभन् यातुधाना
नृचक्षः।।७।।

अपो देवीः पिशाचानामप +नह्यन्त्वास्यम्।
यथेमं ममात्मानमनाधृष्य पुनः पतान्।।८।।

सदं पुष्पे सदं फले सदमिन्द्राभिरक्षिते।
घ पै.१०.१२.९घ सदा पिशाचा म्रियन्तां मैषामुच्छेषि+ कश्चन।।९।।

ये पतन्तो यातुधाना दिवानक्तमुपाचरान्।
रात्री मा तेभ्यो रक्षत्वह्न आत्मानं परि ददे।।१०।।

---

७ कख का. . . . . तीस्ततभ्ना यास लोचना प्रत्योषांतीस्तंनो . . . . .
मा. ज्योती(← ति)ष्मतीस्तपना . . . . . . . . ।
गघ का. . . . नुदस्व मा सा * * * ; म. . . . व(→म)र्माण्यभितो
. . . ।।

८ कख का. * दिवीष् पशाचानामप निष्यन्त्वास्यं
उ. * * . . . . . नज्यंत्वास्यं।
गघ का. यथेयमं समात्मनमनधृष्य पुनष् पथा

९ कख का. . . . भिरक्षतं। मा. * * मंदं * . . . ।
गघ का. * पिशाचान् मियन्तांम्हिषामुत्सेषि . . . z
उ. * * * मैषामुछेषि (मा. पि) . . . . ।।

१० का. * * यातुधानां * . . . . . . . . . मुपाचरां
रात्रे * * रक्षत्वह्नात्मानं * * z

द्र. ३यमन्त्रार्ध उलूकादेरावृत्तौ ११ मन्त्राः स्युः !

१२.२१.
(शौ.१६.२८)

इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे।
दर्भं सपत्नजम्भनं द्विषतस्तपनं हृदः।।१।।

द्विषतस्तापयन् हृदः शत्रूणां तापयन् मनः।
दुर्हार्दः सर्वांस्त्वं दर्भ घर्म इवाभीत् सुतापयन्।।२।।

घर्म इवाभितपन् दर्भ द्विषतो नितपन् मणे।
हृदः सपत्नानां भिन्धीन्द्र इव विरुजं वलम्।।३।।

भिन्धि दर्भ सपत्नानां हृदयं द्विषतां मणे।
उद्यं त्वचमिव भूम्याः शिर एषां वि पातय।।४।।

---

१ खग का. * वर्चसे। दर्भं सपत्नजम्भनं.
मा. दीर्घायत्वाय * । * * .

२ क का. नास्त्ययं पादः।
खगघ का. शत्तृणां तापयं * द्रुहान्दस् . . . . . . धर्मैवाभीत् सतापयं z
ख उ. शत्रूणान् * * ।
ग मा. * सर्वास्त्वं दभि

३ कख का. घर्मैयाभितपंत * * निचशन् *
मा. * इवाभीतपं दभि * * * ।
गघ का. हृदिः * भिन्धीरिन्द्रैव विवृजं * z
मा. * * भिन्थी इन्द्र * * * ।।

४ कख का. * * सपत्नानं * * * ।
मा. * * * * द्विषतान् * ।
गघ का. . . . . . . . भूम्यां श्रयेषां * पातयः z
म. . . . भूम्या * * * * ।।

भिन्धि दर्भ सपत्नान् मे भिन्धि मे पृतनायतः।
भिन्धि मे *सर्वान् दुर्हार्दो भिन्धि मे द्विषतो मणे।।५।।

छिन्धि दर्भ सपत्नान् मे छिन्धि मे पृतनायतः।
छिन्धि मे सर्वान् दुर्हार्दः छिन्धि मे द्विषतो मणे।।६।।

वृश्च दर्भ सपत्नान् मे वृश्च मे पृतनायतः।
वृश्च मे सर्वान् दुर्हार्दो वृश्च मे [द्विषतो मणे]।।७।।

कृन्त दर्भ सपत्नान् मे कृन्त मे पृतनायतः।
कृन्त मे सर्वान्* दुर्हार्दः कृन्त मे द्विषतो मणे।।८।।

पिंश दर्भ सपत्नान् मे पिंश मे पृतनायतः।

---

५ का. अयं मन्त्रः षष्ठः।
ग का. * * सर्वा द्रुहान्दः; उ. * * सर्वां * ..

६ का. अयं मन्त्रः पञ्चमः।
खगघ का. छि मे * * * सर्वा द्रुहान्दः छिन्दि * * ।
गघ मा. * * सर्वां दुर्हार्दो * * * * ।।
म. * * सर्वां * छिन्धि मे।।

७ का. अयं मन्त्रो नास्ति।
ग उ. वृश्च मे सर्वां दुर्हार्दो.

८ का. क्लन्त दर्भा * * क्लन्त * * क्लन्त मे सर्वा द्रुहान्दः क्लन्त * * * z
गघ उ. * * सर्वां * * * ।।

द्र. का. अत आरभ्य सर्वत्र 'द्रुहान्दः' इति । उ. अतः सर्वत्र 'सर्वां' इति। १२.२२.७ मन्त्रं यावदन्तिमं पदद्वयं नास्ति। अन्यत्रान्यथानिर्देशितादित्यपि द्रष्टव्यम्।

९ का. * * सपत्ना्न् * पिंश * * * * सर्वन् द्रुहान्दः . . . . z
ग मा. * * सर्वा * ;

पिंश मे सर्वान्* दुर्हार्दः पिंश मे द्विषतो मणे।।६।।

विध्य दर्भ सपत्नान् मे विध्य मे पृतनायतः।
विध्य मे सर्वान् दुर्हार्दो विध्य मे द्विषतो मणे।।१०।।

१२.२२
(शौ.१६.२६,३०)

निक्ष दर्भ सपत्नान् मे निक्ष मे पृतनायतः।
निक्ष मे सर्वान् दुर्हार्दो निक्ष मे द्विषतो मणे।।१।।

तृन्धि दर्भ सपत्नान् मे तृन्धि मे पृतनायतः।
तृन्धि मे सर्वान् दुर्हार्दस्तृन्धि मे द्विषतो मणे।।२।।

भङ्धि दर्भ सपत्नान् मे भङ्धि मे पृतनायतः।
भङ्धि मे सर्वान् दुर्हार्दो भङ्धि मे द्विषतो मणे।।३।।

मृण दर्भ सपत्नान् मे मृण मे पृतनायतः
मृण मे सर्वान् दुर्हार्दो मृण मे द्विषेतो मणे।।४।।

मन्थ दर्भ सपत्नान् मे मन्थ मे पृतनायतः।
मन्थ मे सर्वान् दुर्हार्दो मन्थ मे द्विषतो मणे।।५।।

---

१० क का. विद्धि * सपत्नार् * ; मन्त्रे सर्वत्र 'विद्धि' इति
कख का. . . . न्दि इति शोधः कृतः।
१२.२२.१ क का. * * सपत्ना * ; उ. सर्वत्र 'निक्षि' इति।
२ ग म. * * सर्वा . . .; उ. सवंत्र 'तृङ्धि'।
३ का. भंक्ति * सपत्नार्मे भक्ति * *
भङ्क्ति * सर्वन् द्रुहान्दः भङ्क्ति * * z
ग मा. * सर्वां दुहार्दो;
४ का. 'मृड' इति सर्वत्र। ग मा. मृणण मे सर्वां * ;
५ क का. * दर्मा सपत्ना * ;

पिण्ढि दर्भ सपत्नान् मे पिण्ढि मे पृतनायतः।
पिण्ढि मे सर्वान् दुर्हार्दः पिण्ढि मे द्विषतो मणे।।६।।

ओष दर्भ सपत्नान् मे ओष मे पृतनायतः।
ओष मे सर्वान् दुर्हार्द ओष मे द्विषतो मणे।।७।।

दह दर्भ सपत्नान् मे दह मे पृतनायतः।
दह मे सर्वान् दुर्हार्दो दह मे द्विषतो मणे।।८।।

जहि दर्भ सपत्नान् मे जहि मे पृतनायतः।
जहि मे सर्वान् दुर्हार्दो जहि मे द्विषतो मणे।।९।।

यत्ते दर्भ जरामृत्यू स ते मर्मसु वर्म ते।
तेनेमं वर्मिणं कृत्वा सपत्नान् जहि वीर्यैः।।१०।।

---

६ घ का. पिण्ड्ढि * * * z
गघ मा. पिण्डि * सर्वा * पिण्डि मे।।
७ क का. * * सपत्नार् * ;
ग मा. * * सर्वा दुर्हार्दः;
८ कख का. * दर्भस् सपला * दहसह * * ।
घ मा. * * द्विषतोन्मणे।। म. नास्त्यन्तिमं पदद्वयम्।
९ क का. * * सपत्ला * ;
घ मा. * * द्विषतोन्मणे।।
१० का. . . . . . . . जरामृत्युश् श * सन्मसु मन्म * ।
. . . . . मन्मणि कृत्वा * * वीर्यमाम् z
क-ग मा. . . . . . . . जरामृत्यू * * वर्मसु * * । . . . . . . . वर्मणं *;
ख म. * * वर्मसु वर्म्म * ।
११ खघ का. * * । * त्वमस्मै * * * * * दद्रुः z
क उ. शतन्ते * * ;

शतं ते दर्भ वर्माणि सहस्रं वीर्याणि ते।
तमस्मै विश्वे त्वां देवा जरसे भर्तवा अदुः।।११।।

त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम्।
त्वामिन्द्रस्याहुर्वर्म त्वं राष्ट्राणि रक्षसि।।१२।।

सपत्नक्षयणं दर्भ द्विषतस्तपनं हृदः।
मणिं क्षत्रस्य वर्धनं तनूपानं कृणोमि ते।।१३।।

यत् समुद्रो अभ्यक्रन्दत् पर्जन्यो विद्युता सह।
ततो हिरण्ययो बिन्दुस्ततो दर्भो अजायत।।१४।।

इति द्वितीयोऽनुवाकः

।। पञ्चदशर्चो द्वादशकाण्डः समाप्तः ।।

---

१२ का. त्वामिन्द्राद्देववर्माहुस् त्वां दर्भा ब्राह्मणस्पतिं
त्वामिन्द्रस्याहुर्वर्मा * * सर्वरक्षसि z

१३ का. सपत्नक्षेणं दर्भच . . . . . . . z सनि क्षत्त्रस्य वर्धस्य तनुपानं
* * ।

१४ क का. * * भ्यक्रन्दत्;
गघ म. * * विन्दु (त→) स्ततो * * ।।
काण्डान्ते - का. इति कुशदर्भसूक्तम् zz zz
इत्यथर्वणिकपैप्पलादयशृंखायां त्रयोदशष्
काण्डस् समाप्तः zz zz काण्ड १३ zz zz
उ. २२।।ऋ१४।। अ २।। पञ्चदशर्चकाण्डः।।

# त्रयोदशः काण्डः

## १३.१

घ शौ.४.४०.१घ अन्तर्हितं मे बृहदन्तरिक्षमन्तर्हिताः पर्वता अग्रयो मे।
मैषां राध्यमिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि।।१।।

तपश्श्रमावन्तरौ मत् परीतं ब्रह्मयज्ञावन्तरं मद् दधामि।
[मैषां ....................]।।२।।

अग्नीषोमावन्तरौ मद् भवाथो दिवं वर्म पृथिवीं च कृण्वे।
[मैषां ....................]।।३।।

अन्तर्हितं मे साम प्रस्तुतमन्तर्हितः परमेष्ठी प्रजापतिः।
[मैषां ....................]।।४।।

अन्तर्हिता सर्पराज्ञी विराण् मेऽन्तर्हितः पुरुषो मेध्यो मे।
[मैषां ....................]।।५।।

---

काण्डारम्भे का. अथ त्रयोदशप्रथमध्यायः z ओँ नमो नारायणाय z ओँ नमो महागणपतये z ओँ नमो ज्वालाभगवत्यैः ओँ नमस्तिलोत्तमायै z z ओँ नमस्सूर्याय z z ओँ अन्तर्हितं ......;
उ. ओँ अन्तर्हितं ....।

१ गघ का. महिषां राध्यवचार एषत् प्रत्यकेनां * *।
मा. .... राध्यविचार * प्रत्यणेनान् प्रप्रतिसरण *।।

२ का. तपस्यमावर्तरो; द्रः. अतो मन्त्रो गलितः।
मा. * .......... पचीतं ..... वधमि।।

३ का. 'अग्नीषोमावन्तरौ' इति नास्ति।
घ * * * * कृण्वहे z

४ का. * म माम प्रस्थितम ...... छीष् *।
मा. * * * प्रस्तुतेमन्तर्हितः * *।।

५ का. अन्तर्हितस् सर्पराज्ञे * * अन्तर्हितः * * *;

अन्तर्हिता मे षडुर्वीः सध्रीचीरन्तर्हिताः साध्या आप्त्या मे।
[मैषां . . . . . . . . . . . . . . हन्मि]।।६।।

[अन्तर्हिता] म *ऋषयः प्रचेतसो ऽन्तर्हितः
सूर्यो मातरिश्वा।
[मैषां . . . . . . . . . . . . . . हन्मि]।।७।।

अन्तर्हिता मे नद्यः स्यन्दमाना अन्तर्हिता
ओषधीः पुष्पिणीर्मे।
[मैषां . . . . . . . . . . . . . . हन्मि]।।८।।

अन्तर्हिताः पशवः कक्ष्या मे ऽन्तर्हितं वयो यत् पतत्रि।
[मैषां . . . . . . . . . . . हन्मि]।।९।।

अन्तर्हिता म इषवो ब्राह्मणानामन्तर्हिता
वनस्पतयः समूलाः।
[मैषां . . . . . . . . . . . . . . हन्मि]।।१०।।

१३.२

अन्तर्हिता देवतल्पाः पुरो मे ऽन्तर्हिता जगती †छन्दसां मे।
[मैषां . . . . . . . . . . . . . . हन्मि]।।१।।

---

६ का. अन्तर्हिताः * * सध्रचीरन्तर्हिता * पपता * z

७ का. मर्षयष् प्रचीतसो अन्तर्हितस् * *.
उ. महर्षयः * * * *।।

८ का. * नद्याः स्यन्दमानानन्तर्हिता * . . . . . . . . . . . . .।

९ का. अन्तर्हिताष् पशवष् कक्षा * * * * पतत्त्रि।

१० का. * स * ब्राह्मणानामन्तर्हिता वनस्पतय म्यला z
ख उ. . . . . . . . . . . . . . . . . . . . . समूळाः।।

१३.२.१ का. * देवतल्माष् * * न्तर्हिता * श्छन्दसान् *।
उ. * * * * * * छन्दसां *।।

अन्तर्हिता मे समुद्रा द्वादशा अन्तर्हिता उषसि तारका मे।
[मैषा . . . . . . . . . . . . . . . . हन्मि]।।२।।

अन्तर्हिता अग्नयो धिष्ण्या मे ऽन्तर्हिता ऋतव आर्तवा मे।
[मैषा . . . . . . . . . . . . . . . . हन्मि]।।३।।

अन्तर्हिता मे प्रदिशश्चतस्रो ऽन्तर्भूतमुत
मव्यं दधे ऽहम्।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि।।४।।

तै.ब्रा.२.४.२.२ हन्मि ते [ऽ]हं कृतं हविर्यो मे घोरमचीक्लृपः।
शौ.७.७०.४कख अपाञ्चौ त उभौ बाहू अपि नह्याम्यास्यम्।।५।।

तै.ब्रा.२.४.२.३ अपि नह्यामि ते बाहू अपि नह्याम्यास्यम्।
शौ.५क-घ अग्नेर्देवस्य मन्युना तेन ते [ऽ]वधिषं हवि-
र्यो मे घोरमचीक्लृपः।।६।।

---

२-३ का. २यो मन्त्रस्तृतीयत्वेन ३यश्च २यत्वेन पठितः।
२ का. * * * द्वादशामे त्तर्हिता उषसी * *।
उ. * * * अन्तर्हितौषसि * *।।
३ का. * * धृष्ण्या * अन्तर्हिता ऋतवार्तवा *।
४ का. * * . . . श्चतस्र अन्तर्भूत हव्यं चदेयं
महिषां राध्यवचार एषत् प्रत्यकेनां * *।
ख उ. . . . . . . . . . . . . . . . . . . दधेहं।
गघ मा. . . . . . . . . . . . एषं . . . . . . प्रतिसरण *।।
५ ख का. ये * घोरमचीकृतः। म. * * घोरमची(क्लृपः ←)कृतः।
गघ का. अपांच्यो तौ * * * ष्यास्यास्यं।
उ. अपांचौ * * * * . . . . . . . ।।
६ का. * निष्यासि * * * निह्याम्यस्यास्यं।
. . . . . . . मन्यमाना * * वर्षं . . . . . . घोमरमदीकृतः 2
ङ. म. * * घोरमचीकृतः।

१३.३

उदितः शतयोजनमिन्द्रो वर्तयते रथम् ।
सायकं क्षुरवर्तमानमहेर्जातानि जम्भयन् ।।१।।

दृळ्हास आसन्नहयो हता उदरसर्पिणः ।
+पुच्छमिद्वेष्यायन्त श्वापिण्डमदन्निव ।।२।।

द्र. पै. १.४४.२ पापक पापरूपक किं मे सखायमातुदः ।
न मामपश्य आगतं सतीनं विषदूषणम् ।।३।।

अहिजम्भाश्चरामसि मुष्कावरुहो गवामिव ।
+पीलू उप स्वजं हन्म उपस्तम्भे पृदाक्वम् ।।४।।

---

१ गघ का. * क्षुरवन्तंमानिमहेर्जातानि जम्भय z

२ का. दृढाशेन्त्यायं * उदरसर्पिणाः
प्रश्छसिद्वेष्ट्रायन्तस्स्वापिण्डमदन्युव z

ग उ. पुछमि . . . . . ;

द्र. < पुच्छमुद्वेष्टायन्तः?

३ ख-घ का. * * सखायमातुरा_नमामि पश्याग / तं शची विषदूषणंम् z

द्र. ३ का. महान् प्रमादो लेखककृतो दृश्यते। 'पश्याग' इत्यतः ११.७.१घ 'रपः' इत्यादिकः ११.८.६ 'चक्षुर्विपश्यति' इत्यन्तो भागो निवेशितः। ततः १३.५.१ग 'भद्रा हि नः प्रमतिः' इत्यारभ्यते।
१३.३.३गघ '-तं सतीनं' इत्यादिकः १३.५.१ख 'मनीषया' इत्यन्तश्च अत्र निवेशनीयो भागस्तत्रैवैकादशकाण्डे निवेशितः। अर्थात् मूलहस्तलेखस्य द्वे पत्रे स्वस्थानाद् भ्रष्टे परस्परयोः स्थानयोर्योजिते। भूमिका द्रष्टव्या। ६८६, ७६४ पृष्ठे च।

४ कख का. अहिजम्भश्चरामसि। मुष्कावर्हो . . . . . . ।

गघ का. कीला उपसृजं हर्मि * * z
उ. पिळू * * * * * ।।

ख पै.७.१३.१ख ये के चेदमुपासौषुर्वातस्येव पृथग् यतः।
घ पै.१.४४.४घ अङ्गो नु सर्वे ब्रूताहेयमरसं विषम्।।५।।

त्रिन्धिसि ते निषदनं त्रिपुषि पाप ते गृहः।
+अच्छन्नं त्वा वातो *+हन्त्यच्छन्नमभि वर्षति।।६।।

+नाकुलेन भेषजेन तेनाहीन् जम्भयामसि।
मश्चतुर्नाम वृक्षकः स एनान् अरसान् अकः।।७।।

खद्र.शौ.१०.४.१०ख असिताहेरहं विषमुभयोः शितस्य च।
अभिक्रन्दस्य या रोपीस्ता इतो ऽप नयामसि।।८।।

शौ.१०.४.७कख इदं पैद्वो +अजायतेदमस्य पिपर्तनम्।
इदं कनिक्रदो मृगो विषमेति पराभवन्।।९।।

---

५ का. 'ये के चेलमपाश्वेषुर्वा' इत्यतो मन्त्रो भ्रष्टः।

६ कख का. तृंदमीते निषदलं नृपश्री * * *.
गघ का. अश्छिन्नं * * हंत्वश्छिन्नमभि वर्षतु।
उ. अछन्नं * * हंत्यछन्नमभि *।

७ कख का. आकुलेन * तेनाहीं जभयामसि।
मा. नाकुळेन * तेनाहीन *।
म. नाकुळेन * . . . . . . . . . . .।
गघ का. मश्चेत्तन्नामक्षकः शयनांनरसांअक।

८ का. असिताहरां विषमुभयोस् स्वंजस्य च।
अधिक्रस्य या रोपीस्तायितो वि *।
क मा. असित्ताहेरसं . . . . . . .।

९ कख का. * * अजायेत्तेइदमस्य विवर्तनं।
उ * * जायतेदमस्य *।
गघ का. * * मगो द्विषतेतु परावसम् z

विषूचीना वाता वान्तु विष्वग्वर्षन्तु वृष्टयः।
विष्वग्विष प्र मेह त्वं शतधार इवावटः।।१०।।

१३.४

निरितो हरितस्रजमिन्द्रो वर्तयते रथम्।
तेनापिलिह्र इयते निपिसंनहिनामनः।।१।।

येनेन्द्र दस्यूनमृणोर्येन वृत्रं पराभिनः।
तेना शतक्रतो त्वमहेर्जातानि जम्भय।।२।।

प्रत्यमोदत पृथिवी प्रति द्यौः प्रति सूर्य्यः।
पैद्वो यदश्वमाता क्रन्द्रेनाहीनपावपत्।।३।।

यदा पैद्वोऽश्वमाता क्रन्देनाहीनपावपत्।
रज्जू ष्म दत्वती शेरे पूयन्तीं पृथिवीमनु।।४।।

---

१० कख का. विषूचीनां * वहंतु विश्वग्वर्षन्तु *।
गघ का. विश्वग्यिषप्रमेह * * * . . . . . . . .। ३।।
मा. विश्वग्यिषप्रमेह * * . . . . , ।।३।।ऋ१०।।

१ का. निरतं हरितसृसृजमिन्द्रो * रथं।
गघ का. तेनापिललूहीयते नपीयूषंनहिनापिनः।
म. . . . . . . . . . . निपिंसं नहिनामनः।।
द्र. < तेनाप्लीह्र इयते निपिषन्नहिनाम्नः ?

२ का. . . . . . जस्ययेननृम्णो * * *
* * . . . . . . . . . . जम्भयं z२z

३ कख का. प्रत्यमोदतष् * * * * *.
ग मा. * यदस्वमाता.

४ कख का. पादद्वयं भ्रष्टम्।
गघ का. रज्जुश्चदर्श्वती z शेरे पयन्तीष् . . . . . . . . . z४z
मा. रज्जु * * श्येरे . . . . . . . . . . ।।
म. * * * श्येरे . . . . . . . . . . ।।
द्र. ४ गघ < रज्जूः स्म दत्वतीः शेरे . . . . . . . . ?

नापो जीर्यन्ति नामृतं नेन्द्राणी अविषत्वमभवत् ।
न त्वामस्ते मिषग्विषमश्वानामिव सायकम् ।।५।।

इन्द्राग्नी मित्रावरुणा त्वष्टारमदितिं भगम् ।
हुवे [ऽ]हमर्वन्तं पैद्वं मा मेऽयं पुरुषो रिषत् ।।६।।

सद्यो जातो ऽकनिक्रदत् सोल्वो व्यधूनुत ।
क्रन्देनाश्वस्य वाजिनो [ऽ]हन्यन्ताहयः पृथक् ।।७।।

इति प्रथमोऽनुवाकः ।।

१३.५
(ऋ.१.९४.१-१०)

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा
वयं तव ।।१।।

---

५ का. आपो जीर्यन्ते नामृत मैन्द्राणी . . . . . . . . .
* त्वामस्ते विश्वग्विषमखानभिव * z५z
घ मा. मस्मानमिव *।।

६ क का. * मित्रावरुणस्.
गघ का. ह्वयमर्वंतं * मानयं * विषत्.
उ. . . . . . . . . . . . . रुषत् ।

७ कख का. * * कनिक्रदत् । * व्यधूनतष्.
म. * * * सोल्वोर्व्यधूनुत ।
गघ का. . . . . . . . . हन्यन्त्वाहय * z४zz इत्यथर्वणि
पैपलदयाश् शाखायां एकादशोध्यायस् समाप्तः zz zz

द्र. ६ घ < मा मे [ऽ]यं पुरुषो रिषत् ?
द्र. का. मन्त्रारम्भे "अथ द्वादशोमार्कण्ड अथर्वणध्यायं लिख्यते zz
ओँ नमो नारायणाय zz ओँ इमं . . . . . . . . ;"
१ख ". . . . हेमा सनीकयाष्" इति यावदेकादशकाण्डे प्रमादवशात्
लिखितम् । ६८६, ७६१ पृष्ठे भूमिका च द्रष्टव्याः ।

१ का. ओँ इमं . . . . . . सन्दहेमा सनीकयाष् . . . . . . प्रमतिरस्य
संसमग्रे संख्ये * * * * ।
घ उ. . . . . . . . वयन्तव ।।

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम्।
स तूताव नैनमश्नोत्यंहतिरग्ने [सख्ये .......]।।२।।

भरामेध्मं कृणवामा हवींषि ते चितयन्तः
पर्वणापर्वणा वयम्।
जीवातवे प्रतरं साधया धियो [S]ग्ने [......]।।३।।

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम्।
त्वमादित्याँ आ वह तान् ह्युश्मस्यग्ने [.......]।।४।।

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने [....]।।५।।

दिशां गोपा अस्य चरन्ति जन्तवो द्विपाच्च
यदुत चतुष्पदक्तुभिः।
चित्रः प्रकेत उषसो महाँ अस्यग्ने [.......]।।६।।

---

२ का. * त्वमाहुर्भजसे स आदित्यनर्वान् क्षोत तदते स्तुवीर्यं * भूताव ...... zz
क उ. * त्वमायजससे * *;
३ का. ... जितेअन्तष् * * जीबातव * माधया दयोग्रे z
४ कख का. ससेम त्वं समिदं सादये धियस्ते ........
मा. ........................ हविर्दिदंत्याहुतिं।
म. ........................ हविरिदंत्याहुतं।
गघ का. ........ हव ताध्याक्ष्मस्याग्रे z
मा. त्वमादित्यां * * * ह्युस्मस्यग्रे ।।
म. त्वमादित्यां * * * ... ।।
५ ख का. * पोतार्जनुषा पुरोहिताः
गघ का. * विद्वां आहर्त्विज्यां * पुष्यस्याग्रेः z
उ. * विद्वाङ् * * .........।
६ कख का. * * स्यजरन्तु * द्विपाश्च ........
गघ का. चित्रष् प्रकेतस * महँ अस्याग्रे।
मा. चित्रप्रकेत * महाङ् ...।। म. चित्रप्रकेत * मङअस्यग्रे।।

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्
सन् तड़िदिवाति रोचसे।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने [......]।।७।।

पूर्वो देवा भवतु सुन्वतो रथो [ऽ]स्माकं
शंसो अभ्यस्तु दूढ्यः।
तदा जानीतोत पुष्यता वचो [ऽ]ग्ने [.......]।।८।।

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये
अन्ति वा के चिदत्रिणः।
अथा यज्ञाय गृणते सुगं कृध्यग्ने[........]।।९।।

यदयुकृथा अरुषा रोहिता रथे वातजूता
वृषभस्येव ते रवः।
आदिन्वसि वनिनो धूमकेतुनाग्ने [........]।।१०।।

---

७ कख का. * * * सद्रुहसि * दिश्छन् तलिदिवाशि रोचते।
मा. . . . सं तड़दिवाति *।
म. . . . सं तड़िदिवाति *।
गघ का. रारात्याश्चतन्वो * * पश्यस्याग्ने।

८ कख का. * * * मुष्वतो * स्माकं * अन्यस्तु * * जानीतोउ * वतोग्ने
z .
मा. . . . जानीतो * वचोग्ने।।

९ क का. वधूनुदुःशंसाँ अवि * *;
उ. वधैर्दुःशंसान् * * *.
ग का. अधा * शृणुते * कृष्यग्ने.

१० का. यदुकृथान् पा रोहितो * * ऋषभस्येव * * z
युजिन्वस्ति * . . . . . . . . . .।

## १३.६

## (ऋ.१.९४.११-१६)

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते
यवसादो व्यस्थिरन्।
सुगं तत्ते तावकेभ्यो रथेभ्यो ऽग्ने [सख्ये मा
रिषामा वयं तव]।।१।।

त्वं मित्रस्य वरुणस्य धास्यवयातां मरुतां हेडो अद्भुतः।
मृडा सु नो भूत्वेषां मनः पुनरग्ने [.........]।।२।।

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।
शर्मन्त् स्याम तव सप्रथस्तम [ऽ]ग्ने [.....]।।३।।

तत्ते भद्रं यत् समिद्धः स्वे दमे सोमाहुतो जरसे मृडयत्तमः।
दधासि रत्नं द्रविणं च दाशुषे [ऽ]ग्ने सख्ये
मा रिषामा वयं तव।।४।।

---

१ का. * स्वनाडुत स्विद्युः * ध्रप्सा यते **.
सुग ... तावकेधो * ग्रे z

२ कख का. ** वरुण धयस्यवयातां मरुतं हेलो *
मा. *** धास्यजातां ***।
म. *** धास्यवजाताम्मरुतां **।
गघ मा. *** ..... पुनग्रे।।

३ कख का. देवे ........ अद्भूतो ... सूनाममि चा xx ध्वरे।
मु. 'चारुरध्वरे'। का. 'रुर' इति भ्रष्टम्।
गघ का. शर्मन् *** ग्रे z
मा. ** तमसः प्रथस्तमगे।।
म. ** तमसः प्रथस्तमेग्रे।।

४ क का. 'स्वे दमे' भ्रष्टम्। मु. 'स्वे दमे' न भ्रष्टम्।
ख का. * रजसे मृडयात्तसः.
गघ का. ददासि रत्न *** ग्रेस् सख्ये **** z
उ. ** द्रविणञ् ** ग्रे *** वयन् *।।

यस्मै त्वं सुद्रविणो *ददाशो [ऽ]नागास्त्वमदिते सर्वताता।
यं भद्रेण शवसा चोदयासि प्रजावन्तो
राधसा ते स्याम।।५।।

स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः
पृथिवी उत द्यौः।।६।।

१३.७

किमिन्द्रस्य परिहितं किमग्नेः किं विष्णोस्त्वष्टुर्वरुणस्य वासः।
बृहस्पतेरुत सोमस्य राज्ञः किं वसाना मरुतो
वर्षयन्तु।।१।।

धातूरुद्रस्य किं वायोर्वाजिनां वसनं महत्।
किं पूषा ब्रह्मणस्पतिर्विश्वे देवाश्च बिभ्रति।।२।।

किं देवानां परिधानं समानं यस्मिन्नेषां सांमनस्यं बभूव।
क्व रात्री नि विशते क्वाहः क्वेदमभ्रं भवति यत्
समेति व्येति च।।३।।

---

५ कख का. अस्मै * सोद्रविणे दधासो नागास्सिमदिते सर्वतात.
मा. * * * ददासिसो नागात्स्वमदिते *।
म. * * * ददासिशो नागास्त्वमदिते *।
गघ का. * * शवमा * प्रजावन्तौ राधस्या * * z
६ कख का. * त्वग्ने * विद्वां अस्माकमायुष् * . . .।
मा. . . . विद्वानस्माकमायु . . .।
गघ उ. त्वन्नो . . . ।।६।।ऋ।।
१३.७.१ घ का. * * * वर्षन्तु।।
२ कख का. धातो रुद्रस्य * वायोर्वाजिमा व्रजिनं *।
मा. धातुरुद्रस्य . . . . . . . . . . . . . . . .।
३ कख का. * देवादेवानां * * यस्सिन्नेषां साम्नःसम्बभूव.
गघ का. * राती * * क्वाह . . . . . . . . . येति * z
उ. * * * * . . . क्वेतिमभ्रं * * समेदि * *।।

कतमेनापो दिवमुद्वहन्ति कः समेनोदयनेन नेता।
वातस्य त्वा विद्युतां स्तनयित्नुरपां
+पृच्छाम्ययनान्यग्रेः।।४।।

+पृच्छामि त्वा पृषतीं रोहिणीं च
वत्सं +पृच्छामि सहमातरं त्वा।
इन्द्रं त्वानु +पृच्छामि साक्षात् सभानां च सभापतिम्।।५।।

को वयसामदधान्नामानि कः पशूनां
कः सर्पाणां देवजना य आसन्।
को [ऽ]स्य जन्तोरदधाद् ब्रूहि नस्तत्।।६।।

कति रोहाः स्वरा रोहयन्ति येभी रोहितो दिवमारुरोह।
राष्ट्रभृतः क्षत्रभृतो वसुभृतो वसुदानवो वसुयवः।।७।।

---

४　ख　का. कस्यतदन्नेनेतिनेन नेतां ;
गघ　का. * * विद्यतास्तनयन्नुरपां पृष्छाम्येवान्यग्रे z
मा. * * विद्यूतां स्तनइलुरपां पृछाम्ययनान्यग्रेः।।
म. . . . . . . पृछाम्य . . . . . .।।
५　कख　का. पृश्छामि * पृषतियं * * * पृश्छामि त्वा पृषतियं रोहिणीं च
वत्सं पृश्छामि सहमातरन्ता;
उ. पृछामि * * रोहिणीञ् * * पृछामि * *।
गघ　का. * त्वानि पृश्छामि * * * * z
उ. * . . . . पृछामि . . . . . . . .।।
६　का. * . . . दधांनामानि * * * * * यासं. * * जन्तोरयदा व्रूहि
नस्थत् z
ग　मा. * * . . . . . . घाद्व्रृहि . . . .।।
७　कख　का. * रोहा . . रोहयन्त्येतीरोहितो देवमारुरोह.
मा. * * . . . . . . . येभिरोहितो . . . . . . .।
गघ　का. * * * वसुदीनवो * z
मा. * * * वसुभृतौ *।।

कश्चतुर्धा वि क्रमते महित्वा कं रक्षन्ति कवयो ऽप्रमादम्।
पुरुषं त्वानु +पृच्छामि साक्षान्मृत्योरङ्गानि
कति तानि वेत्थ।।८।।

यं सिषेव वृषभश्चर्षणीनामिन्द्रो वज्रमहिना स्पर्धमानः।
येन वृत्रं मघवा संपिपेश तं नः प्र ब्रूहि
यदि तं प्रवेत्थ।।९।।

कः पर्वतानामदधान्नामानि को वनस्पतीनामदधादोषधीनाम्।
+पृच्छामि त्वा भुवनस्य नाभिं गां त्वा +पृच्छामि
कतमानि साक्षात्।।१०।।

---

८ कख का. कश्चत्तवा * * * को रक्षन्तु कवो प्रसादम्.
मा. कश्चर्द्धातुर्द्धा * * * * रक्षति * *।
गघ का. * त्वानि पृश्छामि साक्षन् . . . . . * * वेत्थः
उ. * . . . पृछामि . . . . . .।।

९ कख का. अहं षिचरुकश्चर्षणीनामिन्द्रो . . . . . . .।
मा. यं शिषेव वृषणभश्चर्षणीनामिन्द्रो . . . . . . . . .।
गघ का. * * * xxx वे तं न * व्रूह्यदि दं प्रवेष.
(मु * * मघवा x पिवे तं न * व्रूह्यदि दं प्र वेष.)
मा. * * * * तन्नः . . . . . . . . . .।।

१० कख का. * . . . . मरिधानामानि * वनस्पxीनामदधाचोषधीनाम् z
(मु. वनस्पतीनाम. . . . . . . .)
गघ का. पृश्छामि * * * शां * पृश्छाम (मु. पृश्छामि) * * z
उ. पृछामि * * * * * पृछामि कतमानु *।।७।।ऋ१०।।

१३.८

देवतल्पा देवकोशाः क्वेह तान्नः प्र ब्रूहि यदि तान् प्रवेत्थ।
+पृच्छामि त्वा गरगिरः कियन्तो येभ्यो ऽग्निर्हव्यं वहति प्रजानन्
हुतं मर्त्यैरमृतोमर्त्येभ्यः।।१।।

स्वप्ने य एकस्तमसा सहैत्यङ्गानि गृह्णन् पुरुषस्य चक्षुः।
स प्रातरेति तमसा पुनः सहाज्योतिरेति क्व सददेति ।।२।।

व्रतपतिमधिपतिं मधुकृता मधुपतिम्।
देवांस्त्वा सर्वान् पृच्छाम्यहुतादश्च ते कति।।३।।

---

१ कख का. * देवकोशा . . तान्न * व्रूह्यदि x प्रवेत्थ (मु. व्रूह्यदिमं प्रवेत्थ)।
मा. देवतल्प * . . . . . . . ।।
गघ का. पृश्छामि * गर्गर किंतो * अग्निर्हव्यं वहतु * z
उ. पृछामि * * * * * * * .
ङ का. x [मु.ह] तं मर्त्यीरमृतो मर्त्येभ्यः z
मा. * मत्यैरमृतोर्मत्येभ्यः।।
२ कख का. खप्नेनेकस्तपसा सहीत्यङ्गनि गृह्णान् पु x षस्य (मु. पुरुषस्य) *.
मा. * * . . . . . . . . . . . . सहैत्यङ्गान * * * ।
गघ का. * प्रातरति तपसा पुनस् सहाज्योति रिति * सृजेति।
उ. * . . . . . . . . . सहायोतिरेति . . . . . . . . ।।
द्र. < सदद्येति ?
३ कख का. xx तपतिमधुपतिं मधुपृषा मधुपतिं
गघ का. देवास्त्वं सर्वं पृश्छाम्यहुताद x तकति। मु. पृश्छाम्यहुतादश्चतकति।
मा. देवास्त्वा . . . . . . . . . । म. देवांस्त्वेत्यतो मन्त्रो नष्टः।

को ऽन्तरिक्षात् परि पश्यतीदं यस्मादग्र इन्द्रियं संबभूव।
महत् स कस्मादभयं बिभाय कस्ययुक्तस्यास्यास्रक्वाल्लोहितं
परापतत्तत् क्वेह ॥४॥

इत्थमेके प्र व्रजन्तीत्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चो
ऽभि ⁺व्रजन्त्येके।
तेषां सर्वेषामिह सङ्गतिः साकं स एको भूतश्चरति
प्रजानन्॥५॥

---

४ क का. * अन्तरिक्षात् प्रतिपश्चतैदे ; म. नष्टोऽयं पादः।
गघ का. * सद . . . . . . . . . विभाहि कस्येकुतस्यान्धास्रक्वालोहितं
परापतत . . ।
मा. . . . . . . . . . . . . . युक्तस्याश्रक्वाल्लो . . . . . . . . .
॥ म. . . . स्यास्याश्रक्वा . . . ॥
५ कख का. . . . . . . . . . . . . व्रजन्तीइत्थमेके * प्रत्यञ्चोदञ्च प्राञ्चोभि
वृञ्जत्येके.
उ. . . . . . . . . . . . दक्षिणा * * * * व्रजंत्येके।
घ का. * * भूतिश्चरति * ।
द्र. ४ गघ चतुर्थ पादस्य प्रथमो भागः न स्पष्टः। < कः स्वयुक्तस्यास्याः . .
. ?
मा. 'विभाय' 'लोहितं' इत्यत्र पादविभागः।
५ मा. -'न्तीत्थमे' इत्यत्र 'उदञ्चः' इत्यत्र च पादविभागः।
म. पादविभागः न कृतः।

## १३.६

मरीचिरासीत् सा मनसः समभवत्।
सा प्रावीयत सा गर्भमधत्त।
स गर्भो [ऽ]वर्धत स वृद्धो ऽब्रवीज्जाया इति।
तस्यै प्रजापतिरजुहोत् स्वधिष्ठाना चेति स्वधिचरणा चेति।
प्रजापते स्वसुर्ज्यो कपाले वि जिहीथां मामासन्तात्तं
महान्तं लोकमभिपश्यमाने।
सोऽजायत तस्य जातस्य द्यावापृथिवी पार्श्वे आस्तां
समुद्रौ कुक्षी सूर्याचन्द्रमसावक्षी विराट् शिरः।
तस्माज्जातात् सर्वे पाप्मानो विजन्ते सर्वे अस्मात् पाप्मानो
विजन्ते य एवं वेद।।१।।

इति द्वितीयोऽनुवाकः

।। षोडशर्चस्त्रयोदशः काण्डः समाप्तः।।

---

१ का. मरीचरासीत् . . . . . . . . . . . . . . z z * प्रावीत * गर्भमाधत्ता z * * वर्धतु * * व्रवीज्ञायायति z * प्रजापतिर्जुहो * देति स्वधिचरणाद्येति z प्रजापति समृजो * * जिहातान् मासांमत्त्वापतिं माहन्तं . . . . भिपत्यमाने।
सोजात्र * * * पार्श्वयस्तां समुद्रो * . . . . . . . वक्षौ
* छिरः तस्माज्ञातास् * * विजयन्ते य * * z z zz
इत्यथर्वणिकपैप्पलादय साखायां त्रयोदशाष् काण्डस् समाप्तः zz zz
मा. पञ्चमवाक्ये 'ममासन्तात्तं * . . . . . . . . ।
षष्ठवाक्ये ' * * . . . . . . . . . विराट *।'
सप्तमवाक्ये ' . . . . . . सर्वे पाप्मनो विजन्तेत्
* * पाप्मनो * * * * ।।१।।६।।ऋ।।अ२।।
षोडशर्चकाण्डः।।'
म. षष्ठवाक्ये '* * * * * * * समुद्री . . . . . . . ।'
अन्ते '।।ऋ।।अ२।। षोडशर्चकाण्डः।।।।'

# चतुर्दशः काण्डः

१४.१

एन्द्रो बाहुभ्यामभरश्चिकित्वानपो देवीर्वरुणाय प्रजानन्।
तमादित्या अभ्यषिञ्चन्त सर्वे राजानमुग्रं बृहते रणाय
ता न आपो राजसूया अवन्तु।।१।।

२-५
पै.१.२५.१-४
हिरण्यवर्णाः शुचयः पावका यासु जातः
कश्यपो यास्विन्द्रः।
या अग्निं गर्भं दधिरे सुवर्णास्ता न . . .।।२।।

यासां राजा वरुणो याति मध्ये सत्यानृते
अवपश्यञ्जनानाम्।
या अग्निं गर्भं दधिरे सुवर्णास्ता न . . .।।३।।

यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे
बहुधा भवन्ति।
या अग्निं गर्भं दधिरे सुवर्णास्ता न . . .।।४।।

---

१ कख का. ओँ इन्द्रो बाहुभ्यांमभिरिश्चिकित्वानापो देवीवरुणाय *.
मा. श्रीकृष्णः शरणं ।।०।। ओँ एन्द्रो . . . . . . .।
म. ओँ एन्द्रो . . . . . श्चिकित्वान(←म)शो . . . . . . . . .।
गघ का. * * भ्यषिच्यन्तु . . . . . . . . रणाय।
मा. * अभ्यषिञ्चन्तु . . . . . . . . .
ङ का. * नापो * वसन्तु ।

२-५ का. हिरण्यवर्ण्णा इति चतस्रः ऋ ४ पठेत्;
उ. हिरण्यवर्ण्णा इति चतस्रः।

प्र. २-५ पाठाः पै. १.२५. काण्डिकाया लब्धाः। पाठभेदेभ्यस्तत्रैवानुसन्धेयम्। चतुर्थे पादे 'राजसूया अवन्तु' इत्यूहश्चिन्त्यः। प्रथमकाण्डे शंस्योनाभवन्त्विति।

शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप
स्पृशत त्वचं मे।
घृतश्चुतः शुचयो याः पावकास्ता न . . . ।।५।।

काठ.१५.६ अपो देवीर्मधुमतीरगृह्णतोर्जस्वती राजसूया मयोभुवः।
याभिर्मित्रावरुणावभ्यषिञ्चन् ता [न * * *]।।६।।

वरुणेन प्रेषिता यन्ति शुभ्रा उत्सं देवीर्दधते
या [+]हिरण्ययम्।
या ब्रह्मणा पुनते संविदानास्ता [न * * *]।।७।।

क-ग
शौ.४.२७.४ क-ग अपः समुद्राद्दिवमुद्वहन्ति दिवस्पृथिवीभभि याः सृजन्ति।
याभिरीशाना मरुतश्चरन्ति ता [* * * *]।।८।।

या अमृतं बिभ्रति या मधु प्रियं या अगृभ्णन्[+]
ऋषयो देवसख्ये।
याभिरिन्द्रमत्यनयन्नरातीस्ता [* * * *]।।९।।

---

६ कख का. * . . . मतीर्गृभूर्वाजस्वती राजसूर्या *
मा. आपो देवीर्मधुमतीरगृह्णन्नोतार्जस्वती * मयोभूवः।
गघ का. . . . . . णावभ्यषिच्यन् ता।
उ. ता इत्यत ऊह्यम्। एवं २.६ इति यावत्।

७ कख का. वरुणोनेन * यंतु शुभ्राः * . . . . . . . आ हिरण्यं;
मा. * * * * उछ . . . . . हिरण्ययन्।
म. * * * * उछन् . . . . . . हिरण्ययन्।
गघ का. * व्रह्मणा प्रुते . . . . . . .।
उ. * * * सम्विदानास्ताः।।

८ का. अपस् समुद्रादिवमुद्वहन्ति . . . . . . . . . . . या *।
याद्भिरीशाना . . . . . . ता।

९ कख का. * मृतं तिभ्रतं * * * * गृभ्णं * *;
मा. * * * * * * * गृह्णन् * * ।
म. * * * * * * * अगृभ्र(←ह्ण)न् * * ।
गघ का. याभिरिन्द्रमभ्रनयरातीस्ताः ;

या जीवधन्या धनमुतूपृणन्ति देवायते दाशुषे मर्त्याय।
यासां पयो अक्षितमक्षितानां ता
[न आपो राजसूया अवन्तु]।।१०।।

१४.२

हिरण्यौपशा ध्वजनीः पुनाना याः
समुद्रमभ्यर्चन्ति धेनवः।
याः पर्जन्यो वहत्यन्तरिक्षे ता
[न आपो राजसूया अवन्तु]।।१।।

रथन्तरे बृहति गीयमाने क्षत्रं जिन्वन्ति प्र तिरन्त्यायुः।
याभिस्त्रयान् वाजिनो वाजयन्ति ता [* * * *]।।२।।

याभिः सह वृत्रहा सोममिन्द्रो वसोरीशानो
अपिबत् सुतस्य।
याः सप्त ऋषयः कवयः पुनन्ति ता [* * * *]।।३।।

---

१० कख का. * जीवयन्या धनर्धतुप्राणयन्ति * दाशुशे मर्त्याया ।
गघ का. * * अक्षतमक्षतानां * ।
मा. * * अक्षितमक्षितानान्ता।।

१४.२.१ का. हिरण्युपाशा ध्वजनियष् *.
मा. हिरण्यौपाशा * *.
ग का. यष् * . . . . . . ।
मा. * पर्यन्यो वृहत्यन्तरिक्षे;
म. * * वृहत्यन्तरिक्षे ;

२ कख का. * वृहद * क्षत्त्रं * * तिरन्त आयुः ;
मा. * * * क्षेत्रं * * तिरंत्यायुः।
म. * * * क्ष(←क्षे)त्रं * * . . . . . . ।
गघ का. याभिस्त्रियान् * वाजयन्त्वि तः z
मा. याभिस्त्रियान् * * ताः।।

३ ख का. . . . . . . . पिवत् *।

सप्त ऋषयो भरतमभ्यषिञ्चन्नास्मिन् राष्ट्रमदधुर्दक्षिणावत्।
प्रजायै मनुमसुमवन्त देवास्ता [* * * *]। ।४। ।

याभिर्यज्ञं प्राञ्चमुक्षयन्ति* धीरा याभिः
सोमं मधुपृचं पुनन्ति।
याभिरिदं जीवति विश्वमेजत्ता [* * * *]। ।५। ।

यासां स्तोका मधुमया वभूवुर्घृतं संज्ञानं मधु पिन्वते याः।
याः सोम आपः प्रणयन्ति ब्रह्मणा ता [* * * *]। ।६। ।

यासां पदोराज्यं वाजिनं तु सोमस्य प्रसवमनु याः पवन्ते।
अन्तर्वतीस्तरुणवत्सा घृताचीस्ता न आपो
राजसूया अवन्तु। ।७। ।

अजीजनन्त मतयः स्वर्विद आ ब्रह्मणा सूक्तधेयान्यगुः।
असूषुत राजसूयाः पयांसि प्रासावीद् देवः
सविता भुवनानि विश्वा। ।८। ।

---

४ का. * * भरथमभ्य . . . . . . राष्ट्रमद्भिर्दक्षिणावत् प्रजाइमंससुमन्त . . . z

५ कख का. . . . . . प्राञ्चमुखंच * * सोम * *।
मा. . . . . . . प्राञ्चमुक्ष्यन्ति देवा * * * *।
म. . . . . . . . प्राञ्चमुक्ष्यन्ति * * * * *।

६ ख का. . . . . . . . . . पिंते *; मुम्ब . . . . . . . पिवते याः;
उ. . . . . . . . . . . . विन्वतेजाः।
गघ का. यास् सोमापः पणयन्तु व्रह्मणास्थाः z

७ कख का. * पदोराराज्यंवाजिनंच . . . पवन्ती ; उ. . . वाजिनन्तु . . . ।
गघ का. . . . . . . स्तृणवत्सा . . . . नपो * वन्तु z

८ का. अजीजनंतमुत्तयस् स्वर्विदा व्रह्मणा सूयेयान्यगुः।
असूक्त * * प्रसावैकेव * * * z

सोमो राजा भवो राजा पशुपतिः पशूनां वरुणो धृतव्रतः।
ये राजसूये असूयन्त देवास्ते ते क्षत्रं दधत्वायुरोजः।।९।।

काठ.३६.१. आस्थादुदस्थादजनिष्ट विप्रो मृधो व्यास्थदशसीत बाहू।
आरे +अवाधिष्ट निर्ऋतिं पराचैः
समपृक्त रश्मिभिः सूर्यश्च।।१०।।

१४.३

(नीलरुद्रोपनिषद्)

नी.उ.१.१-६,
२.१,२ कख अपश्यं त्वावरोहन्तं दिवितः पृथिवीमिव।
अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम्।।१।।

दिव उग्रो [ऽ]वारुक्षत् प्रत्यष्ठाद् भूम्यामधि।
जनासः पश्यतेमं नीलग्रीवं विलोहितम्।।२।।

एष ऐत्यवीरहा रुद्रो जलाषभेषजी।
वि ते क्षेपमनीनशद्वातीकारो व्येतु ते।।३।।

---

९ गघ का. येयन्ति देवास्ते * * दत्त्वायोरोजः z

१० का. अ. . . . ञजिनिष्टरिप्रो * व्यास्थरशशीतबहू। * वाधिष्ठ निर्ऋतिष् * समवृक्त रश्मिभिस् सूर्यस्य zz
उ. * अवादिष्ट . . . . . . . . . . . . . . . ।।२।।ऋ१०।।

१४.३.१ कख का. अपश्यन् . . . दिवतष् . . .। म. . . पृथिवीमव।
गघ उ. . . नीळग्रीवं *।।

२ कख का. * रुउग्रो * प्रत्युष्टमद् . . . . .
उ. * * वारुक्षः * . . . . . . . .।
गघ का. जनामः पश्यतेसं * *।
उ. . . . . . . . नीळग्रीवं *।।

३ कख का. एषैतवीरहा * *.
मा. * . . . . . . . जलासभेषजी।
गघ का. विक्षेपमनीनशदा वाचीकारो * *।

नमस्ते भव भामाय नमस्ते भव मन्यवे।
नमस्ते अस्तु बाहुभ्यामुतो त इषवे नमः।।४।।

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे।
शिवां गिरिश तां कृणु मा हिंसीः पुरुषान् मम।।५।।

शिवेन वचसा त्वा गिरिशाच्छा+ वदामसि।
यथा नः सर्वमिज्जगदयक्ष्मं सुमनो असत्।।६।।

या त इषुः शिवतमा शिवं बभूव ते धनुः।
शिवा शरव्या या तव तया नो मृड जीवसे।।७।।

या ते रुद्र शिवा तनूरघोरापापकाशिनी।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकश।।८।।

---

४ का. . . . भवतामाय। नमस्त * *।
नमस्ते बाहुभ्यामुतो * इषव * z

५ कख का. यामुखं गिरिशंत हस्तेर्बिभर्ष्यस्तवे; उ. . . . . . विभरिष्यस्तवे।
गघ का. * * * * * * पुरुषंनमः z
उ. * गिरिश्रुतां * * * * *।।

६ कख का. * * * कृशछाश्छा *। अत्रारभ्य १४.४.३ख मन्त्रं यावत् सस्वरपाठः।
उ. * * * गिरिशाछा *।
गघ का. यथ नस् . . . . . . . . . . हसत्.

७ गघ का. निवा * * * * * मृळ * z

८ कख का. * * * * . . . . . . पापकाश्चिनी * . . . . शंतमया गिरिशंत्वाभि चाकषा।

असौ यस्ताम्रो अरुण उत +बभ्रुर्विलोहितः।
ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो
[ऽ]वैषां हेड ईमहे।।९।।

अदृशं त्वावरोहन्तं नीलग्रीवं विलोहितम्।
उत त्वा गोपा अदृशन्नुत त्वोदहार्यः।
उतो त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः।।१०।।

१४.४

(नीलरुद्रोप.)

नी.उ.२.२.गघ–ङकखनमो[ऽ]स्तु नीलशिखण्डाय सहस्राक्षाय वाजिने।
अथो ये अस्य सत्वानस्तेभ्यो [ऽ]हमकरं नमः।।१।।

नमांसि त आयुधायानातताय धृष्णवे।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने।।२।।

---

९ कख का. * यास्ताम्रवर्ण उत बभ्रुः विलोहितः।
मा. . . . . . . . . . . वभृर्विलोहितः।
म. . . . . . . . . . . . . वभ्रूर्विलोहितः।
घङ का. * शृतस् * . . . हेळ * z
उ. * * * वैशां * *।।
१० कख का. अदृश्यं * विरोहितं नीलग्रवं *।
उ. * . . . . . . नीळग्रीवं *।
गघ का. * द्रा * दृशंउत त्वोदहार्याः;
मा. * * * अदृशंनुत . . . . . .।
ङच का. * द्रा * * * * * * z
मा. उत * * * * * * *।।३।।ऋ१०।।
१४.४.१ क मा. * * नीळशिखण्डाय; म. * अस्तु नीळशिखण्डाय.
गघ का. * * स्य . . . . . . . . . . . . . . . . z
म. . . . . . . . . . . . . . . हमकरन् *।।
२ ग म. उभाभ्यामकरन् *.

प्र मुञ्च धन्वनस्पर्युभयोरात्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ।।३।।

अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः शम्भुरा चर ।।४।।

विज्यं धनुः शिखण्डिनो विशल्यो वाणवाँ उत ।
+अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः ।।५।।

परि ते धन्वनो हेतिरस्मान् +वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मिन्नि धेहि तम् ।।६।।

या ते हेतिर्मिढुष्टम हस्ते बभूव ते धनुः ।
तया त्वं विश्वतो अस्मानयक्ष्मया परि भुज ।।७।।

---

३ कख का. * * धन्वनम्परि उभायोरात्योर्ज्यं ।
घ उ. * * * वपः ।।
४ का. अवतिभ्य . . . . सहस्राक्षश् शतेषुते ।
विशर्य * * * * शम्भुरावरः z
ग मा. * * मुख.
५ कख का. विज्यन्देनुश् * * वानवां * ।
उ. * * * * वाणवाङ् * ।
गघ का. अन्येशन्यस्य इषवश् * स्य निषंशती ।
मा. अनेषंनस्ये (←श्ये) शिवः * * * ।।
म. अनेंषंनस्येषवः * * * ।।
६ कख का. * * धन्विनो हेतियस्माद्रुनक्तु *
उ. * * * . . . . . . वृणक्त * ।
गघ का. * * येषुधिस्तवआरे स्मिन्वि * * z
मा. * * इषुहस्तवारे . . . . . . . . . ।।
७ कख का. * * हेतिहतिन्मधुष्टम । * * * * * * * स्मानयक्ष्मया * भुजाः
zz zz इत्यथर्वणिकपैप्पलदयश् शाखायां चतुर्दशस्यार्धः zz

१४.५

सुपार्श्वा कामदुघा न आगञ्छतौदना
पयसा पिन्वमाना।
ऊर्जं दुहाना अनपस्फुरन्ती यजमानस्य
प्रतिरन्त्यायुः। ।१। ।

गृभ्णामि मेध्यामुशतीं स्वस्तय ऊर्जस्वतीमनमीवां स्वाध्याम्।
विश्वो लोको मम देवेष्वस्तु शतौदनां
श्रद्दधानः पचामि। ।२। ।

बधान देवीमभि धेहि भुञ्जतीं शतौदनां कामदुघा ह्येषा।
मैनां हिंसीरश्मना जहृषाणो [ऽ]प्येतु +देवाँ
अति +गच्छति द्विषः। ।३। ।

आ रभस्व ब्रह्मणा वैश्वदेवीं शतौदनां शतपाप्मानो अस्याः।
समर्पयन्नश्मना पर्वतेन स्वर्गं लोकमधि रोहयैनम्। ।४। ।

---

१ कख का. * * नागां शतौदना * *।
मा. * कामधुघा * आगं * * *।
म. * कामधुघा * * * * *।
गघ का. * दुहा नपस्फुरंती * पतिरन्त आयुःz
२ कख का. * वेद्यामुशतीं यं स्वस्तयमूर्जस्वतीमनसीवां साध्यं।
मा. * मेधामुसतीं * . . . . . . . . . . . .।
ग का. * लोकं * . . . . . .;
घ का. नास्त्ययं पादः।
३ क का. नास्त्ययमपि पादः।
ख का. शतोदनां * . .। उ. * कामधुघा ज्येषा।
गघ का. नैनां हिंसीरश्विना जर्हिषाणो अप्येतु देवां अपि गश्छत * z
उ. . . . . . . देवाङ् * गछति *। ।
४ का. * * ग्राह्मणा वैश्वदेव्यं * शतमाचमानो स्य।
समपैयंरश्मिना पर्वतेनः * . . . रोहएनम् z
ग मा. समर्पयंनश्मना *; द्र. ४घ < रोहयैनाम् ?

धृष्णुह्येनां विकृता विकृन्तन्नपघ्नंश्चर्मेरया सं सृजैनाम्।
विराजो दुहितेरया समक्ता कामंकामं
यजमानाय दुहाम्।।५।।

यथापरु विशसन्नाति मंस्थाः कृणुष्वामेनावधेयान् पृथक्।
अगन् देवान् मानुषी या पुराभूच्छतौदना
पुरुरूपा सुवर्णा।।६।।

+द्विपाद् द्विहस्तः पुरुषो महदमो वनस्पतिं
बिभर्ति सायकाग्रम्।
तेन परूंषि प्रविद्वानघ्न्यायाः शतौदनां
देवीं शतधा व्यस्य।।७।।

एतं ब्रध्नं चर्मणः कृन्त साधु तमु प्रमाय शतधा व्यस्य।
+समुत्सृजन्नवधानानि सर्वा रायस्पोषं
यजमानाय धेहि।।८।।

---

५ का. . . . . . . . ह्येनां विश्वता निकृन्तमपघ्नोश्चरुमेरया * सृजीनां
* . . . . .। ससत् * * * z
क उ. घृष्णज्येनान् * *;

६ का. यथापरि विषसंमाति मंस्था . . . . . . नामधेयां *।
अघं देवा * * पराभूश्छतौदना * सपर्णा z
गघ मा. * धेवान् * * पुराभूछतौदना * *।। उ. . . . मानुषीर्या . .
.।।

७ क का. द्विषा * * महानवोन; उ. द्विपात् * * * ;
ग का. * * प्रविद्वानग्रायां; मा. * परुंषि * * ;

८ कख का. यतं व्रध्नं चर्मणि कृन्त माधत्त। मप्रमाय * * z
उ. * व्रद्धं * * * . . . . . . . . .।
गघ का. . . . . . . . . . . . न्नविधानामि सर्वां . . . . . . . . . . .z
मा. समुत्सजन्नवधान्नानि . . . . . . . . . . . . . . . . .।।
म. समुत्सजन्नवधानानि . . . ।।

ऋचा कुम्भीमध्यग्नौ श्रयामि भूम्यां त्वा भूमिमधि धारयामि।
अपो मांसं बिभ्रती मा व्यथिष्ठा मा त्वा वधिषुर्मेनिभिः
पिशाचाः।।९।।

५.१३.६ ऊर्ध्व प्रेहि मा सं विकृथा व्यस्य रजो अन्तरम्।
रक्षांसि सर्वा तीर्त्वाथा रोह दिवं त्वम्।।१०।।

१४.६

दिवं प्रेहि शतौदने सहस्रस्यायनं भव।
अयुतं प्रयुतं भवाक्षितिर्भवता(त्) त्वं
स्वर्गं लोकमा रुहः।।१।।

शतौदनां शतधा भक्षयन्ति शतं रोहान् रोहति यो ददाति।
वामदेव्यं नौधसमस्याः पक्षौ तृतीये नाके
अधि विष्टपि श्रिता।।२।।

---

९ कख का. ऋच . . . . . . . . . . भूम्यां भूत्वा भूमिंमधि *।
म. * कुम्भीमध्यगौ * * * . . . . . . .।
गघ का. आपो * * * * * * विदिषुभिर्मेनभिष् पिशाचा z
मा. . . . . . . . . . . . . वधिषूर्मेनिभिः *।।
१० कख का. ऊर्ध्वा * सा प व्यक्ता . . . . . . . अन्तरिक्षं।
मा. उर्द्ध्व * मां . . . ।।
गघ का * * तीन्त्वा यथा * * * z द्र. पाञ्चमिकेन मन्त्रेण समानत्व ऊर्ध्वः प्रेहीत्येकेत्युच्येत। पर्यन्तं पाठादूर्ध्वेति विसर्गाभावो विशेष इति रक्षणीयः ?
१४.६.१ का. . . . . शतोदने . . . . . . .।
* * भवाक्षतुर्भवतात्तमां स्वर्गलोकमा रुहा z
२ का. * * * शतो रोहां रोहसि * दधाति। . . . तिष्ठति श्रुताः z
ग मा. * सौध . . . ,

शतौदनां शतधा कल्पमाना शतं रूपाणि कृणुते स्वर्यती।
सा नो देवी सुहवा शर्म +यच्छत्वथो मृडातीदृशे।।३।।

शतौदना द्वादशाहेन संमिता शतं पृष्ठानि ससृजे स्वर्यती।
सर्वान् यज्ञान् परियती परस्तात् सा दातारं
रायस्पोषे दधातु।।४।।

अभि प्रेहि शतौदन ईजानान्+ सोमसत्वनः।
यज्ञांस्त्वं सर्वानापूत्वा+ कामप्रस्यायनं भव।।५।।

अभि प्रेहि शतौदने यज्ञेनायज्वनस्तर।
घ पै.१६.१३६.६ख आ देवयूनरूरुहो+ यत्रादस्त्रिदिवं दिवः।।६।।

इरापदी प्रथमा शतौदना सत्यं ह मध्यममृतं शिरस्तव।
उभे देवी रोदसी आ पृणासि।।७।।

---

३ कख का. * * कल्पमानां * * कृणुती . . .
गघ का. * * देवीस् * शर्म यश्छत्तथो मूडातईदृशे zz
उ. . . . . . . . . . . यछत्वथो . . . . . . ।।

४ कख का. * * * । * दृष्ट्यानि समृजे *
गघ का. सर्वाण् यज्ञानि प्ररयती . . . . . ददाति z
मा. * यज्ञान . . . . . . . ।।

५ कख का. * * शतौदनेजानां *
मा. * * * इजानान् * ।
गघ का. यज्ञस्त्वं सर्वानोपूत्वा कामष्प्राच्यायनं भव z
उ. . . . . . . सर्वानापूता . . . . . . . . . ।।

६ कख का. * * शतौधने यज्ञेनायज्वनिस्तव।
गघ का. या देवयोनिरोर्हो . . . . . . . . . . . . z
उ. * देवयुनरुरुहो . . . . . . . . . . ।।

७ का. इडापतीष्प्रथमाश् शतौद(→दे)वाः * हि . . . . . . . . ।
* देवि रोधसी या पृणामी z

ऋतं ह श्रोणी उत सक्थ्यौ तवौजो ह बाहू
उत तद्बलाय कम्।
+अनुष्ठु जठरमादु पार्श्वे +सर्वाँल्लँ लोकां
छतौदना समाप।।८।।

चक्षुष्मती प्रथमा शतौदना सूर्यो ह चक्षुरुत चन्द्रमास्तव।
विश्वैर्देवैर्ऋतुभिः संविदाना सा दातारं
तृप्त्या तर्पयासि।।९।।

शतं पयांसि शतमस्या वत्साः शतधा पक्वां
वि भजन्त्येनाम्।
सप्त लोका दिव्यार्पिता ये तां जिगेथ
प्रथमा शतौदने।।१०।।

---

८ कख का. ऋचं श्रोण्यौत्सक्तौ तन्वौजो * * * उद्बलाय *.
मा. * * स्रोणी * * तवौयो * * * द्बलाय *.
म. * * * * * तवौयो . . . . . . . . ।
गघ का. अनिष्ठ जठरमानि * सर्वा * शतौदना समापः z
मा. अनुष्ठु . . . . . र्श्वे सर्वाल्लोकां . . . . . ।। ६।।ऋ१०।।
म. अनुष्ठु . . . . . . सर्वाल्लोकां . . . . . . ।।

९-१० मा. इमौ मन्त्रौ न स्तः।

९ कख का. चक्षुष्मतीष् * * * * . . . . . चन्द्रमस्तव।
गघ का. विश्वेर्देवैर्ऋतुभिश् च नद्धास् * * * तर्पयामि z
म. . . . . . . . सम्विदाना * * * *।।

१० कख का. * * . . . . . . . . पक्वाणि . . . . . . ।
म. * * सतमस्या . . . . . . ।
गघ का. * * दिव्यान्पिता ए तां जिगेत प्रथमाश् * z

१४.७

सहस्रेण शतमाना यदेषि लोकां जिगेथ
प्रथमा शतौदने।
सर्ववेदसमुत वाजपेयं सर्वाल्ँ लोकां
छतौदना समाप। ।१। ।

इन्द्रः पपात प्रथमः शतौदनां सप्तऋषिभ्यः
सुमनस्यमानः।
तयासुराणां बलमोज आ ददे तया रुरोह
विष्टपो देवलोकान्। ।२। ।

विश्वामित्रो ऽयं जमदग्निरत्रिर्भरद्वाजो
गोतमो[ऽ]यं वसिष्ठः।
इदं पक्वं कश्यपसप्तमाः प्राश्नन्तु प्रथमाः
शतौदनाम्। ।३। ।

---

१ क मा. शहस्रेण . . . . . ;
गघ का. . . . दसमितु * सर्वां * शतौदनां समापः z
मा. सर्वंवेदषुत * सर्वा लोभं . . . . . . . . . . । ।
म. . . . . . . . . . . . . सर्वाल्लोकां . . . . . . . । ।

२ कख का. इन्द्र प्रपाथ प्रथमाश् शतौदनास् * *
मा. * पापा * * * * ।
गघ का. भया . . . आ दधे भया * * देवलोकां z
मा. . . . सूराणां . . . . . . . . . . . . . . . . . । ।

३ कख का. विश्वामिच्चोयं . . . . . रच्चिर्भरद्वाजो गौतमोयं * ।
मा. * * यमदग्निरत्रिर्भ . . . . . . . वशिष्ठः ।
म. * यं . . . . . . . . . . . . . वशिष्ठः ।
गघ का. * * कश्यपसूसप्तमाः * * शतौदनाः ;
मा. * * * * प्रथमा * । ।

ज्योतिष्मती प्रथमा शतौदना त्रीणि ज्योतींषि
कृणुते स्वर्यती।
तां दातार उपजीवन्ति यत्र तत्र देवैः
सधमादं मदन्ति।।४।।

छन्दःपक्षा बृहती शतौदना त्रीणि +च्छन्दांसि ससृजे स्वर्यती।
ऋतूनामधिराजं संवत्सरं पतिमस्या विन्दन्।।५।।

अतिक्रम्याग्निष्टोममतिरात्रं शतौदने।
यज्ञांस्त्वं सर्वानापूत्वा चित्यमग्निं व्यश्नुहि।।६।।

अश्वमेध्यमतिक्रम्य द्वादशाहं शतौदने।
त्रिरात्रं +साह्नमापूत्वा वाजपेयेन कल्पते।।७।।

ये सहस्रैरीजाना अग्निहोत्रहुतश्च ये।
यज्ञैर्ये सर्वैरीजानास्तान आप्नोति शतौदना।।८।।

---

४ कख का. ज्योतिष्मतीष् प्रथमाश् शतौदनास् ****।
गघ का. * दातारमुपजीवन्ति तत्र यत्र देवः सधमानं पदंति z
मा. अ दातातार उपजीवन्ती *****।।

५ कख का. छन्दष्पक्षाद्बृहती श्रुतौदनास्त्रीणिश्छन्दांसि .......।
मा. **** छन्दांसि स्वसृजे .....।
म. **** छन्दांसि ........।
गघ का. ... पतिमस्याधिवम् z उ.... सम्वत्सरं .........।।

६ का. अभिक्रन्दस्याग्निष्टोम ............... यज्ञास्त्वं .
.. दित्यमग्निं विष्णुहि।
गघ मा. यज्ञास्त्वं ............।।

७ गघ का. * सानुमापूत्वा **।उ. * साह्नमापूत्वा वाजपेयेन् *।।

८ का. * सहस्रेरीजानाग्निहोत्रहुताश्च *।
यज्ञे ये सर्वेरीजानास्तानाप्नोति * zz

शं ते परूंषि सुभगे दधामि शं ते मांसान्यत्तथा भवन्ति।
अस्थि यत्ते शमिता शशार तत्ते त्वष्टा-
विहुतं निष्कृणोतु।।६।।

ये यज्ञेन जिता लोका या नु +च्छन्दांसि भेजिरे।
सर्वांस्ताल्ँ लोकानाप्नोति यो ददाति शतौदनाम्।।१०।।

१४.८

(शौ.१६.४६)

इषिरा योषा युवतिर्दमूना+ रात्री देवस्य सवितुर्भगस्य।
अश्वक्षता सुहवा संभृतश्रीरा पप्रौ
द्यावापृथिवी महित्वा।।१।।

अव विश्वान्यरुहद् गभीरोद्वर्षिष्ठमरुहदश्रमिष्ठा+।
उशती रात्र्यनुसानु भद्राद्वि तिष्ठते मित्र
इव स्वधाभिः।।२।।

६ कख का. * * * * ददामि * * मांसानृददा *।
मा. शन्ते परुंषि * * शन्ते मांसान्वत्तथा *।
म. शन्ते परुंषि * * शन्ते . . . . . . . . . .।
गघ का. * यस्ते * चचारत्ते * विहुजं . . . णतु।
मा. * . . . . . . . . . . शमारं . . . . . . . . . .।।

१० ख का. यानिश्छन्दांसि *; उ. यानुछन्दांसि *।
गघ का. . . स्तांल्लो . . . शतोदना z
उ. सर्वांस्ताल्लोकानाप्नोति * * * ।।७।।ऋ१०।।

१४.८.१ कख का. * यूखा युवतिर्दमूनां * * . . . . . . स्याश्वक्षरा * सम्भृतःशीरा वप्रोर्धावापृथिवी *।
मा. * * युवतिर्दमुना * * सवितुभगस्य।
म. * * युवतिर्दमुना * * . . . . . . . . . .।

२ कख का. अभि विश्वां अर्हद् . . . . . . . . . मर्हदश्रविष्ठा।
मा. . . . . . . . . गभीरोद्वरिशिष्टमरुहदश्रमिष्ट।
म. अ(प→)व . . . . . . . . . . . . . गभीरोद्वरिशिष्टमरुहदश्रमिष्टा।
गघ का. * राल्यवसान . . . . . . . . . . . . इन *.
मा. भशती . . . . . . . . . . . .।।

नर्ये वन्ये सुभगे सुजात आ चागन् रात्रि
सुमना इह स्याम्।
अस्मांस्त्रायस्व नर्याणि जाताश्व्या यानि
गव्यानि पुष्टा।।३।।
सिंहस्य रात्र्युशती पिशस्य व्याघ्रस्य
द्वीपिनो वर्च आ ददे।
अश्वस्य ब्रध्नं पुरुषस्य मायं पुरु रूपाणि
कृणुषे विभाती।।४।।
शिवां रात्रिमह्नि सूर्यं च हिमस्य माता
सुहवा नो अस्तु।
अस्य स्तोमस्य सुभगे नि बोध येन त्वा वन्दे
विश्वासु दिक्षु।।५।।
स्तोमस्य नो विभावरि रात्रि राजेव जोषसै।
असाम सर्ववीरा भवाम सर्ववेदसो
व्युच्छन्तीरनूषसः।।६।।

---

३ कख का. निर्यै वंदे * स्वजाता चाग्नि * * ह्य स्यां.
मा. * * * * * . . . . . . . . . इह्य स्यां।
गघ का. अस्मा धूयस्व निर्याणि जाताश्रिया * * पुष्या z
मा. . . . जाताश्वा . . .।।
४ कख का. * रात्रि उषती निपस्य * द्वेपनो वर्चाधे।
मा. सिहंस्य . . . . . . . . . . व्याघ्रस्य * * * *।
गघ का. * व्रध्नं * * * * कृणुषी * z
मा. * व्रध्नं * * परु * * *।।
५ कख उ. . . . सूर्यञ्च * * * * *।
का. . . . यमस्य * * * * z
गघ का. अश्व * * व तोध येरनु त्वा * विश्वासे विक्षु z५z
मं. * * * न → नि. . . . . . . . . . . . . .।।
६ ख का. . . . . . . . . . . . . मोषसी.
गघ का. यथानः * भवामः * विश्छन्तीरनूकमः z
उ. * * * * व्युत्सन्तीर . . . . . .।।

शम्या ह नाम दधिषे मम दिप्सन्ति ये धना।
रात्रीहि तानसदपाथ स्तेनो न विद्यते [ऽ]थ
रिपुर्न विद्यते।।७।।

भद्रासि रात्रि चमसो न पिष्टो विश्वं
गोरूपं युवतिर्बिभर्षि।
चक्षुष्मती मे मृषती वपूंषि प्रदित्यां दिव्यां
रुक्मां अमुक्थाः।।८।।

यो अद्य स्तेन आयत्यघायुर्मृत्यो रिपुः।
रात्री तस्य प्रतीत्य प्र ग्रीवा प्र शिरो हनत्।।९।।

प्र पादौ न यथायति प्र हस्तौ न यथाशिषत्।
यो मलिम्लरुपायति स संपिष्टो अपायति।
अपायति स्वपायति शुष्के स्थाणावपायत।।१०।।

---

७ कख का. श्रम्या * * तरुषे विपृश्छन्ती योजनां।
मा. सम्या . . . . . . . . . . . . . ।
गघ का. रात्रिहीर्चानसदपात * न्व विम्यते।
मा. . . . . . . . . . . . . . . . . . . . . रिपुर्न्र *।।
८ का. . . . रात्रिस्तपसो नुविष्टो * * युवति द्विभर्षि z
* वे युवतीवरूपः प्रत्यांदित्यां दिव्यां अरुक्मं अमुग्धः।
९ का. युम्य स्तेनायुत्वघायुमृत्यो *.
* * प्रगीयस्व * गीवा * * * z
१० कख का. * * * यताहतष् * * * यनाशिषत्।
गघ का. * मुललंसुलपायति * * तपायति।
उ. * मक्रिम्लरुपायति * * *। मलिम्लुरिति शोधः स्यात्।
ङच का. 'अपायति' इत्यतो भ्रष्टो मन्त्रः।
उ. * * षुष्के (म. शुष्के) . . . . . . ।।[३]८।।ऋ११।

१४.६

(शौ.१६.५०)

पै.६.२०.६द्र. अन्धं रात्रि तिष्ठधूममशीर्षाणमहिं कृणु।
अक्षी वृकस्य निर्जह्या स्तेनं 'द्रुपदे जहि।।१।।

ये ते रात्र्यनड्वाहस्तीक्ष्णशृङ्ग[:] स्वाशवः।
तेभिर्नो अद्य पारयाति दुर्गाणि विश्वहा।।२।।

रात्रिंरात्रिमरिष्यन्तस्तरेम तन्वा वयम्।
गम्भीरमप्लवा इव न तरेयुररातयः।।३।।

यथा शाम्याकः प्रपतन् प्रेदिवान्नानुविद्यते।
एवा रात्रि प्र पातय यो अस्माँ अभ्यघायति।।४।।

---

१ कख का. तिष्टधूममशीषाणिमहिं *.
गघ का. हनो * . . . . . . . . . त्वैनं नृपते *।
मा. * * . . . . . . . . . . . . दपदे *।
म. * * . . . . . . . . . . . . द्रुपदे *।
२ का. ए * रात्रियनड्वाहस्तीक्ष्णशृङ्ग्याश्वासवः तेभिन्नो * * * विश्वह z
३ का. . . . . . . . . . . सरिष्यन्तस्तदेम * *
गम्भीरमप्रवायुषं * तरेहुररातयः.
४ कख का. * सान्याकष् * तेदिवां . . . . . . . .।
मा. * साम्याकः . . . . . . . . . . . .।
म. * * * प्रे(ति→) दिवान्नानु *।
घ का. * * अभ्यगायती z
उ. * अस्माङ् *।।

अप स्तेनं वासोमथं गोअजमुत तस्करम्।
अथो यो अर्वतः शिरो ऽभिधाय[+] निनीषति।।५।।

यदद्य रात्रि सुभगे विभजन्त्ययो वसु।
यदेह्यस्मान् भ्राजयाथेदन्यानुपायसि।।६।।

उषसे नः परि धेहि सर्वान् रात्र्यनागसः।
उषा नो अह्न आ भजादहस्तुभ्यं विभावरि।।७।।

इति तृतीयोऽनुवाकः

।। चतुर्दशः सप्तदशर्चः काण्डः समाप्तः।।

---

५ कख का. * स्तेदं वासमथं गोथमु *।
गघ का. * * उर्वतश् * * *।
मा. * * * * ऽभ्यघाय *।।
म. . . . ऽभ्यधाय *।।

६ कख का. यदद्धि * * विभजन्तयो वसुः
गघ का. यथेघस्मानिताजय यथेदन्यानुपायति
मा. . . . . . . . . . . . . भ्राजया अथोदन्यानुपायसि।
म. यदेह्यस्मानभ्रा . . . . . . . नुपायसि (→ति)।।

७ का. * नष् * * सर्वां रात्री अनाकशः
जुषाणो अह्ना भजदहस्तुभ्यं विभावरी zzzz इत्यथर्वणिकपैप्पलादयश् शाखायां चतुर्दशष् काण्डास् समाप्तः zz zz
मा. . . . . . . . . . विभावरि।।९।।ऋ१०।।अ३।। सप्तदशर्च्च काण्डसमाप्तः।। ।।
म. . . . विभावरि।।९।।ऋ१०।।अ३।। सप्तदशर्च्चकाण्डः।।

## पञ्चदशः काण्डः

### १५.१

(तै.सं.४.४.१२)

सम्यन्दिग्भ्यः पवते सं स्वर्विन्मधोरतो माधवः
पात्वस्मान्।
अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रं
रक्षतु पात्वस्मान्। ।१। ।

रथन्तरं सामभिः पात्वस्मान् गायत्रेण
+च्छन्दसा विश्वरूपम्।
द्वादशा इष्य स्तोमो अह्नां समुद्रो
वाच इदमोजः+ पिपर्तु। ।२। ।

उग्रा दिशामभिभूतिर्वयोधाः शुचिः
शुक्रे अहन्योजस्ये।
इन्द्राधिपतिः पिपृतादतो नो मयि क्षत्रं
विश्वतो धारयेदम्। ।३। ।

---

काण्डारम्भे — का. ओँ नमो गणेशाय z ओँ नमो ज्वालाभगवत्यैः ओँ नमस्तिलोत्तमायै z ओँ अथ पञ्चदशोद्यायं लिख्यते zz zz ओँ सम्यर्दिग्भ्यष् . . . . . . . . . . . . . . ।

१ — का. ओँ सम्यर्दिग्भ्यष् * संस्तव्यंमधोरजो माधनः . . . दुष्टरीदुरिताभ्य . . . ।
उ. ओँ सम्यन्दिग्भ्यः . . . . . . ।।

ग — उ. . . . दुष्टरितु . . . ;

२ कख — का * सामभिष् . . . श्छन्दसा.
मा. * मामभि पात्यस्मान * छन्दसा * । म. . . . छन्दसा * ।

गघ — का. इछ्यस्तोमो अह्नां * वाच्य तमोजष् पिपन्तु z२z
मा. . . . . . . . अह्ना . . . . . इदमोदः * ।।
म. . . . . . . . अह्ना . . . . . . इदमोदः पिपर्त्तु। ।

३ कख — का. . . . . . . . . . . . . . वयोधाशशुचिश् * अहन्योजसे।
मा. अग्रा . . . अहन्योयस्ये। म. अग्रा . . . ।

गघ — का. . . . . . पिपृतादुते * महत् * * . . . . . . . . . . .z३z

बृहद्राष्ट्रं क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजः
शुभितमुग्रवीरम्।
इन्द्र स्तोमैः पञ्चदशेन वर्च्च इदं
वातेन सगरेण रक्षतु। ।४। ।

प्राची दिशां सहयशा यशस्वती विश्वे देवाः
प्रावृषाह्णां स्वर्वती।
इदं क्षत्रं दुष्टरमस्त्वोजो अनाधृष्टं
सहस्त्वं सहस्वत्। ।५। ।

वैरूपे सामन्यह ⁺तच्छकेयं जगत्यैनद्विक्ष्वा वेशयामि।
विश्वे देवाः सप्तदशेन वर्च्चमिदं क्षत्रं
सलिलावतमुग्रम्। ।६। ।

धर्त्री दिशां क्षत्रमिदं ⁺दाधर्तूपस्थाशानां⁺ मित्रवदस्त्वोजः।
मित्रावरुणा शरदाह्णा चिकित्नू⁺ अस्मै क्षत्राय
महि शर्म ⁺यच्छतम्। ।७। ।

---

४ कख का. बृहद्राष्ट्रं क्षत्त्रभृद्वृष्णिस् . . . . . . . सुकृतमुग्रवीरं.
मा. वृहदाष्ट्रं . . . . . . . तृष्ण्यभोजः शुभिलमुग्रविरं।
म. . . . . . . . . . तृष्ण्यभोजः . . . . . . . . ।
ग मा. * * * र्च्च.

५ कख का. * * सहदिशां सहस्वती * * प्रावृषह्णां *.
उ. * * * * * * प्रावृषाह्ना स्वस्वर्वती।
गघ का. * क्षत्त्रं दुष्टरममस्त्वोजो नाधृष्यं * सहस्वती z५z
मा. * * . . . . . . . . . . . . . . अनाधृ * सहस्वत। ।

६ कख का. * सामनिह तश्छकेयं जगत्येतु वृक्षा *।
मा. * . . . . . . . ततुसकेयं . . . . . . . ।
म. वैरूपो . . . . . . तछ्केयं . . . . . . ।
गघ का. * * * वर्च * क्षेत्त्रं . . . . . . . . . z६z

७ कख का. * * . . . . . . दधर्तु उपस्त्वाशानां . . . . .
मा. धत्री * . . . . . . . ताधतुपस्तासानां मित्रवदस्तोजः।
म. धत्री * . . . . . . . ताधतुपस्तासाना मित्रवदस्तोजः।
गघ का. . . . . . . . . . जिगर्मू * क्षत्राणि * * यश्छतम् z७z
उ. . . . . . . . . . चिकिलू * * * * यछतं। ।

वैराजे सामन्यधि मे मनीषानुष्टुभा संभृतं वीर्यं *सहः।
इदं क्षत्रं *मित्रवदार्द्रदान्वोजा* मित्रावरुणा
रक्षतमाधिपत्ये।।८।।

सम्राड् दिशां *सहसाम्नी सहस्वत्यृतुर्हेमन्तो
विष्ठया* नः पिपर्तु।
ओषजातां बृहती तु शक्वरीमं यज्ञमवतां
नो घृताची।।९।।

स्वर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची।
त्वं गोपाः पुरएतोत पश्चाद् बृहस्पते याम्यां
युङ्धि वाचम्।।१०।।

१५.२

स्तोमैकविंशे भुवनस्य पत्नि विवस्वग्वाते अभि नो गृणीहि।
१-४ तै.स.४.४.१२ घृतवती सवितराधिपत्ये पयस्वती
रन्तिराशा नो अस्तु।।१।।

---

८ ख का. . . . सम्भृतं * सः। उ. * * सह।
गघ का. * क्षत्त्रं मित्त्रवदान्वोजा मित्त्रावरुणा रक्षतुमाधिपत्ये z८z
उ. * * मित्रवदार्द्रदांनोदा . . . . . . .।।

९ कख का. * * सहसम्नी . . . . . . विष्णया नष्पिपन्तु
मा. सम्राट * सहसाम्नि . . . . . . . विष्ट्या * *।
म. सम्राट् * सहसाम्नि . . . . . . विष्ट्या * *।
गघ का. . . . यज्ञममृतान् * * z९z ।।
मा. . . . यज्ञमवता * * । । म. * * च . . . ।।
द्र. ९क तै. संहितायामपि 'सम्राट्' इति।

१० का. * * न . . . . . . युग्धि वाचं z१०z काण्डः १z

१५.२.१ कख का. . . . . . . . . . . . . . . पत्नि विश्वग्वाते * * *।
उ. स्तौमैकविंशे * * * * * *।
गघ का. * सविताधित्ये * . . . . . . . . . . . . . . . z१z
उ. . . . . . . . . . . . . . . . रन्तिरासा * *।।

ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण
सविता नो अह्ना।
रेवत् साम्नां +पङ्क्तिश्छन्दसामजातशत्रुः
स्योना नो अस्तु।।२।।
+विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना
जगतो विष्णुपत्नी।
विश्वव्यचा इषयन्ती सुहुतिः स्योना नो
अस्त्वदितेरुपस्थे।।३।।
ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो
या मनोता।
बृहस्पतिर्मातरिश्वोत वायुः सन्धाना वाता
अभि नो गृणन्तु।।४।।
तै.स.४.६.२.१　यो नः पिता जनिता यो विधर्ता यो नः
सतो अभ्या सज्जजान।
स आशिषा द्रविणमिच्छमानः+ प्रथमच्छदो+ वर
आ विवेश।।५।।

---

२ कख का. . . . . . . . . . . . . . अह्नाम्;
उ. * * रन्तिरासौषधीनां सम्वत्सरेण * * *।
गघ मा. * * पंक्तिः छन्दसामजातशत्रूः * * *।।
म. * * पंक्तिः छन्दसा . . . . . . . . * * *।।
का. * * . . . स्छन्द . . . z२z
३ कख का. विष्कम्भो * दरुणष् * यस्येशाना * *.
मा. विम्वो . . . . . . . . . . . .। म. विष्टम्वो . . . . . . . . .।
गघ का. * ऋषयन्ती सहोभिः स्योनो अस्त्व . . . . . . . . z३z
४ कख का. * * विष्णुपत्लघोरास्येशाना * * *.
उ. धृवा . . . . . . . . . . . . . . . . . . .।
गघ का. वृहस्पतिर्मरुतोस्योत * संधाना * अपि नस्कृणोतु z४z
५ ख का. * नसूस्वतो . . . ज्ञनान । मा. . . . . . . . . . सज्ञान।
गघ का. * * . . . मिश्छमानष् प्रथमसूसनो * * * z५z
मा. * आसिषा द्रविणं मिछमानः प्रथछदो * * *।।
म. * * . . . मिछमानः प्रथमछदो * * *।।

४.२.७.२ अम्या वर्तस्व पृथिवी यज्ञेन पयसा सह।
अपाम्तो अग्निरिषितो [ऽ]व रोहतु। ।६। ।

४.२.७.३ यदग्नै चन्द्रं यत् पूतं यच्छुक्रं यच्च यज्ञियम्।
तद् देवेभ्यो भरामसि। ।७। ।

४.२.७.४ इषमूर्जमहमत आदि यज्ञस्य योनौ महिषस्य धामन्।
आ नो गोषु विशस्त्वा प्रजायां जहामि
सेदिमनिराममीवाम्। ।८। ।

१५.३

(शौ.१९.४४)

आयुषो [ऽ]सि प्रतरणं विप्रं भेषजमुच्यसे।
तदाञ्जन त्वं शन्तातेसि मायोभवं कृतम्। ।१। ।

यो हरिमा जायान्यो अङ्गभेदो विसल्पकः।
सर्वं ते यक्ष्ममङ्गेभ्यो बहिर्निर्हन्त्वाञ्जनम्। ।२। ।

---

६ क का. . . . . . . . . पृथिवि(→वी) ;
गघ का. अपांसते अग्निरिषतो वि * z६z
म. अपांतो . . . . . . . . . . . . . . . । ।

७ कख का. . . . . . . . . . . यश्छुक्रं यश्च जज्ञियं;
गघ मा. तद्वेभ्यो * । ।ता। ।

८ का. इषमूर्जसाभृता * योना महिषस्व धामं।
. . . . . . . . . . . . सेधिमजराममीवां z८zका२z
घ म. . . . . . ममिवां । ।२। ।ऋ८। ।

१५.३.१ ख का. * भेजमुच्यसे।
गघ का. यदाञ्जनि प्रं शन्तातेअशिनांयोभवं * १z उ. . . . सन्तातेसि .
. . .। ।

२ कख का. * * जायांयो ङ्गभेदो विशल्यकः।
गघ का. . . . . . . . . . . . . बर्हिर्निर्हन्त्वाञ्जनं z२z
मा. सर्वन्ते . . . . . . . वहिर्निर्हंत्वाञ्जनं। ।
म. सर्वन्ते . . . . . . वहिर्निर्हंत्वाञ्जनं। ।

आञ्जनं पृथिव्यां जातं भद्रं पुरुषजीवनम्।
कृणोत्वप्रमायकं रथजूतिमनागसम्।।३।।

प्राण प्राणं त्रायस्वासो असवे मृड।
निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च।।४।।

सिन्धोर्गर्भोऽसि विद्युतां पुष्पम्।
वातः प्राणः सूर्यश्चक्षुर्दिवस्पयः।।५।।

देवाञ्जनं त्रैककुदं परि मा पाहि विश्वतः।
नं त्वा तरन्त्योषधयो बाह्याः पर्वतीया उत।।६।।

वीदं मध्यमवासृजद्रक्षोहामीवचातनः।
अमीवाः सर्वाश्चातयन्नाशयदभिभा इतः।।७।।

बह्विदं राजन् वरुणानृतमाह पुरुषः।
तस्मात् सहस्रवीर्य मुञ्च नः पर्यंहसः।।८।।

---

३ का. * * * * पुरुषाजीवनं।
कृणोतुत्प्रमाहिकं रथजूतमनाकम् z३z

४ कख का. . . . त्रायस्व असवो सवे मृळ ; मा. प्राणं . . . ।

५ कख मा. सिन्धोगर्भोसि विद्युता *।
गघ का. * प्राण . . . . . . . ;

६ कख का. देवांजनि त्रीककुद * * * *।
गघ का. * * चरन्त्योषधयो बाह्याष् पर्वत्या * z५z
उ. * * तरंत्योषधयो * * *।।

७ का. वीरं . . . . . . . तनं।
अमीव सर्वाश्चातयंनाशयतपिवाह्तिा z७z
ख म. . . . . . . . . . . . द्रक्षो (→क्ष्यो)हा . . . . . . . . ।

८ क म. विह्विदं . . . . . . .
ग मा. तस्मा *.

यदापो अघ्न्या इति वरुणेति यदूचिम।
तस्मात् सहस्रवीर्य मुञ्च नः पर्यंहसः।।९।।

मित्रश्च त्वा वरुणश्चानुप्रेयतुराञ्जन।
तौ त्वानुगत्य दूरं भोगाय पुनरोहतु।।१०।।

१५.४
(शौ.१९.४५)

ऋणादृणमिव सं नय कृत्यां कृत्याकृतो गृहम्।
चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि शृणाञ्जन।।१।।

यदस्मासु दुष्वप्न्यं यद् गोषु यच्च नो गृहे।
अमामगत्यस्त दुर्हार्दः प्रिय प्रति मुञ्चताम्।।२।।

अपामूर्ज अतसो वावृधानमग्नेर्जातमधि जातवेदसः।
चतुर्वीरं पर्वतीयं यदाञ्जनं दिशः प्रदिशः
+करदिच्छिवास्ते।।३।।

---

९ कख का. . . . . . घ्न्यायति वरुणेन . . . . .।
ग मा. तस्मा *.
१० कख का. . . . . . . . . . वरुणश्चानुप्रैदुजन।
गघ का. * त्यानकत्य * * . . . . . . . . . . z१०z काण्डः ३z
मा. . . . . . . . . . . . पुरोहतु।।३।।ऋ१०।।
१५.४.१ क उ. . . . . . . . . . . सन्नय.
गघ का. . . . . . . . . . दुर्हान्दः पृष्टीरप दृणाञ्जनम् z१z
मा. . . . . . . दुर्हादः पृष्टीरपी . . . . . . ।।
२ ख का. * * यश्च * * । म. . . . . . . दुस्वप्न्यं.
ग का. मामगत्यस्य दुर्हान्दश्; म. अपा (→मा) मगत्यस्त *.
३ क का. अपामूर्जोजसो . . . . . . . . . .
गघ का. * पर्वतं . . . . . . . . . क्रदुविश्छवास्ते z३z
उ. . . . . . . . . . . . करदित् शिवास्ते।।

चतुर्वीरं बध्यत आञ्जनं ते सर्वा दिशो अभयास्ते भवन्तु।
ध्रुवस्तिष्ठाधि सवितेव वार्य इमा विशो
अभि हरन्तु ते बलिम्।।४।।

आङ्क्ष्वैकं मणिमेकं कृणुष्व +स्नाह्येकेन पिबैकमेषाम्।
चतुर्वीरं नैर्ऋतेभ्यश्चतुर्भ्यो ग्राह्या बन्धेभ्यः
परि पात्वस्मान्।।५।।

अग्निर्माग्न्येनावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे
स्वस्तये सुभूतये स्वाहा।।६।।

इन्द्रो मेन्द्रयेणावतु प्राणायापानायायुषे वर्चस ओजसे तेजसे
स्वस्तये सुभूतये स्वाहा।।७।।

---

४ कख का * वध्यतांयजन्ते * * भयास्ते *।
मा. * वध्यते आञ्जनन्ते * * . . . . . ।
म. * * आञ्जनन्ते * * . . . . . . ।
गघ का. . . . स्तिष्ठासि . . . वारि * दिशो भ्रियन्तु * * z४z
उ. धृवस्तिष्ठाधि . . . . . . . . . वळिं।।
५ का. आक्षकं * * * श्वाशीकेन पवीकमेषां चतुर्ऋतेभ्यश्चतुर्भ्यो * *
* * * z५z
क उ. आंक्ष्वैकं * * *;
खग मा. स्वस्माज्येकेन . . . . . . । * . . तेभ्योश्चतुर्भ्यो;
ख म. स्नाज्येकेन . . . . . . . ।
६ का. अग्निर्मा अग्निनावतु . . . . . . . . . वर्चसे * * * * *z६z
म. अग्निर्माध्येनावतु . . . . . . . . . . ।।
७ का. * मा इन्द्रेणावतु . . . . . . . . . . प्रभूतये * z७z
उ. इन्द्रो मेन्द्र्येणावतु।।
द्र. 'सुमूतये' इति पाठः उ. हस्तलेखयोर्ना नास्ति। तथापि ऊहनियमेन स एव पाठः ग्राह्य इति प्रतीयते एवम् ८,९ मन्त्रयोरपि। वै. तु. का.।

